# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः ।

श्रीमद्विजयिनीदेवीपाठशालादयोदितः ।
प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः ।
प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान्

# THE PANDIT

A MONTHLY PUBLICATION
OF THE
BENARES COLLEGE,
DEVOTED TO

## SANSKRIT LITERATURE.

**NEW SERIES.**

Nos. 1-3] Jan.-Mar. 1911. VOL. XXXIII.



BENARES:
PRINTED AND PUBLISHED BY ALOPI PRASAD FOR
E. J. LAZARUS & CO., AT THE MEDICAL HALL PRESS,
BENARES CANT.

दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भाव इति पुंवद्भावः । उत्तरपदस्य स्त्रीगोर्नीच इति प्रादेशः । अन्तरालदिशः स्त्रीत्वात् पुनष्टाप् । अनेकमित्यनुवर्त्तनात् न्यक्संज्ञायां द्वयोः पर्यायेण पूर्वनिपातः । एवं दक्षिणपरा । उत्तरपरा । उत्तरपूर्वा । प्रसिद्धानां दिक्छब्दानां ग्रहणादिह न भवति । वारुण्याश्च कौबेर्याश्च दिशोरन्तरालम् ॥

## तत्रेदमिति सरूपे ॥ ८८ ॥

तत्रेति ईबन्ते द्वे सरूपे इदमित्येतस्मिन्नर्थे वसो भवति । इतिकरणात् ग्रहणविशिष्टे युद्धे विवक्षा । केशेषु केशेषु च गृहीत्वा इदं युद्धं वृत्तं केशाकेशि । कचाकचि । त्रइजिति इच् सान्त इजिति तिष्ठग्वादौ हसंज्ञार्थं पठ्यते । अन्यस्यापि इति पूर्वपदस्य दोत्वम् । अत्र सापेक्षत्वात् पूर्वेण वृत्तिर्न प्राप्नोति । सरूपे इति किम् । केशेषु च कचेषु च गृहीत्वा इदं युद्धं वृत्तम् ।

## तेन ॥ ८९ ॥

इदमिति सरूपे इति वर्तते । तेनेति भान्ते सरूपे इदमित्येतस्मिन्नर्थे वसो भवति । इतिकरणानुवृत्तेर्यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तं दण्डादण्डि । मुसलामुसलि । सरूपे इत्येव । दण्डैश्च कमण्डलुभिश्च प्रहृत्येदं युद्धं वृत्तम् । योगविभाग उत्तरार्थः ॥

## सहेति तुल्ययोगे ॥ ९० ॥

समस्यते वसो भवति । सह छात्रेण सच्छात्र आगतः । सशिष्यः । सपुत्रः । वा नीच इति सहशब्दस्य सादेसः । तुल्ययोग इति किम् । प्रत्यहं सह शावेन भारं वहति रासभी । विद्यमानताऽत्र सहार्थः । आद्येनैव सिद्धे हसनिवृत्त्यर्थं कबभावार्थं च वचनम् । इतिशब्दो योगविभागार्थः । तेनातुल्ययोगेऽपि क्वचिद्वसः कश्च । तेन सकर्मकाच्चरेर्द्दा भवति । सपक्षको वादी ब्रूत इत्यादि सिद्धम् । अत्र हि चरेरेव देन योगो न कर्मणः । तथा वादिन एव च तेन योगो न पक्षस्य ॥

## चार्थे द्वन्द्वः ॥ ९१ ॥

चकृतोऽर्थश्चार्थः । तस्मिन् वर्तमानमनेकं सुबन्तं द्वन्द्वसंज्ञः सो भवति । चत्वारश्चार्थाः । समुच्चयोऽन्वाचय इतरेतरयोगः समाहारश्चेति । तत्रानियतक्रमयौगपद्यानां द्व्यादिवस्तूनामेकत्राध्यारोपः समुच्चयः । यथा गामश्वं पुरुषं पशुमहरहर्नयमानो वैवश्वतो न तृप्यति । सुरया इव दुर्मदी । गुणप्रधानभावमात्रविशिष्टः समुच्चय एवान्वाचयः । यथा भिक्षामट गां चानयेति । इतरेतरयोगसमाहारावपि समुच्चयस्य भेदौ । परस्परं सापेक्षाणामवयवभेदानुगत इतरेतरयोगः । अनपेक्षिता अवयवभेदाः संहतिप्रधानाः समाहाराः । आद्ययोश्चमन्तरेणापि क्वचित् प्रयोगात् । असा-[illegible]स्मिन् सविधिः । इतरेतरयोगे । प्लक्षन्यग्रोधौ छायां [illegible]ते प्लक्षन्यग्रोधं सिध्यति । वाक्त्वचम् । [illegible]द्वाविंशतिस्त्रयस्त्रिंशद्गुणि-

दिति नपुंसकत्वाभावः । द्वन्द्वप्रदेशा द्वन्द्वाचुदहषोरार्थ इत्येवमादयः ॥

**वोक्तं न्यक् ॥ ९२ ॥**

सलक्षणसूत्रेषु वानिर्दिष्टं न्यक्संज्ञं भवति । तस्य प्रयोजनं पूर्वमित्यनेन पूर्वनिपातः । अधिस्त्रि । अधिकुमारि । भीति वोक्तम् । कष्टश्रितः । इचिति वोक्तम् । शङ्कुलाखण्डः । भेति वोक्तम् । एवं सर्वत्र बोद्धव्यम् । वसेऽनेकं सुबन्तं तस्य पूर्वनिपातानियममुत्तरत्र वक्ष्यति । इह राज्ञः पुरुषं श्रित इति यत् प्रति यदप्रधानं तत् प्रति तन्न्यक्संज्ञं भवति । कथमयं विभागो लभ्यते । न्यगितीयमन्वर्थसंज्ञा । नीचैरञ्चतीति न्यगप्रधानमित्यर्थः ॥

**एकविभक्ति ॥ ९३ ॥**

विभक्तिशब्दः पूर्वाचार्यैष्टो निर्दिष्टः एका विभक्तिर्यस्य तन्न्यक्संज्ञं भवति । निष्कौशाम्बिः । निर्मथुरः । परमित्यनेन परनिपातार्थमेतत् । प्रादेशस्तु श्रीगोर्नीव इत्यत्र अन्वर्थस्य नीचः समाश्रयणात् सिद्धः ॥

**परं ॥ ९४ ॥**

एकविभक्ति न्यक्संज्ञं परं प्रयोक्तव्यम् । पूर्वमित्यनेन पूर्वनिपाते प्राप्ते ऽपवादः । इह धर्मं श्रितः । धर्मश्रितः इत्येवमादिषु वोक्तमित्यनेनैव न्यक्संज्ञा भवत्यनवकाशत्वात्ततस्तदाश्रयः पूर्वनिपातः ॥

**राजदन्तादौ ॥ ९५ ॥**

राजदन्तादिषु न्यक् परं प्रयोक्तव्यम् । उत्तरसूत्रैः प्राप्तस्य पूर्वनिपातस्यापवादोऽयम् । दन्तानां राजा राज-

दन्तः। वनस्याग्रे अग्रेवणम्। गणपाठादनुष्। लिप्तवासितं नग्नमुषितमवक्लिन्नपक्वं सिक्तसम्मृष्टं भृष्टलुञ्चितमर्पितोप्तं उप्तगाढमेतेषु पूर्वकालस्य परनिपातः। उलूखलमुसलं तन्दुलकिण्वम्। आरग्वायनिबन्धकी। चित्ररथबाह्लीकम्। अवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अद्यु व्यत्ययोऽपि। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। वैयाकरणमतम्। भोजवाजौ। गोपालधानीपूलासम्। पूलासकरण्डम्। उशीरबीजम्। सिञ्जास्थम्। शिक्षास्त्रौ। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रुः। शिरोबिन्दु। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ॥

## पूर्वम्॥ ९६॥

न्यगिति वर्तते। न्यक्संज्ञं पूर्वं प्रयोक्तव्यम्। वाक्यवद् वृत्तावनियमो मा भूदित्यारम्भः। उक्तान्युदाहरणानि। यत्र द्वे अपि तान्ते राज्ञः पुरुषस्येति तत्र कस्य न्यक्त्वं न्यगित्यन्वर्थसंज्ञाश्रयणाद्राजशब्दस्य॥

## द्वन्द्वे सुः॥ ९७॥

द्वन्द्वे से स्वन्तं पूर्वं प्रयोक्तव्यम्। मुनिगुप्तौ। पटुगुप्तौ। अनेकप्राप्तावनियमेन मुनिपटुगुप्ताः। पटुमुनिगुप्ताः। पटुगुप्तमुनयः। न्यगित्यन्वर्थसंज्ञा। द्वन्द्वे च न कस्यचिद्प्राधान्यमित्यप्राप्ते पूर्वनिपात इदं सूत्रम्॥

## अजाद्यत्॥ ९८॥

अजादि अदन्तं शब्दरूपं द्वन्द्वे से पूर्वं प्रयोक्तव्यम् । इन्द्रचन्द्रौ । उष्ट्रखरम् । उष्ट्रशशम् । इह इन्द्राग्नी । इन्द्रवायू इति सुलक्षणात् परत्वादनेन पूर्वनिपातः । उभयत्र वायोः प्रतिषेध इति आनङ् न भवति । बहुष्वनियमेन इभरथाश्वम् । अश्वरथेभम् । तपरकरणं किम् । वृक्षाश्वौ । अश्ववृक्षौ ।

## अल्पाच्तरम् ॥ ९९ ॥

अल्पाच्तरं शब्दरूपं द्वन्द्वे पूर्वं प्रयोक्तव्यम् । धवखदिरौ । धवाश्वकर्णम् । बहुष्वनियमः । वीणादुन्दुभिशङ्खाः । शङ्खदुन्दुभिवीणाः । ऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येण वक्तव्यम् । शिशिरवसन्तौ । हेमन्तशिशिरवसन्ताः । अश्विनीभरण्यः । कृत्तिकारोहिण्यः । समानाक्षराणामिति किम् । ग्रीष्मवसन्तौ । द्व्यक्षरस्य पूर्वनिपातो वक्तव्यः । कुशकाशम् । तृणकाष्ठम् । वर्णानामानुपूर्व्येण । ब्राह्मणक्षत्रियविट्शूद्राः । भ्रातुश्च ज्यायसः । युधिष्ठिरार्जुनौ । संख्याया अल्पीयसो वाचिकायाः । द्वित्राः । एकादश । नवतिशतम् । अभ्यर्हितस्य च । मातापितरौ । श्रद्धामेधे । दीक्षातपसी ।

## ईब्विशेषणे वे ॥ १०० ॥

ईबन्तं विशेषणं च वसे पूर्वं प्रयोक्तव्यम् । वसे अनेकं सुबन्तं न्यक्संज्ञमित्यनियमे प्राप्ते ऽयमारम्भः । कण्ठेकालः । उरसिलोमा । उदरेमणिः । वहेगडुः । अकामेमूर्द्धमस्तकात् स्वाङ्गादित्यनुप् । चित्रगुः । लम्बकर्णः । सर्वनामसंख्ययोः पूर्वनिपातो वक्तव्यः । सर्वश्वेतमस्य

सर्वश्वेतः । सर्वगौरः । द्विशुक्लः । द्विकृष्णः । सर्वनामसंख्ययोः परस्परं वृत्तिः । वाक्ये संख्यायाः परत्वात् पूर्वनिपातः । द्व्यन्यः । अन्यः । वा प्रियस्य । प्रियदधिः । दधिप्रियः । कथं गडुकण्ठः । गडुशिराः । आहिताग्न्यादिषु द्रष्टव्यः ।

## तः ॥ १ ॥

तान्तं वसे पूर्वं प्रयोक्तव्यम् । कृतकटः । भिक्षितभिक्षः । अवमुक्तोऽपानत्कः । तान्तस्य विशेषणत्वेनाविवक्षितत्वात् पूर्वेण न सिध्यति । कथं क्वचिज्जातिकालसुखादिभ्यश्च तान्तस्य परप्रयोगः । सारङ्गजग्धी । पलाण्डुभक्षिती । कालात् । मासजाता । संवत्सरजाता । सुखादिभ्यश्च । सुखं जातं यस्याः सुखजाता । दुःखजाता । वाऽहिताग्न्यादिषु व्यवस्थयेदं भविष्यति । प्रहरणार्थेभ्यः परे वेपौ वक्तव्ये । उद्यतोऽसिरनेन असयुद्यतः । असिः पाणावस्य असिपाणिः । दण्डपाणिः । कथमुद्यतगदः । उद्यतासिः । इदमपि वेति सिंहावलोकनात् ॥

## वाऽहिताग्न्यादौ ॥ २ ॥

आहिताग्न्यादिषु वसे तान्तं वा पूर्वं प्रयोक्तव्यम् । आहिताग्निः । अग्न्याहितः । एवं जातपुत्रः । जातदन्तः । जातश्मश्रुः । तैलपीतः । घृतपीतः । मद्यपीतः । ऊढभार्यः अर्थगतः । आकृतिगणोऽयम् । तेनेष्टयो न वक्तव्याः ॥

## ये कडाराः ॥ ३ ॥

ये कडारादयो वा पूर्वं प्रयोक्तव्याः । कडारश्च स भद्रश्च स कडारभद्रः । भद्रकडारः । विशेषणस्य वोक्तं न्यक्

पूर्वनिपातः प्राप्तो विभाष्यते। कडार गडुल कूट काण खञ्ज कुण्ट खोड खलति गौर वृद्ध भिक्षुक पिङ्गल तनु नट बधिर।

## उत्तरपदं द्यु ॥ ४ ॥

से यदुत्तरपदं तद्युसंज्ञं भवति। पञ्चगवधनः। द्यौ परतः हृदर्थे द्युसमाहार इति पूर्वस्य संज्ञायां टः सान्तः सिद्धः। एवं द्वे अहनो जातस्य द्व्यन्हजातः। कालामेयैरिति समुदायस्य षसंज्ञा द्यौ परतः पूर्वस्यापि षसंज्ञायां टः सान्तः

इत्यभयनन्दिविरचितायां जैनेन्द्रव्याकरणमहावृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

## अनुक्ते ॥ १ ॥

अनुक्तमित्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्याम अनुक्त इत्येवं तद्वेदितव्यम्। स्वार्थद्रव्यलिङ्गानि त्रिको मृदर्थ इति अस्मिन् दर्शने स्वार्थिकाष्टाबादयः संख्याकर्मादयो विभक्त्यर्थाः। एवं च कर्मणीवित्येवमादीनां साधने स्वार्थ इत्येतस्य च गुणप्रधानभावेनैक्यता। स्वार्थैकत्वादिविशिष्टेषु कर्मादिष्वनुक्तेष्विबादयो भवन्ति। अथवा अनुक्तकर्माद्याश्रयेष्वेकत्वादिष्विबादयो भवन्ति। इह परिसंख्यानमिति केचित्। मिङ्कृद्वृत्सैरनुक्ते कर्मादाविति। वक्ष्यति कर्मणीप्। कटं करोति। ओदनं भुङ्क्ते। अनुक्त इति किम्। क्रियते कटः। मिङोक्तं कर्म। कृतः कटः। कृतोक्तं कर्म। आह्निको देवदत्तः। आह्नं भुक्तमनेन इति वः। हृतोक्तः कर्ता। शतेन क्रीतः। शतादस्वार्थेसेठयाविति यः। हृतोक्तं करण-

मिति । कर्तरि करणे च भा न भवति । प्राप्तमुदकं यं ग्रामं स प्राप्तोदको ग्रामः । सेन कर्मोक्तम् । मिङ्कृत्तसैरिति परिसंख्यानं किम् । कटं करोति भीष्ममुदारं दर्शनीयम् । अत्र कटशब्दादुत्पद्यमानया इपा उक्ते कर्मणि भीष्मादिभ्य इप् न स्यात् । तदेतत्परिगणनमयुक्तम् । कटोऽपि कर्म भीष्मादयोऽपि न ह्यसौ कटमात्रे सन्तोषं करोतीत्यनेकं कर्म गृह्यते । समुदायस्य चामूर्तत्वात् प्रत्यवयवाद्विभक्त्युत्पत्तिः । इह आसने आस्ते शयने शेते इति अन्यो ह्यधिकरणप्रत्ययः सामान्येन युटाऽभिहितो अन्यश्च विशेषरूपेण विभक्त्योच्यते इति न दोषः ॥

## कर्मणीप् ॥ २ ॥

कर्मणि कारके अनुक्ते इब् विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति । आदित्यं पश्यति । अविशेषेण ङाम्मृदः स्वादयो वक्ष्यन्ते । तन्नियमोऽयं कर्मादिष्वेव इवादयो भवन्ति । इवादयो नियताः । कर्मादयस्त्वनियताः । तेषु तापि प्राप्नोति । तत इदमुच्यते ता शेष इति शेषे ता भवति नोक्ते कर्मादौ ॥

## अन्तरान्तरेण योगे ॥ ३ ॥

प्रतिपदोक्तत्वादिहान्तरान्तरेणशब्दौ निसंज्ञौ ताभ्यां योगे इब्विभक्तिर्भवति । अन्तरा गन्धमादनं माल्यवन्तञ्चान्तरा कुरवः । कुरुविशेषणत्वेन तायां प्राप्तायामिब्विधीयते । कुरुशब्दार्थे वर्तमानात् मृदर्थातिरेकाभावात् इम्न भवति । अन्तराशब्दो मध्यमाधेयप्रधानं ब्रूते । अन्तरेणशब्दः तच्च विनार्थं च । अन्तरेण सौमनसं विद्युत्प्रभञ्च

देवकुरवः । मोक्षमन्तरेण नात्यन्तिकं सुखम् । निसंज्ञ-योर्ग्रहणादिह न भवति । अन्तरायां पुरि वसति । किं ते धात्रवाणां सालङ्कायनां चान्तरेण गतेन । योग इति किम् । अन्तरा तक्षसिलाञ्च पाटलिपुत्रञ्च स्रुघ्नस्य प्राकारः । ननु पदविधिरयं अन्तराशब्दे सामर्थ्यात् स्रुघ्नशब्दा-दिन्न भविष्यति योगग्रहणमनर्थकम् । क्वचिदन्यैरपि योगे यथा स्यादित्येवमर्थम् । अभितःपरितःसमयानिकषाहा-प्रतियोगेषूपसंख्यानम् । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । हृणीष्व भद्रे प्रतिभाति चेत्त्वं बुभुक्षितं न प्रतिभाति किञ्चित् । उभसर्वतसोः कार्यो धिगुपर्यादिषु त्रिषु । कृतद्वित्वेष्विपा योगस्ततोऽन्यत्रापि दृश्यते । उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्देवदत्तम् । उपर्यादिष्विति सूत्रोपलक्षणम् । सामीप्ये ऽधोध्युपरीति द्वित्वे कृते त्रयाणां ग्रहणम् । अधोऽधो ग्रामम् । उपर्युपरि ग्रामम् अध्यधि ग्रामम् । अन्य-त्राऽपि दृश्यते । विना धर्मं कुतः सुखम् । अपिशब्दान्न च दृश्यते । हा तात हा पुत्र वत्सल ॥

## कालाध्वन्यविच्छेदे ॥ ४ ॥

अविच्छेदो ऽत्यन्तसंयोगः । द्रव्यगुणक्रियाभिः कार्त्स्न्येन कालाध्वनोः संबन्ध इत्यर्थः । कालाध्वनोरवि-च्छेदे वर्तमानयोः सतोरिब् भवति । अन्यस्याश्रुतत्वात् कालाध्ववाचिभ्यामेव । अधिकरणविवक्षायामीपि प्रा-प्तायां तदविवक्षायां संबन्धलक्षणायां तायां प्राप्तायामयं विधिः । कालस्य द्रव्येण योगे । मासं गुडापूपाः । संवत्सरं क्षीरोदनम् । गुणेन शरदं मथुरा रमणीया ।

मासं कल्याणी काञ्ची । क्रियया । मासमधीते । संवत्सरमधीते । अध्वनो द्रव्येण योगे । क्रोशं सिकताः । योजनं वनराजिः । गुणेन । क्रोशं कुटिला नदी । योजनं दीर्घः पर्वतः । क्रियया । क्रोशमधीते । योजनमधीते । अविच्छेद इति किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥

## सिद्धौ भा ॥ ५ ॥

अविच्छेद इति वर्तते । सिद्धिः क्रियाफलनिष्पत्तिः । अविच्छेदे यौ कालाध्वानौ तद्वाचिभ्यां भा भवति सिद्धौ गम्यमानायाम् । मासेन प्राभृतमधीतम् । योजनेन प्राभृतमधीतम् । सिद्धाविति किम् । मासमधीतं प्राभृतं न चानेनावधारितम् । नात्र क्रियाफलनिष्पत्तिरस्ति पूर्वेण इवेव भवति ॥

## क्रियामध्ये केपौ ॥ ६ ॥

कालाध्वनीति वर्तते । क्रिययोर्मध्ये यौ कालाध्वानौ ताभ्यां केपौ विभक्त्यौ भवतः। अद्य भुक्त्वा मुनिर्द्व्यहाद्भोक्ता द्व्यहे भोक्ता। इहस्थोऽयमिष्वासः क्रोशे विध्यति लक्ष्यम् । चापाच्छरस्य निर्गमनं धानुष्कावस्थानं वा एका क्रिया द्वितीया व्यधनक्रिया तयोर्मध्ये क्रोशशब्दात्ता प्राप्ता ॥

## सु पूजायां न गिति ॥ ७ ॥

सुशब्दः पूजायामर्थे गिसंज्ञस्तिसंज्ञश्च न भवति । सुस्थितं भवता । सुसिक्तं भवता । गिसंज्ञाश्रयं षत्वं न भवति । तिसंज्ञाप्रतिषेधे यद्यपि तिसंज्ञाश्रयः सविधिर्न भवति । तथापि प्रादिलक्षणो भविष्यति । स्वती पूजाया-

मिति वचनात् । सुषिच्य गतः । तस्मादुत्तरार्थं तिसंज्ञाप्रतिषेधवचनम् । पूजायामिति किम् । सुषिक्तं किं तवाऽत्र ॥

अतिक्रमे चातिः ॥ ८ ॥

अतिक्रम आधिक्यम् । अतिक्रमे पूजायाञ्चातिशब्दो गितिसंज्ञो न भवति । अतिसिक्तमेव भवता । अतिस्तुतमेव भवता । गितिसंज्ञाश्रयः प्रादिलक्षणश्च सविधिर्न भवति । अतिसिच्यैव गतः । पूजायां । अतिसिक्तमतिस्तुतं भवता । स्वती पूजायामिति प्रादिलक्षणः सविधिः । अतिसिच्य गतः । पर्यास्तवाक्सेत्क इत्यत्र तिग्रहणमुपलक्षणं प्रादिसेऽपि प्यादेशः ॥

पदार्थसंभावनानुज्ञागर्हासमुच्चयेऽपिः ॥ ९ ॥

अप्रयुज्यमानस्य पदस्यार्थः । संभावनं सामर्थ्याविष्करणम् । अनुज्ञा अभ्युपगमः । गर्हा निन्दा । एकत्रानेकस्य नियोजनं समुच्चयः । एतेष्वर्थेष्वपिर्गितिसंज्ञो न भवति । पदार्थे । सर्पिषोऽपि स्यात् । पयसोऽपि स्यात् । विन्दुः स्तोकं मात्रा चेत्यस्यार्थेऽपिशब्दः । संबन्धे षता । संभावने । अपि सिञ्चेन्मूलकसहस्रम् । अपि स्तुयाद्राजानम् । अनुज्ञायाम् । अपि सिञ्च । अपि स्तुहि । अतिसर्गे लोट् । गर्हायां धिग् ब्राह्मणमपि सिञ्चेत्पलाण्डुम् । अपि स्तुयाद्वृषलम् । अनवक्लृप्त्यमर्षयोरिति लिङ् । समुच्चयेऽपि । सिञ्च अपि स्तुहि । सिञ्च च स्तुहि चेत्यर्थः । गिसंज्ञाश्रयं षत्वादिकार्यं न भवति ॥

अधिपरी अनर्थकौ ॥ १० ॥

अनर्थकावनर्थान्तरवाचिनौ अधिपरि इत्येतौ अन

र्थकौ गितिसंज्ञौ न भवतः। कुतोऽध्यागतः। कुतः पर्यागतः। गितिसंज्ञाश्रयं सविधानं न भवति। प्रागधोस्त इति प्रयोगनियमश्च न भवति । इह च पर्यानद्धमिति णत्वं भवति ॥

## वीप्सेत्थम्भूतलक्षणेऽभिनेप् ॥ ११ ॥

न गितिरिति वर्तत्त योग इति च। वीप्सा इत्थम्भूत लक्षणा इत्येतेष्वर्थेषु अभिना योगे इब्विभक्तो भवति गितिसंज्ञाप्रतिषेधश्च। वीप्सायाम्। वृक्षं वृक्षमभिसिञ्चति। इत्थम्भूते। साधुर्देवदत्तो मातरमभिस्थितः। इत्थम्भावोऽभिना गम्यते। लक्षणे। वृक्षमभिसिञ्चति। वृक्षमभिविद्योतते। गितिसंज्ञाप्रतिषेधात् षत्वं प्रागधोस्त इति नियमश्च न भवति ॥

## भागे चानुप्रतिपरिणा ॥ १२ ॥

भागे अर्थे वीप्सेत्थम्भूतलक्षणेषु च अनु प्रति परि इत्येतैर्योगे इब् भवति गितिसंज्ञाप्रतिषेधश्च। भागोऽत्रांशः। यदत्र मामनुस्यात् मां प्रति स्यात् मां परि स्यात् तद्दीयताम्। वीप्सायाम्। वृक्षं वृक्षम्। अनुसिञ्चति प्रतिसिञ्चति परिसिञ्चन्ति। इत्थम्भूते। साधुर्देवदत्तः मातरमनुस्थितः। मातरं प्रति मातरं परि। लक्षणे। वृक्षमनुसिञ्चति प्रतिसिञ्चति। परिसिञ्चति। वृक्षं प्रति विद्योतते। एतेष्विति किम्। ओदनं परिषिञ्चति। अनुप्रतिपरिणेति किम्। यदत्र मामभिष्यात्। अभेर्भागे गितिसंज्ञा भवत्येव सगित्वात् सत्वात् सकर्मकत्वं कर्मणीप् षत्वं च भवति।

## हेतावनुना ॥ १३ ॥

हेतावर्थे अनुना योगे इब्विभक्तिर्भवति गितिसंज्ञाप्रतिषेधश्च । जिनस्य ज्ञानोत्पत्तिमन्वागमन्सुराः । सुराणामागमनस्य जिनज्ञानोत्पत्तिर्हेतुः। एवं शान्तिचरितपट्टकप्रसारणमनु प्रावर्षत् पर्जन्यः । यद्यऽपि इत्थम्भूते लक्षणे वार्थेऽनुना योगे सिद्धैवेप् तथापि येननाप्राप्तन्यायेन शेषलक्षणायास्तायाः सोऽपवादः । हेत्वर्थे तु परत्वाद्भा प्रसज्येत तद्बाधनार्थमिदम् ॥

भार्थे ॥ १४ ॥

भार्थः सहशब्दस्यार्थः । भार्थेऽनुना योगे इब् भवति गितिसंज्ञाप्रतिषेधश्च । नदीमनु वसिता सेना । नदीमनु वसिता नगरी । नद्या सह सम्बद्धेत्यर्थः। एवं पर्वतमनु वसिता सेना ॥

हीने ॥ १५ ॥

अनुनेति वर्तते । हीनार्थे द्योत्ये अनुना योगे इब् भवति गितिसंज्ञाप्रतिषेधश्च । उत्कृष्टापेक्षया हीनो भवतीति सामर्थ्यादुत्कृष्टादिप्। अनु शालिभद्रमाढ्याः । अनु समन्तभद्रं तार्किकाः ॥

उपेन ॥ १६ ॥

हीनार्थे उपेन योगे इब् भवति न गितिसंज्ञा च । उपसिंहनन्दिनं कवयः । उप सिद्धसेनं वैयाकरणाः ॥

ईबधिके ॥ १७ ॥

ईब्विभक्तो भवति अधिकार्थे द्योत्ये उपेन योगे । उप खार्यां द्रोणः । उप निष्के कार्षापणम् । यस्मादधिकं शब्दार्थातिरेकात्तत ईप् ॥

## ईश्वरे ऽधिना ॥ १८ ॥

ईश्वरशब्द ईश्वरेशितव्यसंबन्धमुपलक्षयति । ईश्वरे द्योत्ये अधिना योगे ईब्विभक्ती भवति न गितिसंज्ञा च । उत्तरसूत्राद्धेति विभाषावलोकते । तत ईश्वरादीशितव्याच्च पर्यायेणेप् । अधि मेधेश्वरे कुरुवः । अधि कुरुषु मेधेश्वरः । इह विभक्त्यर्थे हसः कस्मान्न भवति विभक्तिशब्देन तत्र कारकं गृह्यते । ईश्वरेशितव्यसंबन्धश्चात्र न तु कारकम् ॥

## वा कृञ्यधिः ॥ १९ ॥

ईश्वर इति वर्तते । अधिशब्दः करोतौ वा गितिसंज्ञो भवति । तमधिकृत्य तमधिकृत्वा । ईश्वरं कृत्वेत्यर्थः । अत्र कर्मणीप् । पुनरधिग्रहणं गितिसंज्ञाप्रतिषेधार्थमेव नत्वीवर्थम् ॥

## का ऽङा मर्यादावचने ॥ २० ॥

काविभक्ती भवति आङा योगे मर्यादावचने गितिसंज्ञाप्रतिषेधश्च । आ पाटलिपुत्रात् वृष्टो देवः । आ मथुरायाः । मर्यादायामिति सिद्धे वचनग्रहणमभिविधिसंग्रहार्थम् । आ कुमारेभ्यो यशः समन्तभद्रस्य । मर्यादावचन इति किम् । ईषदर्थे क्रियायोगे च मा भूत् । आकडारः । आबद्धमाभरणम् ॥

## वर्जने ऽपपरिभ्याम् ॥ २१ ॥

विवक्षितेनासंबन्धो वर्जनम् । वर्जनेऽर्थे अप परि इत्येताभ्यां योगे काविभक्ती भवति गितिसंज्ञाप्रतिषेधश्च । अप त्रिगर्तेभ्यो वृष्टो देवः । परेर्वर्जन इति वा

छित्वम् । परि परि त्रिगर्तेभ्यः । वर्जन इति किम् । ओदनं परिषिञ्चति ॥

## यतः प्रतिदाप्रतिनिधी प्रतिना ॥ २२ ॥

प्रतिदानं प्रतिदा प्रतिनिधीयत इति प्रतिनिधिः मुख्यस्य सदृशः । प्रतिना योगे यतः प्रतिदा यतश्च प्रतिनिधिस्ततः काविभक्ती भवति न गितिसंज्ञा च । प्रतिदायाम् । माषानस्मै तिलेभ्यः प्रतियच्छति । तिलान् गृहीत्वा माषान् ददातीत्यर्थः । एवं सर्पिषोऽस्मै तैलं प्रतिसिञ्चति । सर्पिषोऽस्मै तैलं प्रतिसिक्त्वा व्रजति । प्रतिनिधौ अर्ककीर्तिर्भरततः प्रति । अभयकुमारः श्रेणिकतः प्रति । प्रतियोगे काद्यास्तसिरिति तसिः ॥

## संप्रदानेऽप् ॥ २३ ॥

संप्रदाने कारके अब्विभक्ती भवति । त्रिपृष्ठाय स्वयं प्रभामदात् । क्रिययाऽपि कर्मभूतया यदाप्यते तदाऽपि संप्रदानमुक्तम् । देवदत्ताय रोचते । पत्ये शेते । स्वभ्यो वर्षति । भिक्षुकेभ्यो वर्षति । तदर्थेन सविधिवचनं ज्ञापकं तादर्थ्ये अब् भवतीति । रथाय दारु । रन्धनाय स्थाली । अवहननायोलूखलम् ॥

## ध्वर्थवाचः कर्मणि स्थानिनः ॥ २४ ॥

ध्वर्थः क्रिया । ध्वर्थो वागस्य स ध्वर्थवाक् । तस्य स्थानिनोऽप्रयुज्यमानस्य धोः कर्मणि कारके अब्विभक्ती भवति । यत्र यस्यार्थः प्रयोगमन्तरेण प्रतीयते स तत्र स्थानी । एधेभ्यो व्रजति । अत्र आहर्तुमित्येतत्तुमन्तं पदं स्थानि । तदेव च ध्वर्थवाक् । कर्मणीपोऽपवादोऽयम् ।

तादर्थ्येन सिद्धमिति चेत् स्थानिनो यथा स्यात् प्रयुज्यमानस्य मा भूत् इत्येवमर्थमिदम् । ध्वर्थवाच इति किम् । प्रविश पिण्डीम् । प्रविश तर्पणम् । अस्त्यत्र भक्षय सिध्वेति च स्थानी न तु ध्वर्थवाक् । कर्मणीति किम् । एधेभ्यो व्रजति शकटेन । स्थानिन इति किम् । एधानाहर्तुं व्रजति ॥

## तुमर्थाद्भावे ॥ २५ ॥

तुमा समानार्थस्तुमर्थः । तुमर्थो भावे वर्तमानो यस्त्यः तदन्तान्मृद अप् भवति । वुरातुमौ क्रियायां तदर्थायामिति वर्तमाने भावे भाववाचिन इति वक्ष्यति तेषां घञादीनामिह ग्रहणम् । पाकाय व्रजति । मतये व्रजति । पुष्टये व्रजति । अत्र तदर्थायां क्रियायां तस्य विधानात् । तादर्थ्यं तेनैवोक्तमिति तादर्थ्ये अप् न प्राप्नोति । तुमर्थादिति किम् । पाकः । त्यागः । भाव इति किम् । कारको व्रजति ॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगे ॥ २६ ॥

नमस स्वस्ति स्वाहा स्वधा अलं वषट् इत्येतैर्योगे अविभक्ती भवति । नमो देवेभ्यः । स्वस्ति प्रजाभ्यः । आशीर्विवक्षायां कुशलार्थैर्योगे तापौ प्राप्ते ताभ्यां पूर्वनिर्णयेनायमेव नित्यो विधिः । स्वस्त्यस्तु गोभ्यः । स्वस्ति प्रजाभ्यो भूयात् । स्वाहा इन्द्राय । स्वाहा अग्नये । स्वधा पितृभ्यः । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थानां ग्रहणम् । तस्मै प्रभवतीति निर्देशात् । प्रभुर्मल्लो मल्लाय । समर्थो मल्लो मल्लाय । अन्यत्रापि कस्मान्न भवतीति । कन्यामलङ्कुरुते । अलं रोदनेन । वाग्विभक्तेः कार-

तु सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते पुनः संस्कारं कुर्यादिति । शातातपोऽपि ।

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनः ।
उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥
उपनायं पुनः कुर्यात्तप्तकृच्छ्रञ्चरेन्मुहुः ।

पैठीनसिः । कव्युष्ट्रीमानुषीक्षीरभोजने तप्तकृच्छ्रः पुनरुपनयनमिति । आदिपुराणे ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
विना यात्रां तु यो गच्छेत्पुनः संस्कारमर्हति ।
सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम् ।
एतान् देशान् द्विजो गत्वा पुनः संस्कारमर्हति ॥
हिमवत्कौशिकीं विन्ध्यां पारं पद्मस्य पश्चिमम् ।
तीर्थयात्रां विना गच्छेत्पुनः संस्कारमर्हति ॥
कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति ॥

बौधायनः ।

सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ।
रासभं महिषं मेषं बलीवर्दं क्रमेलकम् ।
आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति ॥
मधुं विना चोपनीतः पुनः संस्कारमर्हति ।

हारीतोऽपि ।

शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा ।
पुनः संस्कारमर्हन्ति ।
अज्ञाः छिन्दन्ति ये केचित् द्विजातीनां शिखां नराः ।
चरेयुस्ते दुरात्मानः प्राजापत्यं विशुद्धये ॥
इति । पुनःसंस्कारोऽत्र पुनरुपनयनं वक्ष्यमाणाजिनादिपर्युदा-

स्यान्यत्रासम्भवात् । स च समाख्याबलादेव कर्मविशेषेण पूर्वसंस्कारनाशे पुनःसंस्काराधायको न तु शोधकः । शुद्धेः प्रायश्चित्तसाध्यत्वात् । अत एव प्रायश्चितान्ते पुनःसंस्कारं कुर्यादित्यादिविधिवाक्येषु द्वयोरपि स्वस्वकार्यप्रतिपादनमुखेनैव समाख्याभ्यां क्रमेणानुष्ठानप्रतिपादनं युक्तम् यत्तु यमेन ।

अमुरामद्यपाने च कृते गोभक्षणेऽपि वा ।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुध्यति ॥
इति । मौञ्जीहोमस्य शोधकत्वमुक्तम् ।

तन्मौञ्जीहोमादुत्तरकालानुष्ठेयकर्माधिकाराभिप्रायेण, न तु दोषनिवृत्यभिप्रायेण । तस्मात्पुनरुपनयनं पुनःसंस्काराधायकं न तु प्रकृतदोषनिवर्तकमिति स्थितम् । यत्र तु जातकर्मादीत्यादिविशेषः स्मर्यते तत्र तदादीनां सर्वेषामेवानुष्ठानम् । यथा

जीवन्यदि समागच्छेत् घृतकुंभे निमज्य तम् ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥

चिरप्रोषितस्य जीवद्वार्त्तानाकर्णने कृतप्रेतक्रियस्य पुनरागमनेऽयं विधिः । तथा प्रव्रज्यादिप्रत्यावृत्तस्यापि प्रायश्चितावरणानन्तरं जातकर्मादीति । संस्कारमाह वृद्धपराशरः ।

जातकर्मादिभिः सर्वैः संस्कृतैः शुद्धिमाप्नुयात् ॥
इति । यद्यपि सर्वैरित्यविशेषोपादाने संन्यासिनोपि विवाहादि प्रसज्येतेत्यर्थान्तरापातः । तथा च जातकर्मादीत्यादिशब्देनापि तत्पर्यन्तानामेवोपसंग्रहः ।

पुनरुपनयननाम्ना सर्वधर्मातिदेशप्राप्तावपवादमाह ।

**अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च ॥**
**निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ ३ ॥**

अजिनं कृष्णाजिनादि मेखला मौञ्ज्यादि दण्डः पलाशादि भैक्ष्यचर्या सायंप्रातर्विहिता व्रतानि सौम्यप्राजापत्यादीनि मधुमांसाञ्जनादि-

वर्जनानि वा, द्विजातीनां त्रैवर्णिकानां पुनः संस्कारकर्माणि निवर्तन्ते चकारादुपनादीन्यपि । तथा चाश्वलायनः । अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं च निरुक्तं परिदानं कालस्य च तत्सवितुर्वृणीमह इति सावित्रीमिति । तत्र विशेषमाह कश्यपः चीर्णप्रायश्चित्तः प्राच्या-मुदीच्यां वा दिशि गत्वायत्र पश्वादीनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनः संस्कारमर्हन्तीति ।

इदानीं प्रसंगात्पूर्वोक्तामेध्यादिभक्षणे प्रायश्चित्ते गुणान्तरमाह ।

**विण्मूत्रस्य च शुध्यर्थं प्राजापत्यं समाचरेत् ॥**
**पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥४॥**

विण्मूत्रमित्यमेध्यमात्रोपलक्षणं तद्भक्षणे पूर्वोक्तं प्राजापत्यकृच्छ्रं चरेत्पञ्चगव्यं च पूर्वोक्तप्रकारेण कृत्वा तेन स्नात्वा तदेव पीत्वा शुचि-र्भवेत् ।

अथ विहितमरणे सङ्कल्पाविवृत्तौ प्रायश्चित्तमाक्षिपति ।

**जलाग्निपतने चैव प्रव्रज्यानाशकेषु च ॥**
**व्रत्यावसितवर्णानां कथं शुद्धिर्विधीयते ॥ ५ ॥**

जलं जलप्रवेशोऽग्निप्रवेशः पतनं भृगुपातः तेषांसमाहारस्तस्मिन् प्रव्रज्या संन्यासः अनाशकमनशनं बहुवचनान्महाप्रस्थानं गृह्यते । तेषु व्रत्या गृहीतव्रताः कृतसंकल्पा इति यावत् । ते च ते अवसिताश्च प्रत्यावृत्ता इति यावत्, तादृशानां वर्णानां कथं शुद्धिर्विधीयतइति प्रश्नार्थः । यद्यपि त्रिविधमपि जलादिमरणं सम्भवति विहितं प्रतिषिद्धमभ्यनुज्ञातं चेति, तथाप्यत्र विहितमेव विषयस्तत्रैव संकल्पादि व्रतसम्भवात् । व्रत्य-शब्देन च कृतसङ्कल्पस्यैवाभिधानात् । एतेन निषिद्धमरणायोद्यम्य निवृत्तस्य प्रायश्चित्तान्तरमूह्यमित्युक्तं भवति । तदेवाह यमः ।

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायः शस्त्रघातच्युताश्च ये ।

न वै ते प्रत्यवसिताः सर्वधर्मबहिष्कृताः ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन च ॥

इति । निषिद्धमरणविषयत्वञ्चास्योद्बन्धनविषशस्त्रादिसाहचर्येण स्पष्टीकृतम् ।

इदानीं प्रायश्चित्तमाह ॥

**प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च ॥**
**वृषैकादशदानेन वर्णाः शुध्यन्ति ते त्रयः ॥ ६ ॥**

क्षत्रियस्य प्राजापत्यद्वयेन वैश्यस्य प्राजापत्यचतुष्टयप्रत्याम्नायरूपतीर्थयात्रया शूद्रस्य प्राजापत्यद्वयेन वैश्यस्य प्राजापत्यचतुष्टयप्रत्याम्नायरूपतीर्थयात्रया शूद्रस्य वृषभैकादशगोदानेन च क्रमाच्छुद्धिर्भवति ।

ब्राह्मणस्य विशेषमाह ।

**ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथे ॥**
**सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ॥ ७ ॥**
**गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥**
**मुच्यते तेन पापेन ब्राह्मणत्वं च गच्छति ॥ ८ ॥**

ब्राह्मणस्य शुद्धिं पाराशरोऽब्रवीत्तामहं प्रवक्ष्यामीति संबन्धः । जलाग्न्यादिमरणसङ्कल्पान्निवृत्तो ब्राह्मणो वनं गत्वा चतुष्पथे सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरित्वा गोद्वयं प्रायश्चित्तसाद्गुण्याय दक्षिणां दत्वा तस्मात्पापान्मुच्यते । जलाग्न्यादिमरणसङ्कल्पान्निवृत्तस्य चण्डालत्वोत्पत्त्या यदपगतं ब्राह्मणत्वं तदपि पुनः प्राप्नोति । तदाह वृद्धपराशरः ।

अनाशकान्निवृत्तस्तु चातुर्वर्ण्यव्यवस्थितः ।
चण्डालः स तु विज्ञेयो वर्जनीयः प्रयत्नतः ।
लुप्तधर्मास्तु चण्डालाः परिव्राजकतापसाः ।
तेभ्यो जातान्यपत्यानि चण्डालैः सह वासयेत् ।

जलाग्निपतने चैव प्रव्रज्यानाशने तथा।
प्रत्यावसितवर्णानां प्रायश्चित्तं कथं भवेत्।
ब्राह्मणानां प्रमादेन तीर्थाभिगमनेन च।
गवां च शतदानेन वर्णाः शुध्यन्ति ते त्रयः।
ब्राह्मणस्य प्रवक्ष्यामि गत्वारण्यं चतुष्पथे।
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्
सावित्र्यष्टसहस्रं तु जपेच्चैव दिने दिने।
मुच्यते सर्वपापेभ्यो ब्राह्मणत्वं च गच्छति।
भिक्षार्थी विचरेद्ग्रामे गृहान् सप्त वने वसन्।
तां च भिक्षां समश्नीयादर्द्धाहेन विशुध्यति॥

इति। ननु वृद्धपराशरोक्तां शुद्धिं प्रवक्ष्यामीति मूले क्षत्रियशूद्रयोः प्राजापत्यवृषभैकादशगोदाने प्रोक्ते साक्षिवचने तु ब्राह्मणेन तु ब्राह्मणप्रसादगोप्रदाने तथा मूले ब्राह्मणस्य गोद्वयसहितं प्राजापत्यद्वयमुक्तं साक्षिवचने तु षाण्मासिकं व्रतमिति चेत्। उच्यते। युगान्तरीयनरापेक्षयापि प्रकृतकलियुगीयनराणामत्यल्पशक्तितया प्रायश्चित्तसंकोचस्य न्याय्यत्वात्।

अत एव संन्यासात्प्रत्यावृत्तौ संवर्तोऽपि षाण्मासिकमेव व्रतमाह।

सन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि।
स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यनन्तरम्॥
इति। तथा वृद्धपराशरोऽपि व्रतांतरमाह।
यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः।
अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति।
स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च।
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्॥

इति। तदेषां कल्पानां शक्त्याद्यपेक्षया व्यवस्थायां न विरोधः। ततश्च संन्यासादिप्रत्यावृत्तस्य यथोक्तप्रायश्चित्तानन्तरं जातकर्मादिभिः संस्कारैः पुनः संस्कारं कृत्वा पुनः संन्यासादिपरिपालनमेव कर्तव्यं न

गार्हस्थ्यमिति प्रघट्टकार्थः । समाप्तेः शास्त्रार्थत्वात् । तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्य इति न्यायात् । ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा व्रजेदिति जाबालश्रुतावानुलोम्यविधानात् ।

त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥

इति । दक्षेण क्रमप्रातिलोम्यनिषेधाच्च । प्रायश्चित्ताद्यकरणे तु राज्ञा स्वदास्यमामरणात्कारणीयम् । प्रव्रज्यावसितो राज्ञो दास आमरणान्तिक इति योगिस्मरणात् । तदशक्तावपि श्वपदेनाङ्कयित्वा निर्वासनीयः तदाह दक्षः ।

पारिव्रज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥ इति ।

यदुक्तं दुःस्वप्नादौ स्नानं कर्तव्यमिति तत्रापेक्षितं स्नानभेदमाह ।

**स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः ।**
**आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ ९ ॥**

यद्यपि दुःस्वप्नादौ स्नानं मुख्यमेवापेक्षितं तथापि मुख्यस्नानासामर्थ्ये अनुकल्पो ऽप्यनुष्ठेय इति तदभिधानमर्थवदेव ।

आग्नेयादिस्नानस्वरूपमाह ।

**आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।**
**आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥१०॥**
**यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।**
**तत्र स्नानात्तु गङ्गायां स्नातो भवति मानवः ॥ ११ ॥**

ईशानादिमन्त्राभिमन्त्रितेन भस्मना शिरःप्रभृतिष्ववलेपनमाग्नेयं स्नानं भवति । तदुक्तं लैङ्गे ।

ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु ।
उरोदेशमघोरेण गुह्यं वामेन सुव्रताः ॥
सद्येन पादौ सर्वाङ्गं प्रणवेन तु शोधयेदिति ।

ईशानतत्पुरुषाघोरवामदेवसद्योजातैः प्रणवादिनमोन्तैरनुलिम्पेदित्यर्थः । वारुणं जलावगाहनरूपं ब्राह्ममापोहिष्ठेति तृचेन पादहृदयमूर्धसु प्रतिपादं कुशोदकैर्मार्जनं तदाह कूर्मः ।

ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः ।
तत्र विशेषमाह बौधायनः ।
भुवि मूर्ध्नि तथाकाशे मूर्ध्न्याकाशे तथा भुवि ।
आकाशे भुवि मूर्ध्नीति मन्त्रस्नानं विधीयतइति ॥

सायमागच्छन्तीषु गोषु समुद्धतेन गोपादरजसा प्लावनं वायव्यस्नानम् ।

वायव्यङ्गोरजः प्रोक्तमस्ते गच्छति गोपतौ ।

इति बृहस्पतिस्मरणात् । आतपयुक्तेन वर्षोदकेनाप्लावनं दिव्यं स्नानं तद्गङ्गास्नानतुल्यं भवति । अनेन यौगिकसारस्वते अपि स्नाने उपलक्ष्येते ।

तदाह बृहस्पति ।

यौगिकं स्नानमाख्यातं योगाद्विष्णुविचिन्तनम् ।
विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतमिति ॥
विद्वदुक्तिप्रकारमाह व्यासः ।
स्वयमेवोपसन्नाय विनयेत द्विजातये ॥
तज्ज्ञः सम्पादयेत्स्नानं शिष्याय च सुताय च ।
दाक्षायणमयैः कुम्भैर्मन्त्रवज्जान्हवीजलैः ॥
कृतमाङ्गलपुण्याहैः स्नानमस्तु तदर्थिनाम् ।
आदौ तावत्प्रभासे बहुगुणसलिले मध्यमे पुष्करे वा
गङ्गाद्वारे प्रयागे कनखलसलिले भद्रकर्णे गयायाम् ।
राहुग्रस्ते च सोमे दिनकरसहिते सन्निहत्याविशेषा
देशैर्विख्याततीर्थैस्त्रिभुवनविदितैः स्नानमच्छिद्रमस्त्विति ।

एतेषु वारुणमेव मुख्यमिति तद्विधिरभिधीयते । तदाह शङ्खः ।

स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेदिति ॥

तान्यग्निपुराणे ।

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलघर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥

तल्लक्षणान्याह शङ्खः ।

संस्नातस्तु पुमानर्होजपाग्निहवनादिषु ।
प्रातः स्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥
चण्डालशवपूयादि स्पृष्ट्वा स्नातां रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हितम् ॥
पुण्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥

वसुकामः पवित्राणि तर्पयिष्यन्देवताः पितॄन् ।

स्नानं समाचरेद्यत्तु क्रियाङ्गं तत्प्रकीर्तितम् ।
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्थाय प्रवृत्तिस्तस्य नान्यथा ॥
सरस्सु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रियेति ॥

तच्च गङ्गायां मुख्यं 'कलौ गङ्गैव केवल'मिति स्कन्दपुराणात् । तदभावे बृहत्पराशर आह ।

देवखातनदीस्नातः सरस्सु स्नानमाचरेत् ।
स्नानं नद्यादिवन्येषु सद्भिः कार्यं सदम्बुषु ॥

निषिद्धदेशानाह स एव ।

न तीर्थे ह्याकुले स्नायाचासज्जनसमाश्रिते ।
कदाचिद्विदुषा मत्या न स्नातव्यं पराम्भसा ॥

अम्भःसु दुष्कृतांशेन येन कर्ता विलिप्यते ।
पञ्च वा सप्त वा पिण्डानुद्धृत्य तत्र तु ॥

वाशब्दाच्चतुरो वा ।

उद्धृत्य चतुरः पिण्डान्पारक्ये स्नानमाचरेदिति ।

अन्यत्र स्मरणात् ।

मासे नभसि न स्नायात्कदाचित् निम्नगासु च ।
रजस्वलाभवन्त्येता वर्जयित्वा समुद्रगाः ॥
न स्नायात् क्षोभितास्वप्सु न स्वयं क्षोभयेच्च ताः ।
न निर्गतासु तीर्थाच्च पतन्तीष्वाहितासु च ॥
रविसङ्क्रान्तिवारेषु ग्रहणेषु शशिक्षये ।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥
न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा तथा ।
उद्धृताभिरपि स्नायादाहृताभिर्द्विजातिभिः ॥
स्वस्थाभिश्च सहेमाभिरनुष्णाभिस्तथा द्विजः ।
नवाभिर्निर्दशाहाभिरसंस्पृष्टाभिरन्त्यजैरिति ॥

अथ चण्डालावगाहनविधिरुष्णोदकनिषेधश्च शक्तस्य जलावगाहनं नित्यं स्नानं सर्वेषु वर्णेषु शक्तैरहरहः कार्यम् ।

तस्याथ विधिरुच्यतइति तत्स्मरणात् ।

आदित्यकिरणैः पूतं पुनः पूतं च वन्हिना ।
आम्नातमातुरे स्नानं प्रशस्तं न शृतोदकमिति ॥

यमस्मरणाच्च । नद्याद्यसम्भवे तु नित्यस्नानाद्यप्यनातुरैरुष्णोदकेन कार्यम् ।

नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैरिति ॥

तत्राप्यशक्तौ पूर्वोक्तानि गौणस्नानानि । तत्र कालविशेषं स्वयमेव विधास्यति । स्नानविधिस्तुस्वसूत्रादवगन्तव्यः । साधारणं तु विधिमाह बृहत्पराशरः ।

सोङ्कारां चैव गायत्रीं महाव्याहृतिभिः सह ।
त्रिपदागणवैऋधावर्त्यस्नायाद्विद्वानपि द्विजः ॥
छन्दोमुन्यमरैर्युक्तं स्वशाखास्वरसंयुतम् ।
आवृत्य प्रणवं स्नायाच्छतमष्टशतं दश ॥
चिद्रूपं परमज्योतिर्निरालम्बमनामयम् ।
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरन् ॥
गायत्रीं वारिसंस्नातः प्रणवैर्निर्मलीकृतः ।
विष्णुस्मरणसंशुद्धो ऽप्यर्हः सर्वेषु कर्मस्विति ॥

एते चत्वारोपि पक्षाः पूर्वपूर्वासम्भवे उत्तरोत्तरइति व्यवस्थया ज्ञेयाः स्नानानन्तरं क्रमप्राप्तं वस्त्रपरिधानं तच्च प्रथमाध्याय एव निरूपतम् । इदानीं स्नानप्रसङ्गाद्बुद्धिस्थमाचारादिकाण्डत्रयशेषं समापयितुं तर्पणनिर्णयमाह ॥

**स्नातुं यान्तं द्विजं सर्वे देवाः पितृगणैः सह ॥**
**वायुभूतास्तु गच्छन्ति तृषार्ताः सलिलार्थिनः ॥१२॥**
**निराशास्ते निवर्तन्ते वस्त्रनिष्पीडने कृते ॥**
**तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ १३ ॥**

गङ्गादौ स्नातुं गच्छन्तं द्विजं वायुभूताः सदेवाः पितरस्तृषार्ताः सलिलार्थिनो ऽनुगताअपि निष्पीडिते स्नानवस्त्रे निराशा गच्छन्ति तस्मात्तर्पणमकृत्वा वस्त्रं न निष्पीडयेदित्यनेन तर्पणवस्त्रनिष्पीडनयोः पौर्वापर्युक्तं भवति । तदाह योगी याज्ञवल्क्यः ।

यावद्देवानृषींश्चैव पितृंश्चापि न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं यो हि स्नातो भवेद्द्विजः ॥
निष्पीडयति यो मोहात्स्नानवस्त्रमतर्पिते ।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणमिति ॥
तद्वस्त्रनिष्पीडनं च स्थले कार्यम् ।
वस्त्रनिष्पीडितं तोयं श्राद्धं चोच्छिष्टभोजिनाम् ॥

भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थलइति ।
स्मृत्यन्तरात् । निष्पीडनमन्त्रस्तु ।
ये के चास्मत्कुले जाता अपुत्रा गोत्रिणोमृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकमिति ।

तिलस्थाने विशेषमाह ॥

**रोमकूपे यवं स्थाप्य यत्तिलैस्तर्पयेत्पितॄन् ॥**
**तर्पितास्तेन ते सर्वे रुधिरेण मलेन च ॥ १४ ॥**

सलोमके प्रकोष्ठे तिलानवस्थाप्य तर्पणे अयं दोषः । तदाह देवलः ।

रोमसंस्थांस्तिलान् कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन चेति ॥

इदमनुद्धृततोयतर्पणे उद्धृते तु विशेषमाह योगियाज्ञवल्क्यः ।

यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोन्यथा तु सव्येन तिला ग्राह्या विचक्षणैरिति ॥

यो ऽपि गृहे निषिद्धं सतिलं तर्पणं तद्वहिर्भवेदिति बौधायनीयो निषेधस्सोपि प्रत्यक्षतिलाभिप्राय एव । गृहे अनुद्धृतोदकासंभवाद् उद्धृते तु संमिश्रणाभिधानात् । तिलेषु विशेषमाह गोभिलः ।

शुक्लैस्तु तर्पयेद्देवान्मनुष्यांच्छबलैस्तिलैः ।
पितॄंस्तु तर्पयेत्कृष्णै-स्तर्पयन्सर्वतोद्विज इति ॥

यवैर्देवर्षितर्पणमाह कूर्मः ।

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैरिति ।
अञ्जलिनियममाह व्यासः ।
एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ॥
स्त्रियोमात्रादिव्यतिरिक्ताः तासां शालङ्कायनो विशेषमाह ॥
मातृमुख्यांस्त्रियस्तिस्रस्तासां दद्याञ्जलाञ्जलीन् ।
त्रींस्त्रींस्तु दद्यादन्यासां दद्यादेकैकमञ्जलिम् ॥

सापत्नावार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली इति ।

देवादितर्पणमेकहस्तेनापि भवति । पितृतर्पणन्त्वञ्जलिनैव तदाह कूर्मः ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥
देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄनिति ।

तर्पणप्रकारमाह वशिष्ठः ।

सम्बन्धमनुकीर्त्यैव नाम गोत्रमनन्तरम् ।
वस्वादिरूपं सङ्कीर्त्य स्वधान्तेन नमोऽन्ततः ॥
तर्पयामि पदेनैव तर्पयेत्पितृपूर्वकमिति ।

तर्पणीयानाह हारीतः पित्रादीन्मात्रादीन्मातामहादीन्पितृव्यत्नु-ज्येष्ठभ्रातृन्स्वपत्नीर्मातुलांस्तत्पत्नीर्गुरूंश्चाचार्योपाध्यायान्सुहृत्सम्बन्धिबान्धवान् द्रव्यप्रदातृपोषकारि..क्यजनस्तत्पत्नीश्चतर्पयेदिति । तर्पकानाह व्याघ्रपात् ।

पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदर इति ॥

तस्यापवादः स्मृतिमञ्जर्याम् ।

अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्तरि ।
श्राद्धं पिण्डोदकं कुर्याज्जलमेकं तु पुत्रिणीति ।

स्नानकालीनान्नियमानाह ॥

**अवधूनोति यः केशान्स्नात्वा प्रस्रवते द्विजः ।**
**आचामेद्वा जलस्थोऽपि स बाह्यः पितृदेवतैः ॥१५॥**

यः स्नानानन्तरं केशान् विधुनुयात् योवा स्नानानन्तरमार्द्रवस्त्रएव प्रस्रवते विरामूत्रमुत्सृजति यश्च स्नात्वा शुद्धवस्त्रो जले स्थित्वाऽऽचामेत्स त्रिविधोऽपि पैतृकदैविकयोर्बाह्योऽनर्होभवति । तथाच मार्कण्डेयः ।

नापमृज्याच वस्त्रान्तोगात्राण्यम्बरपाणिभिः ।
न च निर्धुनुयात्केशान्वासश्चैव न निर्धुवन् ॥

जावालिः ।

स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि ।
प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति ॥

हारीतः ।

आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपमिति ॥

अनेनार्द्रशुष्कवस्त्रयोर्विपर्यासे जलस्थलयोर्नाचामेदित्युक्तं भवति । आचमनकालीनान्नियमानाह ।

**शिरःप्रावृत्य कण्ठं वा मुक्तकच्छशिरो ऽपि वा ।**
**विना यज्ञोपवीतेन आचान्तो ऽप्यशुचिर्भवेत् ॥ १६ ॥**

शिरः कण्ठं वा वाससा प्रावृत्य मुक्तकच्छो मुक्तशिखोयज्ञोपवीतरहितो वाऽऽचान्तो ऽपि शुद्धो न भवति । तथाच ब्रह्माण्डपुराणे ।

कण्ठं शिरोवा प्रावृत्य रथ्यापणगतो ऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तो ऽप्यशुचिर्भवेत् ॥

बौधायनो ऽपि ।

न तिष्ठन्न प्रह्वो न प्रणतो न मुक्तशिखो नाबद्धकच्छो न बहिर्जानुर्न वेष्टितशिरा नाबद्धकच्छो न त्वरमाणो नायज्ञोपवीती न प्रसारितपादः शब्दं कुर्वन्स्त्रिरपोहृदयङ्गमाः पिबेदिति । त्रिश्चतुर्वेति गौतमः । अनेनाचमनांगकलापविधानेन यत्राप्याचमनशिखाबंधादीनां योगपद्यमापद्यते तत्रापि शिखाबंधादिपूर्वकमेवाचामेदित्यर्थः सिध्यति । ततश्च

विशिखोव्युपवीतीच यत्करोति न तत्कृतम् ।
क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ॥

न भवन्ति तथा तस्य क्रियाः सर्वा न संशय

इत्येताभ्यां शिखाबन्धाचमनयोः सर्वकर्माङ्गत्वे ऽपि न परस्पराङ्गत्वमन्वारभणीयामन्वारम्भणीयायादिव अनवस्थापातात् । किन्तु शिखाबन्धादीनामेवाचमने यत्तु ।

सन्देहेषु च सर्वेषु शिखामोक्षे तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेदिति ॥

वचनं तदाचमने निमित्तान्तरसंग्रहार्थं नत्वाचमनस्य शिखाबन्धादावङ्गत्वबोधनायेत्यलम् । विना यज्ञोपवीतेन यज्ञोपवीतस्य स्कन्धात्स्खलनदूत्यर्थः । आचमने तीर्थनियममाह । भरद्वाजः ।

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचनेति ॥
अत्र ब्रह्मादिना पूर्वपूर्वोपघात उत्तरोत्तरं द्रष्टव्यम् ।
त्रिः पिबेद्ब्रह्मतीर्थेन जलमाचमनं चरन् ॥
पीत्वान्येन भवेत्पापी तीर्थेनेति मतिर्ममेति ।

तत्सम्भवेऽन्यनिषेधात् । तीर्थत्रयविधानादेव पित्र्यनिषेधे सिद्धे पुनर्निषेधोऽनिषिद्धानां मानुषाग्नेयार्षाणामित्यर्थः। तत्स्थानान्याह याज्ञवल्क्यः।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

वसिष्ठोऽपि । अङ्गुल्यमूलस्योत्तरतोरेखाब्राह्म्यं तीर्थमङ्गुलिकनिष्ठिकामूले दैवमङ्गुल्यग्रेषु मानुषं पाणिमध्यआग्नेयं प्रदेशिन्यङ्गुष्ठयोरन्तरा पैत्र्यमिति । आश्वलायनोऽपि ।

आर्षं कनिष्ठिकामूले कायमग्राङ्गुलीषु वै इति ।

शङ्खलिखितावपि । पूर्वेणान्तराङ्गुलिपर्वाणि दैवमिति । अत्र कनिष्ठिकामूलैर्दैवार्षप्राजापत्यानामङ्गुलीपर्वसु दैवार्षयोरङ्गुल्यग्रैव मानुषप्राजापत्यानां विकल्पोऽज्ञेयः । तानि च दक्षिणहस्तएव ब्राह्मणस्य दक्षिणहस्ते पञ्चतीर्थानीति प्रचेतःस्मरणात् । किञ्च ।

**जले स्थलस्थो नाचामेज्जलस्थश्च बहिःस्थले ॥**
**उभे स्पृष्ट्वा समाचामेदुभयत्र शुचिर्भवेत् ॥ १७ ॥**

स्नात्वाशुष्कस्थल उपविष्टैः प्रह्वोवा जलएवा चमनविन्द्यात्य-

आचामेदुभयथाप्युभयत्राशुद्धिः । किन्तुजलस्थलयोः पादौ कृत्वाचामेत्तथा सत्युभयोरपिजलस्थलयोः शुद्धिर्भवति । तदाह दक्षः ।

स्नात्वाचामेत्सदा विप्रः पादौ कृत्वा जले स्थले ।

उभयोरप्यसौ शुद्धः स्नातः कार्यक्षमोभवेदिति ॥

बहिराचमननिमित्तान्याह ॥

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ॥**

**आचान्तः पुनराचामेद्वासो ऽपि परिधाय च ॥१८॥**

स्नानपानक्षुतस्वप्नभोजनरथ्याप्रसर्पणवस्त्रपरिधानेषु कृतेष्वाचान्तः पुनराचामेत्द्विराचामेदित्यर्थः । चकाराद्रोदनाध्ययनारम्भचापल्यानृतोक्त्यादिषु । तथाच वसिष्ठः । सुप्त्वा जप्त्वा स्नात्वा रुदित्वाऽऽचान्तः पुनराचामेदिति । मनुरपि ।

सुप्त्वा जप्त्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः ।

पीत्वाऽपो ऽध्येष्यमाणश्च आचामेत्प्रयतो ऽपि सन्निति ॥

आचमनासम्भवे तु कल्पमाह ।

**क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ॥**

**पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ १९ ॥**

क्षुतनिष्ठीवनदन्तोच्छिष्टाशनानृतभाषणपतितसंभाषणादिष्वाचमनासंभवे दक्षिणं श्रवणं स्पृशेत् ।

तथाच वसिष्ठः ।

क्षुते निष्ठीवने सुप्ते परिधाने,-श्रुपातने ।

पञ्चस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेदिति ॥

मार्कण्डेयोऽपि ।

आचम्य सम्यग्योयेन क्रियाः कुर्वीत वै शुचिः ।

कुर्वीतस्पर्शनं वापि दक्षिणश्रवणस्य च ॥

यथाविभवतो ह्येतत्पूर्वाभावे ततः परम् ।

अविद्यमाने पूर्वोक्त उत्तरप्राप्तिरिष्यतइति ॥

तस्याप्यसंभवे तु कल्पान्तरमाह बौधायनः ।

नीवीं विस्रस्य परिधायोपस्पृशेदार्द्रं तृणं गोमयं भूमिं वा संस्पृशेदार्द्रं वेति ।

अत्रार्थवादमाह ।

**प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥**
**विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥ २० ॥**
**अग्निरापश्च वेदाश्च सोमसूर्यानिलास्तथा ॥**
**सर्व एव तु विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे ॥ २१ ॥**

प्रभासादितीर्थानि गङ्गादिसरितोऽग्निरापो वेदाः सोमसूर्यानिलाश्चेत्येते सर्वेऽपि विप्रस्य दक्षिणे कर्णे तिष्ठन्तीति मनुरुक्तवानतस्तत्स्पर्श आचमनकार्यकारीतियुक्तमेव ।

स्नानकालमाह ॥

**भास्करस्य करैः पूतं दिवास्नानं प्रशस्यते ॥**
**अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ २२ ॥**

संपूर्णादित्यमण्डलदर्शनयोग्यः कालो दिवसस्तत्र सूर्यकिरणैः पवित्रीकृते स्नानमतिप्रशस्तमन्यथा तद्विपरीते काले रात्रावप्रशस्तम् पावित्र्यहेतुसूर्यकिरणासद्भावात् । नचैतावता सन्ध्यायां स्नानमभ्यनुज्ञातं भवति पावित्र्यहेतुसूर्यकिरणसद्भावादितिवाच्यम् तस्य शूर्पेण जुहोति तेन ह्यन्नं क्रियतइतिवदर्थवादतया हेतुत्वानभ्युपगमात् । तर्हि तद्व्यतिरेकोरात्रिस्नाननिषेधे हेतुर्न स्यादिष्टापत्तिः कल्प्यस्यार्थवादत्वात् । कथन्तर्हि सन्ध्यायां स्नानप्राप्तिः वचनान्तरादिति ब्रूमः ।

तथाच चतुर्विंशतिमते ।

उपस्युषसि यत्स्नानं सन्ध्यायामुदितेऽपि वा ।
प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनमिति ॥

नन्वेवं चन्द्रग्रहणेपि रात्रौ स्नानं न स्यादित्यत आह राहोरन्यत्र दर्शनादिति ।

[1]ब्रह्मर्षिरेवमुक्तस्तु तामिदं वाक्यमब्रवीत् ।
शोकसन्तप्तहृदयां स्वसारमिव दुःखिताम् ॥ ९ ॥
न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया ।
एष त्वां नयते राजा [2]बलेनैव महाबलः ॥ १० ॥
नहि तुल्यं बलं-[3]मन्ये राज्ञो मम विशेषतः ।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ ११ ॥
इयमक्षौहिणी पूर्णा गजवाजि[4]रथाकुला ।
[5]पत्तिध्वज[6]नरौघैस्तु यथैष बलवत्तरः ॥ १२ ॥
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ।
वचनं वचनज्ञा सा ब्रह्मर्षि[7]ममितप्रभम् ॥ १३ ॥
न बलं क्षत्रियस्याहु[8]र्ब्राह्मणेषु बलाधिकम् ।
ब्रह्मन् ब्रह्मबलं दिव्यं[9]क्षात्रात् सुबलवत्तरम् ॥ १४ ।
अप्रमेयं बलं[10]तेऽस्ति नायं त्वद्बलवत्तरः ।
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १५ ॥
नियुङ्क्ष्व मां महातेजस्त्वं ब्रह्मन्[11]बलवत्तरः ।
[12]बलं दर्पं च यावद्धि नाशयामि दुरात्मनः ॥ १६ ॥

1. B. 9. एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् । 2. G. 10. बलान्मम etc. B. 10. बलान्मत्तो etc. 3. B. 11. मह्यं राजात्वद्य विशेषतः । G. 1. राज्ञो विप्रैर्विशेषतः, but P. agrees with our text. 4. P. समाकुल. 5. B. 12. हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥ 6. P. रथौघैश्च. G. 12 नरौघैश्च. 7. B. 13. मतुलप्रभं 8. G. 14. र्ब्राह्मणस्य. etc., P. र्ब्राह्मणे. च etc. B. 14. ब्राह्मणा बलवत्तराः. 9. G. 14. and B. 14. क्षात्राच्च etc. P. क्षात्रात् सु etc. 10. B. 15. तुभ्यं नत्वया बलवत्तरः ॥ 11. B. and G. 16. बलसंभृतां; P. बलवत्तरां. 12. B. 16. तस्य दर्पं बलं (a)यत्नं etc.

इत्युक्तस्तु तया राम वसिष्ठः [1]सुमहातपाः ।
[2]सृज त्वमिति होवाच बलं परबलार्दनम् ॥ १७ ॥
तस्या[3]हम्बारवोत्सृष्टाः पह्लवाः शतशो[4]नृपाः ।
[5]अनाशयन् बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८ ॥
स राजा[6]परमायस्तः क्रोधविस्फुरितेक्षणः ।
पह्लवान् नाशयामास शस्त्रैरुच्चावचै[7]स्तथा ॥ १९ ॥
विश्वामित्रार्दितान् दृष्ट्वा पह्लवान् शतश[8]स्तदा ।
भूय एवासृजद्घोरान् शकान् यवनमिश्रितान् ॥ २० ॥
तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः ।
[9]प्रधावद्भिर्महावीर्यैः[10]पद्मकिञ्जल्कसन्निभैः ॥ २१ ॥
[11]दीर्घासिपट्टिशधरै[12]र्हेमवर्मायुधावृतैः ।
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २२ ॥
[13]दह्यमानं बलं दृष्ट्वा संभ्रान्तश्चलितेन्द्रियः ।
ततोऽस्त्राणि महातेजा विश्वमित्रोभ्यवासृजत् ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे धेनुहरणे वसिष्ठवाक्यम् ।

( ) Y. and S. यत्तचाशयामि etc. 1. B. 17. स्तु महायशाः. 2. B. 17. सृज) इति तदोवाच etc. Between this, and the next line of our text B. (18 reads the line: तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत्तदा । 3. B. 18. हुंभा etc. G. 18. हम्भा etc., but P. has हम्बा etc. 4. B. and G. 18. नृप, but P. has नृपाः. 5. B. 19. नाशयंति बलं etc. 6. B. 19. परमक्रुद्धः क्रोधविस्फारिते etc. 7. B. 20. रपि ; G. 19. स्तदा, but P. has स्तथा. 8. G. 20. स्तथा, but P. has स्तदा. 9. B. 22. प्रभा etc 10. B. 22. हेम etc. 11. B. 22. तीक्ष्णासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः ॥ 12. P. हैमचर्माम्बरावृतैः । 13. For this Sl. B. 23-24. ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ॥ तैस्ते यवनकाम्बोजा बर्बराश्चाकुलीकृताः ॥

## LVI.

ततस्तान्[1]व्याकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वशिष्ठश्चोदयामास[2]स्वां धेनुं सृज योधिनः ॥ १ ॥
तस्या[3]हम्बारवाज्जाताः काम्बोजा रविसन्निभाः ।
[4]उरसस्त्वभिसंजाताः पह्लवाः शस्त्रपाणयः ॥ २ ॥
योनिदेशाच्च यवनाः शकृद्देशाच्छका[5]स्तथा ।
रोमकूपेषु[6]च म्लेच्छास्तुषाराः सकिरातकाः ॥ ३ ॥
[7]यैस्तन्निषूदितं[8]सैन्यं विश्वामित्रस्य तत्क्षणात् ।
सपदाति[9]रथं साश्वं[10]सगजं रघुनन्दन ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ।
विश्वामित्रसुतानां[11]तु शतं नानाविधायुधम् ॥ ५ ॥
[12]अभ्यधावत संक्रुद्धं वसिष्ठं जपतां वरं ।
हुङ्कारेणैव तान् सर्वान् निर्ददाह[13]महामुनिः ॥ ६ ॥
ते साश्वरथपादाता वसिष्ठेन महात्मना ।
भस्मीकृता मुहूर्त्तेन विश्वामित्रसुता[14]स्तदा ॥ ७ ॥
[15]दृष्ट्वा विनाशितान् पुत्रान् बलञ्च सुमहाबलः ।
सव्रीडश्चिन्तयामास विश्वामित्रस्तदानघ ॥ ८ ॥

---

1. B. LV. 1. आकुलान् etc. 2. B. 1. कामधुक् सृज योगतः ॥ 3. G. 2. हम्भा etc. but P. has हम्बा etc. B. 2. हुंकारतो जाताः etc. 4. B. 2. ऊधसश्चाथ संभूता बर्बराः etc. 5. B. 3. स्मृताः 6. G. 3. म्लेच्छास्तु etc. B. 3. म्लेच्छाश्च हारीताः etc. 7. B. 4. तै etc. 8. B. 4. सर्वं etc. 9. B. 4. गजं etc. 10. B. 4. सरथं etc. 11. P. च etc. 12. B 6. and G. 6 अभ्यधावत् सुसंक्रुद्धं etc. but P. agrees with our text. 13. B. 6. महा तपाः. 14. B. 7. स्तथा. 15. For this Sl. B. 8. दृष्ट्वा विनाशितान् सर्वान्-

समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥
हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
[1]हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १० ॥
[2]सपुत्रमेकं राज्याय नियुज्य परिपालने ।
[3]पृथिवीं वीरधर्मेण वनमेवान्वपद्यत ॥ ११ ॥
[4]गत्वा च हिमवत्पार्श्वं किन्नरैरुपशोभितं ।
महादेवप्रसादार्थं तपस्तेपे[5]सुदुश्चरम् ॥ १२ ॥
केनचित् त्वथकालेन [6]महादेवो वृषध्वजः ।
आगत्य वरदो वीरं विश्वामित्रमभाषत ॥ १३ ॥
किमर्थं तप्यसे[7]राजंस्तपो ब्रूहि विवक्षितं ।
वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयताम् ॥१४॥
एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महा[8]देवमिदं वचनमब्रवीत् ॥ १५ ॥

बलं च सुमहायशाः । सव्रीडं चिंतयाविष्टो विश्वामित्रो भवत्तदा ॥ 1. B. 10 (a) हतसर्वबलोत्साहो etc. (a)V. गतसर्व etc. 2, For this Sl. B. 11. (a)स पुत्रमेकं राज्याय पालयेति नियुज्य च। पृथिवीं क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥ (a)S. स्व etc. 3. G. 11. पृथिव्या क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥ but P. agrees with our text. 4. G. 12. स गत्वा etc., P. गत्वा तु etc. B. 12. स गत्वा हिमवत्(a)पार्श्वं किन्नरोरग(b)सेविते । etc. (a)V. पार्श्वं etc. (b)V. सेवितं. 5. B. 12. महातपः. 6. B. 13. देवेशो वृषभध्वजः । दर्शयामास वरदो विश्वामित्रं महामुनिं ॥ 7. B. 14. राजन् ब्रूहि यत्ते etc. 8. B. 15.

[1]यदि तुष्टोऽसि मे देव धनुर्वेदः[2]प्रदीयताम् ।
साङ्गोपाङ्गः सोपनिषत् सरहस्यः प्रदीयताम् ॥ १६ ॥
यानि देवेषु चास्त्राणि दानवेषु[3]तथर्षिषु ।
गन्धर्वयक्षरक्षःसु प्रतिभान्तु[4]च तानि मे ॥ १७ ॥
तव प्रसादा[5]द्भगवन् देवदेव ममेप्सितम् ।
एवमस्त्विति देवेशो वाक्यमुक्त्वा[6]दिवं ययौ ॥ १८ ॥
[7]प्राप्य चास्त्राणि राजर्षिर्विश्वामित्रो महायशाः ।
हर्षेण महता युक्तो दर्पपूर्ण[8]स्ततोऽभवत् ॥ १९ ॥
विवर्द्धमानो वीर्येण समुद्र इव पर्वणि ।
[9]हतमेव तदा मेने वसिष्ठमृषिमुत्तमम् ॥ २० ॥
[10]आगत्य चाश्रमपदं मुमोचास्त्राणि तस्य सः ।
[11]यैस्तु तपोवनं सर्वं निर्दग्धमभवत् तदा ॥ २१ ॥
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः ।
दृष्ट्वा विप्रद्रुता भीता[12]ऋषयोऽथ सहस्रशः ॥ २२ ॥

---

द्देवं विश्वामित्रो ब्रवीदिदं ॥ 1. For this Sl. B. 16. यदि तुष्टो महादेव धनुर्वेदो ममानघ । सांगोपांगोपनिषदः etc. 2. G. 16. महेश्वर, but P. has प्रदीयतां. 3. B. 17. महर्षिषु. 4. B. 17. ममानघ. 5. B. 18. and P. भवतु etc. 6. B. 18. गतस्तदा. 7. For this Sl. B. 19. प्राप्य चास्त्राणि देवेशाद्विश्वामित्रो महाबलः । दर्पेण महता युक्तो दर्पपूर्णो भवत्तदा ॥ 8. G. 19. स्तदाभवन्. 9, G. 20. जितमेव etc., but P. has हतमेव etc.; B. 20. हतं मेने तदा राम वसिष्ठमृषिसत्तमं ॥ 10. For this Sl. B. 21. ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः । यैस्तत्तपोवनं नाम निर्दग्धं चास्त्रतेजसा ॥ 11. P. तैस्तु etc. 12. B. 22. मुनयः शतशो दिशः.

वसिष्ठस्य च ये शिष्या[1]स्तथैव मृगपक्षिणः ।
[2]व्यद्रवन्त भयाद् भीता दिशः सर्वाः सहस्रशः ॥२३॥
वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ।
[3]मुहूर्त्तादिव निःशब्दमासीदीरिणसन्निभम् ॥ २४ ॥
[4]अवदच्च वसिष्ठस्तान् मा भैष्टेति मुहुर्मुहुः ।
नाशयाम्येष गाधेयं नीहारमिवभास्करः ॥ २५ ॥
एवमुक्त्वा महातेजा वसिष्ठो[5]वदतां वरः ।
विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥
आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।
[6]दुराचारोऽसि संमूढ तस्मात्त्वं प्रविनङ्क्ष्यसि ॥२७॥
इत्युक्त्वा परमक्रुद्धो[7]दण्डमुद्यम्य सत्वरम् ।
[8]सधूमइवकालाग्निर्यमदण्ड इवापरः ॥ २८ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
वसिष्ठाश्रमदाहः ।

---

1. B. 23, ये चैव मृग etc. 2. B. 23. विद्रवन्ति भयाद्भीता नानाद्रिभ्य सहस्रशः ॥ 3. B. 24, मुहूर्त्तमिव etc. 4. B. 25. वदतो वै वसिष्ठस्य माभैरिति मुहुर्मुहुः । नाशयाम्यद्य गाधेयं etc. 5. B. 26. जपतां वरः. 6. B. 27, दुराचारो हि यन्मूढस्तस्मात्त्वं न भविष्यसि ॥ 7. G. 28. दण्डं जग्राह सत्वरः but P. has दण्डमुद्यम्य सत्वरम् B. 28. दण्डमुद्यम्य सत्वरः 8. G. 28. सधूममिवकालाग्निं यमदण्डमिवापरं । but P. agrees with our text ; B. 28. विधूमइव कालाग्नि (a)र्यमदण्डमिवापरं ॥ (a)V. यमदण्डइवापरः ॥

LVII.

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ।
[1]आग्नेयमस्त्रमुत्क्षिप्य तिष्ठतिष्ठेत्यथाब्रवीत् ॥ १ ॥
[2]तस्य तद्वचनं श्रुत्वा वसिष्ठः प्रत्यभाषत ।
[3]स्थितोऽस्म्यद्य क्षत्रबन्धो यद्बलं तद्विदर्शय ॥ २ ॥
[4]नाशयाम्येष ते दर्पं शस्त्रस्याप्यद्य गाधिज ।
क्व च क्षात्रं बलं मूढ क्व च ब्राह्मं महद्बलम् ॥ ३ ॥
पश्य[5]ब्राह्मं बलं दिव्यं मम क्षत्रियपांसन ।
[6]तच्चास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुत्तमम् ॥ ४ ॥
[7]ब्रह्मदण्डाहतं शान्तमग्निवेग इवाम्भसा ।
रौद्रं च वारुणं चैव ऐन्द्रं पाशुपतं तथा ॥ ५ ॥
[8]ऐषिकं चैव चिक्षेप [9]रुषितो गाधिनन्दनः ।
[10]मानसं मानवं चैव गान्धर्वं स्वापनं तथा ॥ ६ ॥
[11]भ्रंशनं मोहनं चैव संतापनविलापने ।
शोषणं [12]दारणं चैव वज्रमस्त्रं [13]सुदारुणम् ॥ ७ ॥

---

1. G. LVII. 1. आग्नेयास्त्रं समुत्क्षिप्य etc., but P. agrees with our text. B. LVI. 1. has for this line, आग्नेयमस्त्रमुद्दिश्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ 2. For this Sl. B. 2-3. ब्रह्मदण्डं समुद्यम्य कालदण्डमिवापरं । वसिष्ठो भगवान् क्रोधादिदं वचनमब्रवीत् ॥ क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय । 3 G. 2. स्थितो ऽस्म्येष etc. 4. For this Sl. B. 3-4. नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज ॥ क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् ॥ 5. B. 4. ब्रह्मबलं etc. 6. B. 5. तस्यास्त्र etc. 7. For this Sl. B. 5-6. ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवांभसा ॥ वारुणं चैव रौद्रं च etc. । 8. B. 6. ऐषीकञ्चापि etc. 9. B. 6. कुपितो etc. 10. B. 7. मानवं मोहनं etc. 11. B, 7. जृंभणं etc. 12. G. 7. and V. 8. दारुणं etc. 13. B. 8. and G. 7. सुदुर्जयं ।

[1]दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ।
[2]शक्तिद्वयञ्च चिक्षेप कङ्कालं मुषलं तथा ॥ ८ ॥
[3]वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ।
[4]धर्मचक्रं [5]कालचक्रं विष्णुचक्रं तथैव च ॥ ९ ॥
[6]ब्रह्मपाशं कालपाशं वरुणं पाशमेवच ।
[7]पैनाकमस्त्रं शुष्कार्द्रे दयिते चाशनी तथा ॥ १० ॥
[8]वायव्यं मथनञ्चैव अस्त्रं हयशिरस्तथा ।
त्रिशूलमस्त्रं घोरञ्च कापालमथ[9]किङ्करम् ॥ ११ ॥
[10]एतान्यस्त्राणि सर्वाणि चिक्षेप कुशिकात्मजः ।
वसिष्ठे सुमहाभागे तदद्भुतमिवाभवत् ॥ १२ ॥
[11]तानि दण्डेन सर्वाणि न्यवधीद्ब्रह्मणः सुतः ।
तेषु शान्तेषु ब्रह्मास्त्रं [12]प्राक्षिपद्गाधिनन्दनः ॥ १३ ॥
तदस्त्रमुद्यतं दृष्ट्वा देवाःसाग्निपुरोगमाः ।

---

P. दुरासदं. 1. This line agrees with the 2nd line of B. 9 2. This line agrees with the first line of B. 11. 3. This line agrees with B. 11. line 2. 4. This line agrees with B. 10. line 1 5. G. 9. विष्णुचक्रं कालचक्रं etc., but P. has कालचक्रं विष्णु etc. 6. This line agrees with B. 8. line 2. 7. For this line B. 9. (a)पिनाकमस्त्रं दयितं शुष्कार्द्रं अशनी तथा ॥ (a)S. पैनाक etc. 8. For this line B. 10. line 2. 9. B. 12. l. 1. कंकणं; G. 11. किङ्किणीम्. 10. For this Sl. B.12—13. एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ वसिष्ठे जपतां श्रेष्ठे etc. । 11. For this line B. 13. तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणःसुतः ॥ 12. B. 14. चिक्षेप गाधिनंदनः ।

देवर्षयश्च[1] संत्रस्ता[2] गन्धर्वाश्च महोरगाः ॥ १४ ॥
त्रैलोक्यमासीत् संत्रस्तं ब्रह्मास्त्रे समुदीरिते ।
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ॥ १५ ॥
वसिष्ठो[3]ऽग्रसदव्यग्रो ब्रह्मदण्डेन राघव ।
ब्रह्मास्त्रं [4]ग्रसतस्तस्य वसिष्ठस्य महात्मनः ॥ १६ ॥
त्रैलोक्यमोहनं रौद्रं रूपमासीत् [5]सुदुःसहम् ।
[6]सर्वेभ्यो रोमकूपेभ्यो वसिष्ठस्य महात्मनः ॥ १७ ॥
[7]मरीच्य इव निष्पेतुः सधूमा ज्वलनार्चिषः ।
प्राज्वलद् ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ॥ १८ ॥
[8]सधूम इव कालाग्निर्यमदण्ड इवापरः ।
ततोऽ[9]स्तुवंस्तु मुनयो वसिष्ठं [10]जयतां वरम् ॥१९॥
अमोघं ते बलं ब्रह्मंस्तेजो धारय तेजसा ।
निगृहीतस्त्वया [11]राजा विश्वामित्रो महातपाः ॥२०॥
[12]प्रसीद द्विपदां श्रेष्ठ लोकाः सन्तु गतव्यथाः ।
एवमुक्तो महातेजाः [13]शममाप [14]महायशाः ॥ २१ ॥

---

1. B. 15. संभ्रांता गंधर्वाः स etc. 2. P. गंधर्वाः स etc. 3. B, 16. ग्रसते(a)-सर्वं etc. (aS) पूर्वं etc. 4. B. 17. ग्रसमानस्य वसिष्ठस्य etc. 5. B. 17 सुदारुणं. 6. B. 18. रोमकूपेषु सर्वेषु etc. 7. P. मरीचय इवापेतुः etc. For this line B. 18. मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ 8. B. 19. विधूम etc. 9. स्तुवन्मुनिगणा वसिष्ठं etc. 10. G. 19. जपतां etc. 11. B. 21. and G. 20. ब्रह्मन् विश्वामित्रो महाबलः । but P. agrees with our text. 12. B. 21. अमोघं ते बलं(a)श्रेष्ठ लोकः etc. (a) S. श्रेष्ठं etc. 13. B. 22 शमंचक्रे महातपाः. 14. P. महातपाः.

विश्वामित्रो[1]ऽपि निकृतो विनिःश्वस्येदमब्रवीत् ।
धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ॥ २२ ॥
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ।
[2]तदेतद्बलमालोक्य सर्वेन्द्रियसमाहितः ॥ २३ ॥
[3]तपोबलं समास्थास्ये यद्वै ब्रह्मत्वकारणम् ।
[4]संस्कारेणैव तेनैव भूयासं ब्राह्मणो यथा ॥ २४ ॥
एवमुक्त्वा महातेजाः शस्त्रमुत्सृज्य [5]दुःखितः ।
स जगाम [6]तदा राम तपश्चरणनिश्चितः ॥ २५ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
विश्वामित्र प्रतिज्ञा ।

## LVIII.

[7]सोऽतप्यत तपो घोरं विश्वामित्र[8]स्ततोमुनिः ।
विनिःश्वस्य विनिःश्वस्य कृतवैरो[9]महात्मना ॥ १ ॥
[10]दक्षिणां दिशमास्थाय महिष्या सह कौशिकः ।
फलमूलाशनस्तत्र चचार सुमहत्तपः ॥ २ ॥

1. B. 22. विनिकृतो etc. P. ऽपि निःश्वस्य निजभाषितमब्रवीत् । 2. For this line B. 24. तदेतत्प्रसमीक्ष्याहं प्रसन्नेन्द्रियमानसः ॥ 3. B, 24. तपो महत् etc. 4. This line is wanting in G. This line and the following Sl. are wanting in B. 5. G. 24. दूरतः, but P. has दुःखितः. Before the next line of our text G. 25. reads the line, ततः स निश्चयं कृत्वा ब्राह्मण्ये धृतमानसः । which however is wanting in P. 6. P. महातेजाः etc. 7. For this line B. LVII. I. ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः । 8. G. I. स्तपोनिधिः 9. S. महात्मनः. 10. For this, and the following. two Slokas, B 2-3. स दक्षिणां दिशं गत्वा महिष्या सह राघव । तताप परमं घोरं

ब्रह्मर्षित्व[1]मभिप्रेप्सुर्वसिष्ठस्पर्धया विभुः ।
दृष्ट्वा ब्रह्मा तपोयोगं वसिष्ठस्यात्मनोऽधिकम्॥ ३ ॥
ततप परमं राम तपोवनमुपाश्रितः ।
ब्राह्मणः स्यामिति मतिं समाधाय महामनाः ॥ ४ ॥
[2]तत्रास्य जज्ञिरे पुत्राश्चत्वारो लोकविश्रुताः ।
हविस्यन्दमधुस्यन्ददृढनेत्रमहोदराः ॥ ५ ॥
[3]तदानुशासतो राज्यमष्टौ पुत्रा महाबलाः ।
जज्ञिरे राजशार्दूलाद्वीर्यवन्तो महौजसः ॥ ६ ॥
वर्षाणां तत्र पूर्णेऽथ सहस्रे तपतां वरः ।
जज्वाल तपसा धीमान् कौशिकोऽग्नि[4]रिवोत्थितः॥७॥
रामायणे बालचरिते विश्वामित्रप्रशंसायाम् ॥

---

## LIX.

पूर्णे वर्षसहस्रेऽथ ब्रह्मा लोकपितामहः ।
[5]आगम्य गाधिजं राम सोऽब्रवीन्मधुरं वचः ॥ १ ॥
[6]जितो राजर्षिलोकस्ते सुमहान् कुशिकात्मज ।
अनेन तपसा युक्तं राजर्षिं त्वा समर्थये ॥ २ ॥

---

विश्वामित्रो महातपाः ॥ फलमूलाशनो दांतश्चचार परमं तपः । 1. P. मनुप्रेप्सुः etc. 2. For this and the following 2 Slokas B. 3-4. अथास्य जज्ञिरे पुत्रा सत्यधर्म्मपरायणाः ॥ हविष्यंदो मधुष्यंदो दृढनेत्रो महारथः । 3. P. तदास्य etc. 4. G: 7- समप्रभः, but P. has रिवोत्थितः.
5. For this line B. LVII 5. अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनं । 6. For this SL. B. 5-6. जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ॥ अनेन तपसा

एवमुक्त्वा महातेजा जगाम सह दैवतैः ।
[1]त्रिविष्टपाद्ब्रह्मलोकं लोकानां[2]प्रभुरीश्वरः ॥ ३ ॥
विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किञ्चिदवाङ्मुखः ।
दुःखेन महता[3]युक्तः समन्युरिदमब्रवीत् ॥ ४ ॥
तपश्च सुमहत्तप्तं राजर्षिरिति[4]चैव माम् ।
[5]अद्यापि भगवानाह नास्ति शंके तपःफलम् ॥५॥
[6]एवमुक्त्वा महातेजा भूय एव महामुनिः ।
तपश्चचार काकुत्स्थ परं[7]निश्चयमास्थितः ॥ ६ ॥
एतस्मिन्नेव काले तु[8]सत्यधर्मपरायणः ।
[9]त्रिशङ्कुर्नाम राजाभूदिक्ष्वाकुकुलनन्दनः ॥ ७ ॥
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ।
गच्छेयं स्वशरीरेण[10]राम स्वर्गमिति प्रभो ॥ ८ ॥
वसिष्ठं[11]स समाहूय[12]मतिमेनां न्यवेदयत् ।
[13]अशक्यमेतदित्युक्तो वसिष्ठेन च धीमता ॥ ९ ॥
प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ।
[14]वसिष्ठस्य शतं यत्र पुत्राणां तप्यते तपः ॥ १० ॥

---

त्वां हि राजर्षिरितिविद्महे । 1. B. 7. त्रिविष्टपं etc. 2. B. 7. परमेश्वरः· 3. B. 8· विष्टः etc. 4. B. 8. मां विदुः· 5. For this line B· 9 देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलं । 6. For this Sl. B. 9-10. एवं निश्चित्य मनसा भूय एव महातपाः ॥ तपश्चचार धर्मात्मा काकुत्स्थ परमात्मवान् । 7. G. 6. परमात्मवान्; P. निश्चयमागतः· 8. B. 10. सत्यवादी जितेन्द्रियः ॥ 9. B. 11. त्रिशंकुरिति विख्यात इक्ष्वाकुकुलवर्धनः । 10. B. 12 and G. 8. देवतानां परां गतिं, but P· agrees with our text. 11. G. 9. च &c. but P. has स &c. 12. B. 12. कथयामास चिंतितं ॥ 13. For this line B. 13· अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना । 14. For this line B. 14. ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः ।

[1]त्रिशङ्कुरथपुत्राणां वसिष्ठस्य शतं तु तत् ।
ददर्श दीर्घतपसां तप्यतां तप उत्तमम् ॥ ११ ॥
[2]सोऽभिवाद्याञ्जलिं कृत्वा तानुवाच तपोधनान् ।
[3]प्रत्याख्यातो वसिष्ठेन ह्रिया किञ्चिदवाङ्मुखः ॥१२॥
शरणं वः प्रपन्नोऽहं[4]शरण्यान् [5]शरणप्रदान् ।
[6]त्रातुमर्हथ मां सर्वे प्रपन्नं शरणागतम् ॥ १३ ॥
प्रत्याख्यातो[7]ऽस्मि गुरुणा वसिष्ठेन महात्मना ।
यष्टुकामो महायज्ञं [8]तमनुज्ञातुमर्हथ ॥ १४ ॥
[9]गुरुपुत्रानहं सर्वान् पुरस्कृत्य पुरोधसः
शिरसा प्रणतो भूत्वा याचे वस्तपसि स्थितान् ॥ १५ ॥
ते मां भवन्तः[10]सिद्धार्था याजयन्तु[11]तपोधनाः ।
[12]सशरीरो यथा स्वर्गं यज्ञेन समवाप्नुयाम् ॥ १६ ॥

---

वासिष्ठा दीर्घतपसस्तपो (a)यत्र हितेपिरे। (a) V. हि यत्र &c.G. 10. वसिष्ठशतपुत्रैस्तु यत्र तैस्तप्यते तपः ॥ but P. agrees with our text. 1. For this Sl. B. 15 त्रिशंकुस्तु महातेजाः शतं परमभास्वरं । वसिष्ठपुत्रान् ददृशे तप्यमानान्मनस्विनः ॥ 2. For his Sl. B. 16-17. सोऽभिगम्य महात्मनः सर्वानेव गुरोःसुतान् । अभिवाद्यानुपूर्व्येण ह्रिया किंचिदवाङ्मुखः ॥ अब्रवीत्स महात्मनः सर्वानेव कृतांजलिः ॥ 3. For this line G. 12-13. कुशलं चाव्ययं चैव पृष्ट्वा चैताननामयं॥ अब्रवीत् सुमहातेजा गुरुपुत्रान्नराधिपः । प्रत्याख्यातो &c. 4 G. 14. शरण्यः &c. 5. B. 17. शरणंगतः. 6. This line is wanting in B. 7. B. 18. हि भद्रं वो &c. 8. B. 18. तदनु &c. 9. For this Sl, B. 19. गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये । शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥ 10. B. 20. and G. 17. सिद्ध्यर्थं &c. but P, has सिद्धार्था &c. 11. B. 20 & G. 17. समाहिताः, but P. has तपोधनाः. 12. B. 20. सशरीरो यथाहं वै देवलोकमवाप्नुयां ॥

प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ।
गुरुपुत्रानृते सर्वान्नाहं पश्यामि[1] तत्त्वतः ॥ १७ ॥
इक्ष्वाकूणाञ्च सर्वेषां[2] वसिष्ठः [3]प्रवरो गुरुः ।
तस्मादनन्तरं सर्वे भवन्तो [4]गुरवो मम ॥ १८ ॥

आदिकाण्डे बालचरिते शतानन्दवाक्ये
त्रिशङ्कुप्रत्याख्यानम् ।

---

## LX

[5]त्रिशङ्कोर्वचनं श्रुत्वा ततः क्रोधसमन्वितम् ।
ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥
प्रत्याख्यातोऽसि[6]दुर्बुद्धे गुरुणा सत्यवादिना ।
[7]तदतिक्रम्य वचनं कस्मादस्मानुपागतः ॥ २ ॥
मूलमुत्सृज्य कस्मात् त्वं शाखास्विच्छसि लम्बितुं ।
नैतत्ते साधु यद्राजन्नस्मानिच्छसि [8]याजितुम् ॥ ३ ॥
इक्ष्वाकूणां [9]हि सर्वेषां पुरोधाः परमा गतिः ।
[10]अतः क्षमं न ते[11] सत्यं वचोऽतिक्रम्य वर्त्तितुम्॥ ४ ॥
अशक्यमिति[12]यत् प्राह वसिष्ठो भगवानृषिः ।

---

1. 21. कांचन. 2. B. 22. पुरोधाः परमागतिः । 3. P. परमो &c. 4. B. 22. दैवतं &c. 5. G. I, त्रिशंकु &.for this line B. LVIII. 1 तत स्त्रिशंकोर्वचनंश्रुत्वाक्रोध &c. 6. B. 2 दुर्म्मेधो &c. but V. & S. have दुर्बुद्धे. 7. For this line and the following Sl. B. 2. तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ 8. G. 3. सेवितुम्, but P. has याजितुम्. 9. P. चि &c. 10. For this line B. 3. न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ 11. G. 4. तस्य &c. 12. B. 4. सोवाच &c.

[1]तदस्माभिः कथं शक्यं कर्त्तुमद्य[2]बलादिव ॥ ५ ॥
[3]बालिशोऽसि सुमन्दात्मन् गम्यतां स्वपुरं पुनः ।
याजने भगवानेव शक्तोऽसौ न वयं हि ते ॥ ६ ॥
तेषां तद्वचनं श्रुत्वा क्रोध[4]व्याकुलिताक्षरम् ।
[5]राजा मन्युसमाविष्टो मुनिपुत्रानुवाच तान् ॥ ७ ॥
[6]प्रत्याख्यातो वसिष्ठेन भवद्भिस्तदनन्तरम् ।
अन्यां गतिं गमिष्यामि यष्टुं विदितमस्तु वः ॥ ८ ॥
ऋषिपुत्रास्तु तच्छ्रुत्वा[7]घोराक्षरपदं वचः ।
[8]शेपुस्ते नृपतिं क्रुद्धा[9]श्चण्डालः श्वा भविष्यसि ॥९॥
[10]इति शप्त्वा[11]च राजानं विविशुस्ते स्वमाश्रमम् ।
अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव सः ॥१०॥

---

V. has चोवाच &c. 1. For this line B. 4. तं वयं वै समाहर्त्तुं क्रतुं शक्ताः कथंचन ॥ 2. P. बलाबलं. 3. For this Sl. B. 5–6. बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः । याजने भगवान् शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ अवमानं कथं कर्त्तुं तस्य शक्ष्यामहे वयं । 4. B. 6. पर्याकुलाक्षरं. 5. For this line B. 7. सराजा पुनरेवैतानिदं वचनमब्रवीत् । 6. For this Sl. B. 7-8. प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव (a) हि ॥ अन्यां गतिं गमिष्यामि स्वस्ति वोस्तु तपोधनाः । (a) V. च. 7. B. 8. वाक्यं घोराभिसंहितं. G. घोराक्षरमिदं &c. 8. For this line B. 9. शेपुः परमसंक्रुद्धाश्चंडालत्वं गमिष्यसि । 9. G. 9 श्चंडालस्त्वं &c. but P has श्चंडालः श्वो &c, 10. For this and the following 2 slokas, B. 9–11. इत्युक्त्वा ते महात्मानो विविशुः स्वंस्वमाश्रमं ॥ (a) अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः । नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥ चित्यमाल्यांगरागश्च आयसाभरणो भवत् । (a) Before this line V. & S. read the Sl. तच्छ्रुत्वा घोरसंकाशमृषिपुत्रैश्च भाषितं । प्राविशत् स्वपुरं राजा चिन्तयामास दुःखितः ॥ 11. G. 10. तु &c. but P. has च &c.

चाण्डालदर्शनो राम सद्य एव दुराकृतिः ।
[1]अधो नीलाम्बरधरो रक्ताम्बरकृतोत्तरः ॥ ११ ॥
[2]संरब्धस्ताम्रघोराक्षः करालो हरिपिङ्गलः ।
ऋक्षचर्मनिवासी च लौहाभरणभूषितः ॥ १२ ॥
[3]तं दृष्ट्वा सचिवास्तस्य सद्यश्चाण्डालतां गतं ।
दुद्रुवुः स्वपुरं राम पौरा ये चानुयायिनः ॥ १३ ॥
[4]एक एव ततो राजा जगामाकुलचेतनः ।
शापजेन सुदुःखेन दह्यमानो दिवानिशम् ॥ १४ ॥
विश्वामित्रं महात्मानं ततः शरणमाययौ ।
स्पर्द्धमानं वसिष्ठेन शरणार्थी तपोधनम् ॥ १५ ॥
[5]विश्वामित्रोऽपि दृष्ट्वैव राजानं तं तथागतम् ।
चण्डालरूपिणं राम कारुण्यं समुपागमत् ॥ १६ ॥
[6]कारुण्याच्च महातेजा वाक्यं वाक्यविशारदः ।
अब्रवीद् गतलक्ष्मीकं राजानं घोरदर्शनम् ॥ १७ ॥
[7]किमागमनकृत्यं ते इक्ष्वाकुकुलवर्द्धन ।
अयोध्याधिपते वीर शापाच्चण्डालतां गतः ॥ १८ ॥

1. P. अथ &c. 2. संरक्त &c. 3. For this. Sl. B. 11-12. तं दृष्ट्वा मंत्रिणः सर्वे त्यज्य चांडालरूपिणं ॥ प्राद्रवन् सहिता राम पौरा येऽस्यानुगामिनः । 4. For this and the following. Sl. B. 12-13. एको हि राजा काकुत्स्थो जगाम परमात्मवान् ॥ दह्यमानो दिवारात्रं विश्वामित्रं तपोधनं । 5. For this Sl. B. 13-14. विश्वामित्रस्तु तंदृष्ट्वा राजानं विफलीकृतं ॥ चंडालरूपिणं राम मुनिः कारुण्यमागतः । 6. For this Sl. B. 14-15. कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ॥ इदं जगाद भद्रंते राजानं घोरदर्शनं । 7. For this line B.

वृनेर्ऋदन्तस्य पुत्रे आनङित्यर्थात्पितापुत्रौ तातपुत्रावित्यादावानङ्-
ऽतदभावौ ॥

**देवताद्वन्द्वे च । ६ । ३ । २६ ॥**

इहोत्तरपदे परे आनङ् । मित्रावरुणौ ॥ वायुशब्दप्रयोगे प्रति-
षेधः ॥ * ॥ अग्निवायू । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहा-
र्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एतौ हि नैकहविर्भागि-
त्वेन श्रुतं नाऽपि लोके प्रसिद्धसाहचर्यम् ॥

**ईदग्नेः सोमवरुणयोः । ६ । ३ । २७ ॥**

देवताद्वन्द्वे इत्येव । अग्नीषोमौ । अग्नीवरुणौ ॥

**इद्वृद्धौ । ६ । ३ । २८ ॥**

वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नाम-
रुतौ देवतेऽस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवतेऽस्य आग्नि-
वारुणम् । देवताद्वन्द्वे चेत्युभयपदवृद्धिः । अलौकिके वाक्ये आनङ्-
मीत्वं च बाधित्वा इः । वृद्धौ किम् । आग्नेन्द्रः । नेन्द्रस्य परस्ये-
त्युत्तरपदवृद्धिप्रतिषेधः ॥ विष्णौ न ॥ * ॥ आग्नावैष्णवम् ॥

**दिवो द्यावा । ६ । ३ । २९ ॥**

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा ॥

**दिवसश्च पृथिव्याम् । ६ । ३ । ३० ॥**

दिव इत्येव । चात् द्यावा । आदेशेऽकारोच्चारणं सकारस्य
रुत्वं मा भूदित्येतदर्थम् । द्यौश्च पृथिवी च दिवस्पृथिव्यौ । द्यावापृ-
थिव्यौ । छन्दसि दृष्टानुविधिः । द्यावा चिदस्मै पृथिवी । दिवस्पृथि-
व्योररतिरित्यत्र पदकारा विसर्गं पठन्ति ॥

**उषासोषसः । ६ । ३ । ३१ ॥**

उषस्शब्दस्योषासादेशो देवताद्वन्द्वे । उषासासूर्यम् ॥

**मातरपितरावुदीचाम् । ६ । ३ । ३२ ॥**

उदीचां किम् । मातापितरौ ॥

**पितरामातरा च च्छन्दसि । ६ । ३ । ३३ ॥**

आमागन्ता पितरामातरा चामा सोमोऽमृतत्वाय गम्यात् । चाद्विपरीतमपि न मातरापितरानूचि दिष्टौ । छन्दसि किम् । मातापितरौ ॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । ६ । ३ । ३४ ॥**

भाषितः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं शब्दस्य प्रवृत्तिनिमित्तं तदस्यास्तीति भाषितपुंस्कं शब्दस्वरूपम् । अर्शआद्यच् । भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः । निपातनात् पञ्चम्या अलुक् । षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङभावो यथा तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रा गावो यस्येति लौकिकविग्रहे चित्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः । रूपवद्भार्यः । चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनां बहुव्रीहिः । अत्र केचित् । चित्राजरतीगुः । जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः । तन्वीदीर्घाजङ्घः । त्रिपदे बहुव्रीहौ प्रथमं न पुंवत् । उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत् । पूर्वपदत्वाभावात् । उत्तरपद-

शब्दो हि समासस्थे चरमावयवे रूढः। पूर्वपदशब्दस्तु प्रथमावयवे इति वदन्ति। वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते। आनङ् ऋत इत्यत्र यथा। तेनोपान्त्यस्य पुंवदेव। चित्राजरद्गुरित्यादि। अत एव चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भे तु चित्राजरद्गुरिति भाष्यम्। कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्। जरच्चित्रगुः। कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः। स्त्रियाः किम्। ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः। स्त्रीवाचकशब्दस्येति किम्। स्त्रीप्रत्ययग्रहे भाषितपुंस्कादनूङ्। यस्मिन् तादृशस्य स्त्रीप्रत्ययान्तस्य पुंवदित्यर्थेन इडविडोऽपत्यं स्त्री इडविड्। जनपदशब्दादित्यञ्। अतश्चेति स्त्रियां लुक्। सा भार्या यस्य ऐडविडभार्य इत्यत्र इडविडित्यस्य स्त्रीप्रत्ययान्तत्वाभावेन पुंवत्वानापत्तेः। भाषितपुंस्कात् किम्। गङ्गाभार्यः। तुल्ये प्रवृत्तिनिमित्ते किम्। द्रोणीभार्यः। द्रोणशब्दः परिमाणवृत्तिः पुमान् सादृश्यनिबन्धनस्तु स्त्रियाम्। कथं गर्भिभार्यः प्रसूतभार्यः प्रजातभार्य इति। गर्भी व्रीहिः प्रसूतोऽयमित्यादिप्रयोगात् पुंस्त्वविशिष्टस्यापि बोधनाद्भाषितपुंस्कत्वमस्ति। गर्भसम्बन्धोऽपत्यापत्यवत्सम्बन्धश्चोभयत्रापि तुल्यं प्रवृत्तिनिमित्तमित्यदोषः। अनूङ् किम्। वामोरूभार्यः। समानाधिकरणे किम्। कल्याण्याः माता कल्याणीमाता। स्त्रियां किम्। कल्याणी प्रधानं यस्य स कल्याणीप्रधानः। अपूरणीप्रियादिष्विति किम्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। अप्पूरणीप्रमाण्योरित्यप्समासान्तः पुंवद्भावनिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेवेति वक्तव्यम्। रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु कल्याणपञ्चमीकः पक्षः। नद्यृतश्चेति कप्समासान्तः। केऽण इति ह्रस्वो न कपीति

निषिद्धः । अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया राचि रप्रधानम् । कल्याणीप्रियः । प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया एते प्रियादयः । सामान्ये नपुंसकम् । दृढं भक्ति र्यस्य स दृढभक्तिः । स्त्रीत्वविवक्षायान्तु दृढाभक्तिः ।

## तसिलादिष्वाकृत्वसुचः । ६ । ३ । ३५ ॥

तसिलादिषु कृत्वसुजन्तेषु स्त्रियाः पुंवत् स्यात् । परिगणनं कर्तव्यम् । अव्याप्त्यतिव्याप्तिपरिहाराय । त्रतसौ । तरप्तमपौ । चरट्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । तिल्थ्यनौ । बह्वीषु बहुच । बहुतः । दर्शनीयतरा । दर्शनीयतमा । पट्वितरा । पट्वितमेत्यादौ तु घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात् पुंवद्भावं बाधते । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीय-देशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या । अथ कथं दारदिका । अत्र हि दरदोऽपत्यं स्त्री द्व्यञ्मगधेत्यणोऽतश्चेति स्त्रियां लुक् । प्रागि-वात्कः । तसिलादिष्विति पुंवत्त्वं न प्राप्नोति कस्यापरिगणितत्वा-दिति चेत् सत्यम् । के ह्रस्वस्यावकाशो नर्तकिका । पुंवत्त्वावकाशो दारदिका । इहोभयं प्राप्नोति । पट्विकेति पुंवत्कर्मधारयेति सूत्र-भाष्यप्रामाण्येन कस्यापि परगणनं बोध्यम् ॥ शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ॥ * ॥ बह्वीभ्यो देहीति बहुशः । अल्पशः ॥ त्वतलोर्गुणवचनस्य ॥ * ॥ शुक्लाया भावः शुक्लत्वम् । शुक्लता । गुणवचनस्य किम् । कर्त्र्या भावः कर्त्रीत्वम् । शरदः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम् ॥ * ॥ भस्याढे तद्धिते । सिद्धश्च प्रत्ययविधौ ।

हस्तिनीनां समूहो हास्तिकम् । बह्वीनां पूरणी बहुतिथी । अत्र डटि चिकीर्षिते प्रागेव पुंवत्वम् । अन्यथा पुंवत्वापेक्षया प्रत्ययसन्नियोगशिष्टतिथुगागमस्यान्तरङ्गत्वेन पूर्वं प्रवृत्तौ ङ्यन्ते भत्वाभावात् पुंवत्वानापत्तिः । स्पष्टं चेदं बहुपूगगणसङ्घस्येति सूत्रे भाष्ये ॥ अढे किम् । रौहिणेयः । स्त्रीभ्यो ढगिति ढोऽत्र गृह्यते । अग्नेर्ढगिति ढकि तु पुंवदेव । अग्नायी देवताऽस्य स्थालीपाकस्याग्नेयः ॥ सपत्नीशब्दस्त्रिधा । शत्रुपर्यायात् सपत्नशब्दाच्छार्ङ्गरवादित्वान् ङीन्येकः । समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः । स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृतीयः । आद्ययोः शिवाद्यण् । सपत्न्या अपत्यं सापत्नः । तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव न त्वण् । शिवादौ रूढयोरेव ग्रहणात् । सापत्यः । कुण्डिन्या अपत्यं गर्गादित्वाद्यञ् कौण्डिन्यः । अत्र पुंवद्भावे सति टिलोपे च कौण्ड्य इति प्राप्नोति । आगस्त्यकौण्डिन्ययोरिति निपातनात् सिध्यति । ठक्छसोश्च । भवत्याश्छात्रा भावत्काः । भवदीयाः । एतद्वार्तिकमेकतद्धिते चेति सूत्रं च न कर्तव्यम् । सर्वनाम्नो वृत्तिमात्रे इति दक्षिणोत्तराभ्यामिति सूत्रस्थभाष्यकारेष्ट्या गतार्थत्वात् । सर्वमयः । सर्वकाम्यति । सर्विका भार्या यस्य सर्वकभार्यः । सर्वप्रिय इत्यादि । पूर्वस्यैवेदम् । भस्त्रैषाद्वेति लिङ्गात् । तेनाकचि एकशेषवृत्तौ च न । सर्विका । सर्वाः । मात्रग्रहणं क्वचित् सर्वनामत्वेन दृष्टानां संप्रति संज्ञाभावेऽपि पुंवद्भावार्थम् । तेन दक्षिणपूर्वायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः ॥

## कङ्मानिनोश्च । ६ । ३ । ३६ ॥

एतयोः परतः पुंवत् । एनीवाचरति एतायते । श्येनीवाचरति श्येतायते । कुमारीवाचरति कुमारायते । हरिणीव हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । युवतिरिव युवायते । पट्वीव पटूयते । पट्वीमृद्व्याविव पट्वीमृदूयते । स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः । भाषितपुंस्कादित्येव । सपत्नीयते ॥

**न कोपधायाः । ६ । ३ । ३७ ॥**

कोपधायाः स्त्रिया न पुंवत् ॥ पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । पाचिकायते । मद्रिकामानिनी ॥ कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् ॥ * ॥ नेह । पाका भार्या यस्य स पाकभार्यः ।

**संज्ञापूरण्योश्च । ६ । ३ । ३८ ॥**

अनयोर्न पुंवत् ॥ दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा ॥

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । ६ । ३ । ३९ ॥**

वृद्धिशब्द आवर्तते । वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् ॥ स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । वृद्धिशब्देन किम् । तावद्भार्यः । रक्ते तु काषायी कन्या यस्य स काषायकन्यः । विकारे तु हैमी मुद्रिकाऽस्य हैममुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः । अतएव प्रवाहणस्य

परस्य वृद्धिर्न । पूर्वस्य तु वेत्यर्थके प्रवाहणस्य ढे इति सूत्रे प्रवाहणेयीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवत्वप्रतिषेधो न प्राप्नोति । मा भूदेवं जातेरिति भविष्यतीति भाष्यं सङ्गच्छते ॥

## स्वाङ्गाच्चेतः । ६ । ३ । ४० ॥

स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात् किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः ॥ अमानिनीति वक्तव्यम् ॥ * ॥ सुकेशमानिनी ॥

## जातेश्च । ६ । ३ । ४१ ॥

जातेः परो यः प्रत्ययस्तदन्ता स्त्री न पुंवत् । शूद्रा भार्या यस्य शूद्राभार्यः । ब्राह्मणीभार्यः । सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढे इति भवत्येव ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२ ॥

कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात् पर ऊङभावो यस्मिन् तथाभूतं पूर्वं पुंवत् ॥ पूरणीप्रियादिष्वप्राप्तः पुंवद्भावो विधीयते । महानवमी । कृष्णचतुर्दशी । तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । सौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । एवं पाचकजातीया । पाचकदेशीयेत्यादि । कुक्कुट्यादीनामण्डादिषु ॥ * ॥ कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृगक्षीरम् । काकशावः ॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३ ॥

भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूप-कल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु ॥ ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते । चेलादीनि वृत्तिविषये कुत्सनवाचीनि । तैः कुत्सितानि कुत्सनैरिति समासः । ङ्यः किम् । दत्तातरा । अनेकाचः किम् । नद्याः शेषस्यान्यतरस्यामिति वक्ष्यति । भाषितपुंस्कात् किम् । आमलकीतरा । कुवलीतरा ॥

**नद्याः शेषस्यान्यतरस्याम् । ६ । ३ । ४४ ॥**

अङ्यन्तनद्याः ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् ॥ ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा । कृन्नद्या न ॥ * ॥ लक्ष्मीतरा ॥

**उगितश्च । ६ । ३ । ४५ ॥**

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् ॥ विदुषितरा । ह्रस्वाभावे तसिलादिष्विति पुंवत् । विद्वत्तरा । वृत्त्यादिषु तु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम् ॥

**आन्महतः समानाधिकरणजातीययोः । ६ । ३ । ४६ ॥**

महत आकारोऽन्तादेशः स्यात् समानाधिकरणे उत्तरपदे जातीये च परे ॥ महाब्राह्मणः । महादेवः । महाजातीयः । समानाधिकरणे किम् । महतः सेवा महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः सन्महदिति समासो ग्रहीष्यत इति चेन्महाबाहुर्न स्यात् । तस्माल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति परिभाषा नेह प्रवर्तते ।

समानाधिकरणग्रहणसामर्थ्यात् । अमहान्महान्सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र तु गौणत्वान्महदर्थस्य न भवत्यात्वम् । एकादशेत्यत्र तु आदिति योगविभागादात्वम् । प्रागेकादशभ्य इति निर्देशाद्वा । महतीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावे कृते आत्वम् । महाजातीया ॥ महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च ॥ * ॥ असामानाधिकरण्यार्थमिदम् । महतो महत्या वा घासो महाघासः महाकरः । महाविशिष्टः ॥ अष्टनः कपाले हविषि ॥ * ॥ अष्टाकपालः ॥ गवि च युक्ते ॥ गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः । अष्टागवं शकटम् । अच् प्रत्यन्ववेत्यचाजिति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारोऽष्टगवम् । तद्युक्तत्वाच्छकटमष्टागवमिति वा ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ६ । ३ । ४७ ॥

आत् स्यात् । द्वौ च दश च द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । द्व्यष्टनः किम् । पञ्चदश । संख्यायां किम् । द्वैमातुरः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः । प्राक्शतादिति वक्तव्यम् ॥ * ॥ नेह । द्विशतम् । द्विसहस्रम् । अष्टशतम् । अष्टसहस्रम् ॥

## त्रेस्त्रयः । ६ । ३ । ४८ ॥

त्रिशब्दस्य त्रयस् स्यात् पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिदश । त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ६ । ३ । ४९ ॥

द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे। द्विचत्वारिंशत्। द्वाचत्वारिंशत् । अष्टचत्वारिंशत्। अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत्। एवं पञ्चाशत्षष्टिसप्ततिनवतिषु।

## हृदयस्य हृल्लेखयदण्लासेषु । ६ । ३ । ५० ॥

हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेखेत्यणन्तस्य ग्रहणम्। घञि तु हृदयलेखः। लेखग्रहणमेव ज्ञापकम्। उत्तरपदाधिकारे तदन्तविधिर्नास्तीति॥

## वा शोकष्यञ्रोगेषु । ६ । ३ । ५१ ॥

हृच्छोकः। हृदयशोकः। सौहार्द्यम्। सौहृदय्यम्। हृद्रोगः। हृदयरोगः। हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थमिदम्॥

## पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२ ॥

एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात्। पादाभ्यामजतीति पदाजिः। पदातिः। अज्यतिभ्यां पादे चेतीण् प्रत्ययः। अजेर्व्यभावो निपातनात्। पदगः। पदोपहतः॥ पादशब्दो वृषादित्वादाद्युदात्त इति पदादेश उपदेश एवान्तोदात्तो निपात्यते। तेन पदोपहत इति तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्ते तदेकादेशः पचे स्वरितः। पदाजिरित्यादौ तु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम्॥

## पद्यत्यतदर्थे । ६ । ३ । ५३ ॥

पादस्य पद् स्यात्तदर्थे यति परे। पादौ विध्यन्ति पद्याः

शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम् ॥ इके चरतावुपसंख्यानम् ॥ * ॥ पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ॥

**हिमकाषिहतिषु च । ६ । ३ । ५४ ॥**

पद्धिमम् । पत्काषी । पद्धतिः ॥

**ऋचः शे । ६ । ३ । ५५ ॥**

ऋचः पादस्य पत् स्याच्छे परे । गायत्रीं पच्छः शंसति । पादम्पादमित्यर्थः । ऋचः किम् । पादशः कार्षापणं ददाति ॥

**वा घोषमिश्रशब्देषु । ६ । ३ । ५६ ॥**

पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ॥ निष्के चेति वाच्यम् ॥ * ॥ पन्निष्कः । पादनिष्कः ॥

**उदकस्योदः संज्ञायाम् । ६ । ३ । ५७ ॥**

उदमेघः ॥ उत्तरपदस्य चेति वक्तव्यम् ॥ * ॥ क्षीरोदः ॥

**पेषंवासवाहनधिषु च । ६ । ३ । ५८ ॥**

उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥

**एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ ॥**

उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्ये किम् । उदकपर्वतः ॥

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । ६ । ३ । ६० ॥**

उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः । इत्यादि ॥

### इको ह्रस्वोऽङ्यो गालवस्य । ६ । ३ । ६१ ॥

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ इयङुवङ्भाविनामव्ययानाञ्च नेति वक्तव्यम् ॥ * ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः । अभ्रुकुंसादीनामिति वक्तव्यम् ॥ * ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेनेति विधीयत इति व्याख्यानान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रूवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ॥

### एकतद्धिते च । ६ । ३ । ६२ ॥

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च ॥ एकस्या आगतमेकरूप्यम् । एकक्षीरम् ॥

### ङ्यापोः संज्ञाछन्दसोर्बहुलम् । ६ । ३ । ६३ ॥

रेवतिपुत्रः । अजक्षीरम् ॥

### त्वे च । ६ । ३ । ६४ ॥

त्वप्रत्यये ङ्यापोर्बहुलं ह्रस्वः संज्ञाछन्दसोः । अजत्वम् । रोहिणित्वम् । संज्ञाया असम्भवाच्छन्दस्येवोदाहरणम् ॥

### इष्टकेषीकामालानां चिततूलभारिषु । ६ । ३ । ६५ ॥

इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तर-

पदेषु ह्रस्वः स्यात् ॥ इष्टकचितम् । पक्केष्टकाचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ॥

**खित्यनव्ययस्य । ६ । ३ । ६६ ॥**

खिदन्ते परेऽजन्तस्य पूर्वपदस्यानव्ययस्य ह्रस्वः स्यात् । खट्वम्मन्यः । कीलालपम्मन्यः । कालिम्मन्यः । हरिणिम्मन्यः । शुनिन्धयः । मुमा ह्रस्वो न बाध्यते अन्यथा ह्रस्वविधानमनवकाशं स्यात् । अजन्तस्य किम् । वाङ्मन्यः । कालिम्मन्या । हरिणिम्मन्येत्यादौ ह्रस्वः परत्वात् पुंवत्वं बाधते । अनव्ययस्य किम् । दिवामन्या रात्रिः । अनव्ययस्येत्येव ज्ञापकमिह खिदन्तग्रहणस्य ॥

**अरुर्द्विषदजन्तस्य मुम् । ६ । ३ । ६७ ॥**

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य । अरुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । द्विषन्तं तापयतीति द्विषन्तपः । परन्तपः । जनमेजयः । अनव्ययस्य किम् । दिवामन्या रात्रिः । अव्ययीभावस्य चेष्यते ॥ * ॥ उपकुम्भम्मन्यः ॥

**इच एकाचोऽम् प्रत्ययवच्च । ६ । ३ । ६८ ॥**

अमित्यावर्तते । इजन्तादेकाचोऽम् स्यात् स च स्वाद्यम्वत् खिदन्ते परे । औतोम्शसोः । गाम्मन्यः । वाम्शसोः । स्त्रियम्मन्यः । स्त्रीम्मन्यः । ऋतो ङिसर्वनामस्थानयोः । नरम्मन्यः । अचिश्नुधातु । श्रियम्मन्यः । भ्रुवम्मन्यः । प्रत्ययत्वमात्रातिदेशे आत्वादि न सिध्येत् । सामान्यातिदेशे विशेषानतिदेशात् । अस्यामः सुपो धात्विति लुग् न विधानसामर्थ्यात् । इचः किम् । त्वद्मन्यः ।

श्रियमात्मानं मन्यते श्रिमन्यं कुलमित्यत्र तु भाष्यकारवचनात् । यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तते प्रष्ठी गणिकेति तथा श्रीशब्दस्य परित्यक्तस्वलिङ्गस्य क्लीबे वर्तमानस्य ह्रस्वो नपुंसक इति ह्रस्वः । मुम् तु नापवादेनामा बाधात् । स्वमोर्नपुंसकादित्यमो लुक् । अस्य तु लुको नानेन बाधो मध्येऽपवादन्यायात् ॥ नन्वेवमपि असिद्धपरिभाषया बहिरङ्गस्यामोऽन्तरङ्गो लुग् न भविष्यति । एवं तर्हि नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुमिहैव दोषः स्यात् द्विषन्तपः परन्तप इति संयोगान्तलोपो न स्यात् । मोऽनुस्वारश्च न स्यात् । न चैषा त्रिपाद्यां न प्रवर्तते । त्रिपाद्या असिद्धत्वादिति वाच्यम् । पूर्वस्मिन् कर्तव्ये परस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावेन त्रिपाद्यां कार्यकालपक्षेऽपि तदप्रवृत्तिमतस्य निर्युक्तिकत्वादिति दिक् ॥ एतेन श्रियम्मन्यमिति भवितव्यमिति भाष्ये पूर्वपक्ष्युक्तिः प्रत्युक्ता । अतएव तस्मात् श्रिमन्यमित्येव भवितव्यमित्यन्ते उपसंहृतं सिद्धान्तिनेति भाष्यविचारकुशला विभावयन्तु ॥

## वाचंयमपुरन्दरौ च । ६ । ३ । ६९ ॥

वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । पुरं दारयतीति पुरन्दरः । वाचि यमो व्रते इति पूःसर्वयोर्दारिसहोरिति च खच् ॥

## कारे सत्यागदस्य । ६ । ३ । ७० ॥

मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ अस्तोश्चेति वक्तव्यम् ॥ * ॥ अस्तुङ्कारः ॥ * ॥ भक्षस्य छन्दसि ॥ भक्षङ्कारः ।

छन्दसि किम् । भद्रङ्कारः । धेनोर्भव्यायाम् । धेनुम्भव्या ॥ लोकस्य पृणे ॥ * ॥ लोकम्पृणः । पृण इति मूलविभुजादित्वात् कः ॥ इत्ये ऽनभ्याशस्य ॥ * ॥ अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥ भ्राष्ट्राग्न्योरिन्धे ॥ * ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ गिलेऽगिलस्य ॥ * ॥ तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः ॥ गिलगिले च ॥ * ॥ तिमिङ्गिलगिलः ॥ उष्णभद्रयोः करणे ॥ * ॥ उष्णङ्करणम् । भद्रङ्करणम् । सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड् वा । सूतपुत्री । सूतदुहितेत्यादि । टित्वान् ङीप् । पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि न षङिति निषेधो न । तस्य स्त्रन्नेभ्य इति ङीप्मात्रबाधकत्वात् । टित्वसामर्थ्याच्च शार्ङ्गरवादिष्वपि पुत्रशब्दः पठ्यते । तेन शैलपुत्री पुत्रीव हर्षं हृदये तनोतीत्यादि सङ्गच्छते ॥ नन्वत्र टित्वाण्ङीपि कृते उदात्तनिवृत्तिस्वरेणोदात्तः । ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे विशेषाभावादिदमनर्थकमिति चेत् । अत्रोच्यते । सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे पुत्रः पुंभ्य इत्यनेन पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रशब्दस्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुत्रीशब्दोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः । सानुबन्धकत्वात् । अतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति दिक् ॥

## श्येनतिलस्य पाते ञे । ६ । ३ । ७१ ॥

श्येनतिलयोर्मुमागमः स्यात् ञप्रत्ययान्तपातशब्दे उत्तरपदे ॥ श्येनपातोऽस्यां वर्तते श्यैनम्पाता मृगया । तिलपातोऽस्यां वर्तते तैलम्पाता स्वधा । घञः साऽस्यां क्रियेति ञ इति ञप्रत्ययः । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता । ञे किम् । श्येनपातः ॥

## रात्रेः कृति विभाषा । ६ । ३ । ७२ ॥

रात्रिंचरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति पूर्वविप्रतिषेधेन नित्यमेव मुम् । रात्रिम्मन्यः ॥

## नलोपो नञः । ६ । ३ । ७३ ॥

नञो नस्य लोपः स्यादुत्तरपदे । अब्राह्मणः । नञः सानुबन्धकस्य ग्रहणं किम् । कर्णपुत्रः । प्रश्नपुत्रः । पामनपुत्रः । नैकधा । अत्र नशब्देन सुप्सुपेति समासः । एवमपि स्त्रैणपुत्रे कस्मान्न भवति । प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्यानन्यार्थत्वात्तातङ्न्यायात् ॥ नञो नलोपस्तिङि क्षेपे । * ॥ अपचसि त्वं जाल्म ॥

## तस्मान्नुडचि । ६ । ३ । ७४ ॥

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् ॥ अनश्वः । तस्मात् किम् । नञ एव मा भूत् । ननु नुक् क्रियताम् । इत्थं सति तदोः सः सावित्यत्र तौरित्युक्तावपि अनेष इत्यत्र दोषोऽपि नास्ति । न च नलोपापत्तिर्विधानसामर्थ्यादिति चेन्न । ङमुडापत्तेः । न अः अनः । तमाचष्टे इति णिजन्तात्क्विपि णिटिलोपे अन्मित्रं यस्यान्मित्र इत्यादौ नञो जरमरेति स्वरापत्तेश्चेति दिक् ॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ६ । ३ । ७५ ॥

पादिति शत्रन्तः । वेदा इत्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुञ्चतीति नमुचिः । न कुलमस्य नकुलम् । नखमस्य नखम् । न स्त्री पुमान् नपुंसकम् । स्त्रीपुंसयोः पुंसक-

मेतत्पदाव्यवहितोत्तरमभिसंहितं भवत्त्वित्यभिसन्धापयितुरिच्छेति पाठः । एतत्पदं कर्मत्वपदं एतत्पदाव्यवहितोत्तरं अभिसन्धातुर्ज्ञातुं प्रति अभिसन्धापयितुर्ज्ञापयितुर्मैत्रादेरिच्छेत्यन्वयः । अभिसन्दधातु इत्यभिसन्धापयितुरिति क्वचित्पाठः तथा चाभिसन्दधात्वभिसन्धानं करोत्वित्यर्थः । अत एव । आसत्तेस्तात्पर्यघटितत्वादेव । शुकस्य तादृशेच्छाया अभावादव्याप्तेराह । शुकेति तदपीति क्लृप्ततत्प्रतीतीच्छया वक्त्रभिसन्धानरूपार्थतात्पर्यज्ञानविलम्बेन शाब्दबोधविलम्बाभावादित्यर्थः आदिना पदज्ञानपदार्थोपस्थित्याकाङ्क्षायोग्यतासंग्रहः तादृशोपस्थितेरावश्यकत्वमाह नहीति घटपदादिति । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन घटपदरूपसम्बन्धिज्ञानं गगनस्मारकमिति भावः । ननु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरित्युक्तं । तत्र पदज्ञानानां पदार्थोपस्थितीनां चाशुविनाशिनां क्रमिकाणां मेलकाभावात्कथं तावत्क्रियाकारकादिघटितवाक्यार्थबोध इत्याह नन्विति । आशुतरविनाशिनामेककालोत्पन्नचैत्रादिज्ञानानां मेलनसम्भवात्क्रमिकाणां घटादिपदानां मेलनसम्भवाच्चोभयमुक्तं । क्रमिकेति । क्रमिकघटादिपदानुभवजन्यानेकसंस्काराणामुद्बोधकविधया पदार्थोपस्थितिजनकत्वमित्यर्थः । युगपदिति तथा च खले कपोतन्यायेन युगपदन्वयबोधोपपत्तेरिति भावः । तदुक्तं वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति । पदार्थानां वृद्धयुवशिशुसाम्यं तु चिरसन्निहितोपस्थितिविषयत्वेन पदार्थोपस्थितेः पूर्वपश्चाद्वाकाङ्क्षायोग्यतासत्तितात्पर्यविषयकं समूहालम्बनं ततः शाब्दबोध इति सङ्क्षेपार्थो बोध्य इति । ननु राजपुरप्रवेशन्यायेनैव खण्डवाक्यार्थबोधोत्तरं तावत्पदार्थसमूहालम्बनस्मृत्यान्वयस्तदुक्तं यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवावगम्यत इति कथं तावत्पदार्थानां खले कपोतन्यायेन बोध इति चेन्न । न वयं खले कपोतन्यायेनैव सर्वत्रान्वयबोध इति ब्रूमोऽपि तु दण्डी कुण्डली वासस्वी घटं जानातीत्यत्र यत्नेत

इति यत्रोक्तं तत्र दण्डादिपदार्थानामेकदान्वयबोधे तात्पर्यमथ च तेषामेकदैव स्मृतिः तत उद्बोधकसमवधाने सति निखिलपदार्थानामुपस्थितिस्तत्र खले कपोतन्यायेनैवान्वयबोधः । यत्र च विशिष्टवैशिष्ट्यबोधे तात्पर्यं तत्र खण्डवाक्यार्थबोधजन्य एव महावाक्यार्थबोधो राजपुरप्रवेशन्यायेनेति । अत एव वृत्त्या पदजन्यपदार्थोपस्थितिमात्रस्यैवासत्तित्वादेव । तृतीयान्तेति । व्यवधाने सत्यपि तादृशपदार्थोपस्थितौ शाब्दबोधस्य जायमानत्वादिति भावः । ननु तर्हि गिरिर्भुक्तमग्निमानित्यादावग्निपदार्थस्य व्यवहितोपस्थितौ कथं न शाब्दबोध इत्यत आह व्यवहितेति तथा च तत्रैकस्या उपस्थितेर्नाशात्तत्पदार्थोपस्थित्यभावादेव न शाब्दबोध इति भावः । अत्र प्रभाकराः । द्वारमित्यत्राध्याहृतानां पिधानाद्यर्थानामप्यन्वयबोधात्कथं पदजन्यपदार्थोपस्थितिः कारणं । न च पदमेवाध्याह्रियतामिति वाच्यम् अर्थस्यैवान्वयनिरूपकत्वेनान्वयोगित्वात् शब्दस्मृतौ सत्यामप्यर्थस्मृतेरावश्यकत्वात् । न चैवं पचतीत्यादौ दैवात्स्मृतकपालादीनामप्यन्वयबोधः स्यादिति वाच्यम् । कपालादेस्तात्पर्यविषयत्वाभावात् । अन्यथा तवापि दैवात्स्मृतकपालादेरप्यन्वयबोधः स्यादिति । अत एव किं पचतीति पृष्टे सति तात्पर्ये वधूपदर्शितकलापादेरप्यन्वयबोध इत्याहुस्तदपरे न क्षमन्ते । द्वारप्रकारककर्मत्वविशेष्यकबोधे द्वारपदोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वेन कर्मत्वप्रकारकधात्वर्थविशेष्यकबोधे धातुजन्योपस्थितित्वेन पिधानप्रकारककृतिविशेष्यकबोधे पिधानपदोत्तरकृत्युपस्थापकविभक्तिज्ञानत्वेन हेतुत्वमिति पदाध्याहार आवश्यक इति दिक् ॥

**तात्पर्यं चेदं एतस्मिन्नर्थेऽस्यान्वयं प्रत्याययत्विति प्रयोक्तुरिच्छा प्रयोक्ता चाभिसन्धापयितृमात्रं । न तु वक्तैव । मौनिश्लोकाव्याप्तेः । शुकवाक्ये च भगवदिच्छैव गतिः । तस्य च निश्चयो हेतुः ।**

**अस्य च संशये व्यतिरेकनिश्चये चान्वयाबोधात् । तद्भ्रमे चान्वयबोधाच्चेति संक्षेपः ।**

तात्पर्यज्ञानस्यापि शाब्दबोधोपयोगित्वे तद्विषयीभूततात्पर्यं निर्वक्ति तात्पर्यमिति इदं गङ्गादिपदं । अस्मिन्नर्थे गङ्गाद्यर्थे । अत्र सप्तम्यर्थो विषयत्वं । अस्य श्रोतुः । अन्वयं प्रत्याययतु । अन्वयबोधं जनयतु तथा च यदा गङ्गादिपदं प्रवाहविषयकं ज्ञानं जनयत्वितीच्छा तदा प्रवाहविषयकमेतज्ज्ञानं जायते यदा गङ्गादिपदं तीरविषयकं ज्ञानं जनयत्वितीच्छा तदा तीरविषयकमेवज्ञानमित्यर्थः । ननु प्रयोक्ता वक्ता । तथा च मौनिश्लोकादौ वक्तुरभावात्कथं तद्घटितात्पर्यमित्यत आह प्रयोक्तेति । अभिसन्धापयितृमात्रं तथा च यत्र वक्ता संभवति तत्रानुसन्धानकर्त्ता वक्ता । यत्र च मौनिश्लोकादौ वक्ता न संभवति तत्रानुसन्धापको मुनिरेवेति नानुपपत्तिगन्धोपीति । प्रयोक्तृपदार्थस्य वक्तृमात्रार्थत्वे बाधकमाह मौनीति। ननु तात्पर्यज्ञानं न शाब्दबोधे हेतुस्तेन विनापि शुकवाक्यादन्वयबोधात् । न च कथं तर्हि नानार्थस्थलेऽर्थप्रत्यय इति वाच्यम् । प्रकरणादिज्ञानादेवार्थप्रत्ययादित्यत आह शुकवाक्ये चेति। भगवदिच्छैव भागवतस्तादृशेच्छैव। अथ नानार्थस्थले एकदोभयबोधाभिप्रायेण सैन्धवमानयेत्याभिहितं तत्रोभयबोधे सकृदुच्चरितः शब्दः सकृदर्थं बोधयतीति व्युत्पत्तिभङ्गः स्यादिति चेन्न । उभयार्थयोरेकोच्चारणेप्यावृत्त्यान्वयबोधात् । पुष्पवन्तादिपदे दिवाकरनिशाकरादि वृत्तिद्वित्वस्यैव शक्यतावच्छेदकत्वादिति । तस्य च तात्पर्यस्य च । तात्पर्यनिश्चयस्य हेतुत्वे यत्संशयव्यतिरेकौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति व्याप्तिं सूचयति । अस्येति । नन्वियं व्याप्तिरप्रयोजिकेत्यत आह तद्भ्रमे चेति । यद्वा ननु स्वरूपसदेव तात्पर्यं कारणं न तु तज्ज्ञानमिति दूरे तन्निश्चयस्य कारणत्वमित्यत आह तद्भ्रमे चेति । तद्भ्रमे तात्पर्यभ्रमे । अत्रायं संक्षेपार्थः । यथा वेदस्यानादिपरम्परागतो

च्चारणत्वादुच्चारणपरतन्त्रं न तु केन चिदुच्चरितं तथा तात्पर्यस्याप्यनादित्वं ननु कस्य चिदितिपूर्वपूर्वाध्यापकपरम्परयानादित्वसंभवादिति चेन्न । वेदः पौरुषेयो वाक्यत्वाद्भारतवदित्यनुमानेन वेदस्य सादित्वे सिद्धे तद्दृष्टान्तेन तात्पर्यस्यानादित्वसाधनस्यानुचितत्वात् । अत एवेश्वरसिद्धिः सूचितेति विवेचितं चेदमधस्तादिति ॥

**सोऽयं शब्दो द्विविधः । विधिरर्थवादश्च । तत्र विध्यभिधायकः प्रत्ययस्तद्घटितवाक्यं वा विधिः ।**

अथाचारमूलत्वं वेदस्य प्रवर्त्तकज्ञानजनकत्वमन्तरेण नोपपद्यमिति प्रवर्त्तकं ज्ञानं निरूपयितुम्भूमिकामारचयति । सोयमिति । विध्यभिधायकप्रत्ययः । कर्त्तव्यार्थोपदेशप्रत्ययः । विध्यभिधायकत्वं विधिशब्दस्याप्यस्तीत्यतः प्रत्यय इत्युक्तं । ननु शब्दस्य विध्यर्थवादात्मकत्वभेदेन द्वैविध्यं तत्र विधिसमभिव्याहृतस्यैवार्थवादात्मकत्वमिति वक्ष्यते तथा च प्रत्ययमात्रस्य विधित्वे तत्समभिव्याहृतवाक्यस्य क्वान्तर्भाव इत्यत आह तद्घटितेति । अभिधेयविधिश्चेति । विधेरभिधेय कार्यत्वमित्यर्थः यद्वा भट्टमताभिप्रायेणाभिधेय इति सविसर्गः पाठः विधिश्चेति भिन्नैव फक्किका । अभिधेयोऽभिधारूपव्यापारवानित्यर्थः । अत्र भट्टानामयमाशयः स्वेष्टसाधनताज्ञानं न प्रवर्त्तकं वैदिकनित्यप्रवृत्तौ व्यभिचारात् । किन्त्वभिधाज्ञानं । अभिधा च प्रवृत्तिजनकः प्रवर्त्तयितुर्धर्मः स एव प्रवर्त्तनापदवाच्यो भावनापदवाच्योपि सचाचेतनस्य लिङ्गादेः पदार्थान्तरं । चेतनस्य तु स्वेच्छारूपोऽहमेनं प्रवर्तयामित्यनुभवसिद्धः । प्रवृत्तिरपि द्विधा स्वेच्छया परप्रेरणया च । अहं स्वयमेव प्रवर्त्तयामीति व्यवहारात् । एवमानयनादावाचार्यो मां प्रवर्त्तयतीति यागादौ विधिर्मां प्रवर्त्त

यतीति व्यवहाराच्च तथा च यत्र शब्दश्रवणोत्तरं प्रवृत्तिस्तत्र विधेराचार्यादेश्च स्वतो न प्रवर्त्तकत्वं सामर्थ्याभावात्किं तु स्वप्रवर्त्तनाज्ञापने परेच्छोत्पादनद्वारेति सिद्धं स्वनिष्टप्रवर्त्तनाज्ञापनेन वेदः प्रवर्त्तक इति । प्रवर्त्तनाज्ञानं प्रवृत्तौ हेतुरिति शब्दश्रवणोत्तरं प्रवृत्तिदर्शनात् बालेनान्वयव्यतिरेकाभ्यां तथैव निश्चितत्वात् । ननुप्रवर्त्तनाज्ञापनेन वेदः प्रवर्त्तक इति को वा मन्त्रपाठः पठ्यत इति चेच्च । विवादविषयो लिङ्परनिष्ठव्यापारानुकूलस्वनिष्टव्यापारवान् परनिष्टव्यापारजनककरणत्वात् दण्डादिवदित्यनुमानात् । भवति च दण्डादौ चक्रनिष्टभ्रमिरूपो व्यापारस्तज्जनकत्वं स्वनिष्टस्पन्दनद्वारैव । एवं काष्ठेऽपि तण्डुलनिष्टविक्लित्तिजनकत्वं स्वनिष्टप्रज्वलनद्वारैवेति । तथा च यत्परनिष्ठव्यापारजनकं तत्करणं तत्तदनुकूलधर्मवदिति व्याप्तिरत्र बोध्या । दण्डादेः स्वनिष्ठव्यापारजननेस्वनिष्ठव्यापारस्य नियमेनानपेक्षणात्परनिष्ठेत्युक्तम् दण्डनिष्ठस्पन्दनस्य चक्रभ्रमिजनकत्वात्तत्र स्पन्दने व्यभिचारवारणाय हेतौ सामान्यव्याप्तौ च करणेत्युक्तं । स च शाब्दीभावनाऽऽर्थीभावनाभेदेन द्विविधः । द्वयोरपि किं केन कथमित्यंशत्रयवत्त्वं किं भाव्यं कथं भाव्यमित्याकाङ्क्षायाउभयत्र तुल्यत्वात् । तत्र शब्दभावनायाः प्रवृत्तिर्भाव्या केन भाव्यमित्याकाङ्क्षायां लिङ्गादिपदं प्रवर्त्तनाशक्तमित्याकारकशक्तिग्रहेण भाव्यं शक्तिग्रहमन्तरेण शाब्दबोधानुदयात्तदनुदये प्रवृत्तेरनुदयात्कथं भाव्यमित्याकाङ्क्षायां वायुर्वैक्षेपिष्ठादेवतेत्यादिवाक्यानामिति कर्त्तव्यतारूपप्रशस्तफलबोधकत्वेनाङ्गतयोपयोगः । न च प्रवर्त्तनाज्ञाने सति प्रवृत्तेरुदयात्स्तुतिरूपेतिकर्तव्यतास्वरूपायाः प्ररोचनायाः किं प्रयोजनमिति वाच्यम् कष्टं कर्मेति न्यायादुपायेऽन्यत्र द्वेषशालिनः प्रवर्त्तेरनुत्पादात् । तथा च प्रशस्तफलबोधकत्वेन तत्र द्वेषं निराकुर्वती श्रुतिः प्रशस्तफलबोधिकेत्युपयुज्यते । तथा च शब्दभावनाया अर्थभावनाया अर्थभावनारूपप्रवृत्तिर्भाव्या । शक्तिग्रहः करणं स्तुत्यर्थवाद इतिकर्त्तव्यता । एवं च शक्ति-

ग्रहेण स्तुत्यर्थवादोपकृते न विधिः पुरुषप्रवृत्तिं भावयेदिति लक्षणशब्द कल्पनेन शब्दभावनान्वयबोधः । तस्यांशत्रयमुक्तं भट्टैः । लिङोभिधा सैव च शब्दभावना भाव्या च तस्यां पुरुषप्रवृत्तिः । सम्बन्धबोधः कारणं तदीयं प्ररोचना चाङ्गतयोपयुज्यत इति । लिङः अभिधानामकः कश्चनव्यापारविशेषः । सैव । अभिधैव शब्दभावनापदवाच्याप्यभिधैवेत्यर्थः तस्याः शब्दभावनायाः । सम्बन्धबोधः लिङादिपदं प्रवर्त्तनाशक्तमित्याकारकशक्तिग्रहः । प्ररोचना प्रशस्तफलबोधकं वाक्यमिति । अर्थभावना हि चेतननिष्टक्रियानुकूलो व्यापार एव । तस्याः स्वर्गः कर्म यागः करणं प्रयाजादीति कर्त्तव्यता । एवं च स्वर्गकर्मिका यागकरणिका प्रयाजादीति कर्त्तव्यताका भावना स्वर्गकामकर्त्तृकेत्यर्थभावनाबोधः । सा पुनः शब्दभावनातोऽतिरिक्ता सर्वाख्यातपदवाच्या । तदुक्तं अभिधाभावनामाहुरन्यामेव मिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचर इति । अर्थित्वादर्थः पुरुषः धर्मधर्मिणोरभेदात् । अर्थनिष्ठ भावनाया अप्यर्थात्मकत्वमिति । अर्थार्थेति पाठे तु अर्थार्थत्वं अर्थगोचरत्वमित्यर्थः इयमपि किं केन कथमित्याकाङ्क्षायाः सत्त्वादंशत्रयवती किम्भाव्यमित्याकाङ्क्षायां स्वर्गो भाव्यः केन भाव्य इत्याकाङ्क्षायां यागेन भाव्यं । तथा कथं भाव्यमित्याकाङ्क्षायां प्रयाजादिसहकारेण भाव्यं । तथा च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ ज्योतिष्टोमकरणिकास्वर्गकामकर्तृका स्वर्गकर्मिका प्रयाजादीतिकर्त्तव्यताका भावनेति बोधः । तथा च सर्वत्राख्यातार्थभावनादिविशेष्यक एव बोधः । न च पदोपस्थापितपदार्थस्यैव शाब्दबोधविषयत्वादितिकर्त्तव्यतायाः कथं शाब्दबोधविषयत्वमिति वाच्यम् । प्रधानविधिविधेयत्वमङ्गानामित्यनुरोधात्तस्यापि शाब्दविषयताया उचितत्वात् । यदि च तन्न स्वीक्रियते तदा न भवत्येव तस्याः शाब्दबोधविषयत्वमिति । अथ यागस्य न भावनाकरणत्वं भावनाजन्यत्वादिति चेन्न करणत्वं फलोद्देश्यकप्रवृत्तिकपुरुषव्यापारविषयत्वं भवति च स्विष्टोद्देश्यकप्रवृत्तिकपुरुषव्यापारविषयत्वेन करणत्वं

स्तदा धूमो मां प्रवर्त्तयतीति बलाद्धूमनिष्ठप्रवर्त्तनासिद्धिरस्तु यदि तु तत्रानुमिति रूपैव भावना तदास्तां प्रकृतेऽपि विधिवाक्यज शाब्दबोधात्मिकैव भावनेत्यलमतिरिक्तभावनयेति दिक् ।

**अभिधेयर्विधिश्च कार्यत्वं तच्च कृतिसाध्यात्वमिति किमत्र मानमिति चेत् । उच्यते । विधिस्तावत् प्रवर्तकज्ञानमजनयित्वा प्रवृत्तिजनिकामिच्छामजनयित्वा न प्रवृत्तिजननायालं । अतो यस्य बुद्धिः प्रवृत्तिजननीमिच्छां सूते सविधेरभिधेयः । प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारिकेच्छा तज्जननी च कृतिसाध्यत्वप्रकारिकाबुद्धिः । कृत्यसाध्यत्वज्ञाने तदनुत्पत्तेः । न तु कृत्यसाध्यत्वज्ञानाभावो गौरवात् । सर्वदा चिकीर्षोत्पत्त्यापत्तेश्च सर्वदा तत्सत्वादतः कृतिसाध्यत्वमेव विध्यर्थ इति ।**

अथ प्राभाकरमतमुत्थापयति विधिश्चेति । विध्यर्थश्चेत्यर्थः । तच्च कार्यत्वं च । अत्र कार्यत्वस्य विध्यर्थत्वेन ज्ञानस्य प्रवृत्तिहेतुत्वेचिकीर्षैव द्वारं साच कृतिसाध्यत्वप्रकारिकेच्छा तज्जनकं कृतिसाध्यत्वज्ञानमिति कृतिसाध्यत्वम्विध्यर्थ इत्यभिप्रायवानाह । विधिरित्यादिना अलं समर्थः । अतस्तादृशज्ञानेच्छयोर्जननमन्तरेण विधेः प्रवृत्तिजनकत्वाभावात् । यस्येति षष्ठ्यर्थो विषयत्वं । अभिधेयः साध्यः कीदृशेच्छायाः प्रवृत्तिजनकत्वमत आह प्रवृत्तीति । तज्जननीति । तथा च पर्य्यालोचितमण्डनन्यायेन ज्ञानेच्छयोः समानप्रकारकत्वमिति भावः । ननु कृतिसाध्यत्वप्रकारकेच्छात्वेन प्रवृत्तित्वावच्छिन्नं प्रति न हेतुत्वं गौरवात् किं तु कृतीच्छात्वेन लाघवात् । तदुक्तं सौंडलोपाध्यायैः । चिकीर्षेत्यत्र कृधातोः

कृतिरर्थः। सन्प्रत्ययार्थः कृतिगोचरेच्छा सनो धात्वर्थगोचरेच्छावाचित्वात् तथा च कृतीच्छैव चिकीर्षा शब्दार्थः सा च कृतीष्टसाधनताज्ञानजन्येति चेन्न । यदि विषयतासम्बन्धेन कृतिविशेष्यकं ज्ञानं प्रवर्त्तकं तर्हि पाकः कृतिरिष्टसाधनमिति ज्ञानादपि पाकविषयकप्रवृत्तिप्रसङ्गः । यदि तु साध्यतासम्बन्धेन पाकत्वप्रकारकं ज्ञानं प्रवर्त्तकं तदासाध्यत्वस्य च तव मते संसर्गविधया भानं मम मते तु प्रकारतयेति किन्तव मते लाघवमिति । किं च वह्निना पाकं साधयामीत्यनुभवस्य वह्निसाध्यत्व-प्रकारकत्वमिव कृत्या पाकं साधयामीत्यनुभवस्यापि कृतिसाध्यत्वप्रकार-कत्वस्य दुरपह्नवत्वादिति संक्षेपः। ननु कृतिसाध्यत्वप्रकारकसंशये तद्व्यति-रेकनिश्चये वा प्रवृत्त्यभावेन तन्निश्चयत्वेनैव हेतुत्वं वाच्यं तन्निश्चयत्वं कृतिसाध्यत्वाभावाप्रकारकत्वे सति कृतिसाध्यत्वप्रकारकज्ञानत्वमिति त-दपेक्षया कृत्यसाध्यताज्ञानत्वेनैव प्रतिबन्धकत्वन्तदभावत्वेनैव कारणत्वमु-च्यतामित्यत आह नत्विति तथा च तत्साध्यत्वप्रकारकेच्छायास्तत्प्रकारक-ज्ञानजन्यत्वनियमेन कृतिसाध्यत्वप्रकारकेच्छानुरोधात्तत्प्रकारकं ज्ञानमवश्यं वाच्यमित्यर्थः। न च विसम्वादीच्छायां भेदाग्रहस्य हेतुत्वात्तत्र व्यभिचार इति वाच्यम् । तत्रापि तादृशनिश्चयस्यैव हेतुत्वात् । अथवा पाको न मत्कृतिसाध्यः पाके न मत्कृतिसाध्यत्वं पाके मत्कृतिसाध्यभेदः पाको मत्कृतिसाध्यत्वाभाववान् पाको न कृतिसाध्यः पाके कृतिसाध्यभेदः पाको न साध्य इत्यादि ज्ञानानां प्रतिबन्धकत्व तदभावानां च हेतुत्व मिति तदपेक्षया लाघवेन कृतिसाध्यत्वनिश्चयस्यैव हेतुत्वं न चाप्रमा-ण्यज्ञानानास्कन्दितकृतिसाध्यतानिश्चयत्वेन हेतुत्वे गौरवमिति वाच्यम् । त्वन्मतेऽप्रामाण्यज्ञानानास्कन्दितकृत्यसाध्यताज्ञानाभावानां हेतुत्वे महद् गौरवादित्यभिप्रायवानाह गौरवादिति दूषणान्तरमाह सर्वदेति । सर्वदा कृत्यसाध्यत्वज्ञानाभावकाले । अथ सर्वदेत्यस्यायमेवार्थः यद्वा । कृतिसाध्य त्वात्यन्ताभावकृतिसाध्यभेदादिज्ञानानां प्रत्येकं प्रतिबन्धकत्वे गौरवं यत्किञ्चिदेककृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वे यत्किञ्चिदेककृत्यसाध्य

त्वज्ञानकालेप्यपरकृत्यसाध्यत्वज्ञानाभावानां सर्वदासत्त्वात्सर्वदा चिकीर्षा स्यादित्यभिप्रायवानाह सर्वदेति । इदमुपलक्षणं । ग्राह्याभावानवगाहिने जनकीभूतं ज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वं अनुमितौ व्यभिचारज्ञानवदिति । इत्थञ्चकृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वस्वीकारे कृतिसाध्यताज्ञानस्य हेतुत्वमवश्यमेवेति भावः ।

**नन्वेवं मण्डली कुर्यादिति वाक्यादुत्पन्नकृतिसाध्यताज्ञानवतो बलवदनिष्टजनकमेव मण्डलीकरणं जानतो मण्डलीकरणे प्रवृत्तिः स्यात् । अथ बलवदनिष्टाननुबन्धी कृतिसाध्यताज्ञानं प्रवर्तकमिति चेत् । इत्थमपि इष्टाजनकत्वेन बलवदनिष्टाननुबन्धि कृतिसाध्यत्वमण्डलीकरणं जानतस्तत्र प्रवृत्तिः स्यात् प्रवृत्तिजनकज्ञानस्य सत्त्वात् ॥**

एवं कृतिसाध्यत्वस्य विध्यर्थत्वे । मण्डली बौद्धानां कर्मविशेषः । प्रवृत्त्योत्पादकमाहेत्यवेति प्रवृत्त्यभावे बीजमाह बलवदिति । बलवदनिष्टाननुबन्धित्वमपि विध्यर्थ इत्याहाथेति । बलवदनिष्टाननुबन्धित्वं हि इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं नान्तरीयकत्वं इष्टोत्पत्तावश्यकत्वं यागस्यापि श्रमादिदुःखजनकत्वेन तत्र प्रवृत्तिर्न स्यादतोऽधिकान्तं कस्यचिदपेक्षया कस्यचिदाधिक्येनाधिकदुःखाजनकत्वेप्युक्ते न तन्निस्तार इति प्रथमदुःखान्तं । मण्डलीकरणस्य नरकरूपबलवद्दुःखजनकत्वान्नदोषः । यद्वा बलवदनिष्टाजनकत्वं पापाजनकत्वं । इत्थमपि बलवदनिष्टाननुबन्धित्वयोर्विध्यर्थत्वेपि प्रवृत्त्यापादकबीजमाह बलवदिति । तत्र मण्डलीकरणे ।

**अत्र प्राभाकरमतान्तरवर्तिनः । नित्ये शौचादिमत्वप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्तकं ।**

अन्यत्र चेष्टसाधनताज्ञानजन्यमिष्टसाधनताज्ञानकालीनं वा कार्यताज्ञानं हेतुः प्रवृत्ति सामान्ये च कृतिसाध्यताज्ञानसामान्यमिति न कश्चिद्दोषः । न चैवं लाघवादिष्टसाधनताविषयककृतिसाध्यज्ञानमेव प्रवृत्तिसामान्ये हेतुरिति वाच्यम् । नित्ये तदभावात् । साध्यत्वसाधनत्वयोर्विरोधेनैकस्यैकस्मिन्कृतिसाध्यत्वेष्टसाधनत्वयोर्भानासम्भवाच्च । कथमनयोर्विरोध इति चेत् । इत्थं साधनत्वं हि सिद्धधर्मः ॥ असिद्धावस्यात्कार्यानुत्पत्तेः । साध्यत्वं असिद्धधर्मः सिद्धतादशायां तदभावात् । न चैकदा सिद्धमसिद्धं च । येनैकदा कृतिसाध्यमिष्टसाधनं च स्यादिति ॥

अत्रेति । तेषामयमाशयः । स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्त्तकं तदर्थश्च स्वं प्रवर्त्तमानः पुरुषस्तद्विशेषणं कामना शौचादिश्च तद्वत्ता तद्विद्यमानता । तत्प्रतिसन्धानं तज्ज्ञानं । तज्जन्यं यत्कार्यताज्ञानमित्यर्थः । तत्र शौचादि पुरुषविशेषणं अनित्येतु कामनापुरुषविशेषणं कामनावत्त्वं स्वविषयसाधनतासम्बन्धेन यागयाकादौ स्वं कामना इच्छाविशेषः । तद्विषयस्वर्गादिः तत्साधनं यागादिस्तथा च यागादौ मण्डलीकरणादौ वा स्वेष्टजनकत्वज्ञानं तदा कामनाविषयसाधनत्वज्ञानाभावेन न तत्र प्रवृत्तिरिति । एवं यदा हमशुचिरिति ज्ञानं तदाशौचादिमत्त्वप्रतिसन्धानाभावाच्च प्रवृत्तिरिति नित्ये सन्ध्यावन्दनादौ शौचादीति शुचितत्कालजीवित्वं सन्ध्याद्यङ्गं तत्राहं शुचिरित्यादिज्ञानेन सन्ध्यावन्दनं कार्यमिति ज्ञानं जन्यत इति । यदाहमशुचिरित्यादिज्ञानं । यदा च नेष्टसाधनताज्ञानं तदा तादृश तज्जन्यकार्यताज्ञानाभावादेव न प्रवृत्ति-

रिति भावः । अन्यत्र अनित्ये इष्टेति यागादाविष्टसाधनताज्ञानेन यागादौ कार्य्यताज्ञानं यदा च नेष्टसाधनताज्ञानं तदातादृशकार्य्यताज्ञानाभावान्न प्रवृत्तिरिति भावः । ननु बालस्याद्यस्तनमानप्रवृत्तौ जीवनादृष्टमहकारेणेष्टसाधनतास्मरणं कार्य्यतास्मरणं तत्र कार्य्यताज्ञानस्येष्टसाधनताज्ञानसमानकालीनत्वेऽपि न तज्जन्यत्वमत आहेष्टसाधनताज्ञानकालीनमिति प्रवृत्तीति । न च सामान्यतः । कार्य्यताज्ञानात्प्रवृत्तिसामान्यं जायतामिति वाच्यम् विशेषसामग्रीं विना सामान्यसामग्र्याः कार्य्यजनकत्वाभावात् । एवं तादृशज्ञानस्य प्रवृत्तिहेतुत्वे । लाघवादिति । तव नित्यविषयकप्रवृत्तौ शौचादिमत्वप्रतिसन्धानजन्यकार्य्यताज्ञानत्वेनानित्यविषयकप्रवृत्तौ काम्यत्वप्रतिसन्धानजन्यकार्य्यताज्ञानत्वेन सामान्यप्रवृत्तौ कार्य्यताज्ञानत्वेन हेतुत्वं । मम तु स्वेष्टसाधनताविषयककार्य्यताज्ञानत्वे न हेतुत्वे एक एक कार्य्यकारणभाव इति । नित्ये सन्ध्यावन्दनादौ तदभावात् । इष्ठसाधनताविषयककृतिसाध्यत्वज्ञानाभावात् । यद्वा ननु नित्येऽपि फलश्रवणेन तादृशकार्य्यत्वज्ञानस्य कारणत्वे बाधकाभावात् अत आह साध्यत्वेति । विरोधेति । एकस्मिन्यागे कृतिसाध्यत्वमिष्टसाधनत्वमेकदाविरुद्धमित्यर्थः । एकस्य चैत्रादेः । एकस्मिन्यागे । विरोधं प्रतिपादयति इत्थमिति सिद्धधर्म इति । असिद्धेन कारणेन कार्य्यस्याजननादित्यर्थः । तदेवाह । सिद्धे चेति तदभावात् । साध्यत्वाभावात् ।

अत्र जरन्नैयायिकाः । इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमेव लाघवात्प्रवर्तकं । नत्विष्टसाधनताज्ञानजन्यकार्य्यताज्ञानादि गौरवात् । न च नित्ये इष्टसाधनताज्ञानासम्भवो फलाभावादिति वाच्यम् । नित्येऽपि बहुशः फलश्रुतिः यत्र फलश्रुतिर्नास्तितत्रास्तां विश्वजिन्न्यायात्स्वर्गः फलं प्रत्यवायपरिहारो वा । न

चैवं फलकामनाधीनकर्तृकत्वे काम्यत्वं स्यान्न तु नित्यत्वमिति वाच्यम्। न हि फलकामनानधीन कर्तव्यत्वं नित्यतां ब्रूमः । किं तु यदकरणे प्रत्यवायस्तत्वं । तच्च कामनोपाधिकर्तव्यत्वेप्यक्षतमेव । न चैवं फले यदा कामना नास्ति तदा सन्ध्यावन्दनादौ प्रवृत्तिर्न स्यादिति वाच्यम् । इष्टत्वात् । न हि प्रयोजनमनुद्दिश्य मन्दोपि प्रवर्तते ।

कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुत्वं । तच्चेदमिष्टजनकमिति ज्ञानात्कृतिसाध्यत्वज्ञाने सत्यायः प्रवर्ततात: कृतिसाध्यत्वविषयकज्ञानस्य चिकीर्षाद्वारोपयोगित्वेन कृतिसाध्यत्वप्रकारिकेच्छायामिष्टसाधनत्वविषयककृतिसाध्यत्वप्रकारकज्ञानस्यैव हेतुत्वादित्याद्यभिप्रायवानाह जरन्नैयायिका इति । लाघवात् प्रवृत्तिसामान्यंप्रत्यैकस्य कारणत्वकल्पनेन लाघवात् । गौरवादिति नित्यविषयकप्रवृत्तिं प्रतिशौचादिमत्वप्रतिसंधानजन्यकार्यताज्ञानत्वेन कामनाविषयसाधनतासम्बन्धेन कामनावत्कृतिसाध्यताज्ञानत्वेन कारणत्वकल्पने गौरवादित्यर्थः । ननु नित्यस्य सन्ध्यावन्दनादेर्निःफलत्वेन कथं तत्रेष्टसाधनत्वग्रह इत्याह न चेति । नित्येपि बहुश इति । दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्निति विधेः प्रीत्यात्मकफलश्रवणात् । सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्तेयान्ति ब्रह्मलोकं सनातनमित्यर्थवादात्फलश्रवणाच्चेत्यर्थः । यत्र फलं न श्रूयते तत्र का गतिरित्याह विश्वजिदिति । यथाविश्वजिता यजेतेत्यत्र विश्वजिद्यागस्य स्वर्गः फलं कल्प्यते तथा तत्रापि स्वर्गः फलं कल्पनीयमित्यर्थः । ननु यस्य फले कामना नास्ति तेन तन्नाक्रियेतेत्यत आह प्रत्यवायेति। यद्वाधिकारवतोऽकरणेपापमिति कामनाशून्यस्याधिकारिणः सन्ध्यावन्दनाकरणे

पापं नस्यादन्यथा शौचादिशून्यस्याकरणे पापं स्यात् । अतआह । प्रत्यवायेति । एवं नित्यस्यापि फलकल्पने । तच्चाकरणे प्रत्यवायजनकत्वरूपं नित्यत्वं चाकामिनोपाधिकर्तव्यत्वे कामनाधीनकर्त्तव्यत्वे अक्षतमेव अविरुद्धमेव । एवं सन्ध्यावन्दनस्य कामनाधीनकर्त्तव्यत्वे तुष्यतुदुर्जन इति न्यायेनाहेष्ठत्वादिति ।

नन्वेवं कामनाधिकारिविशेषणं स्यात् । तथा च यदा फले कामना नास्ति तदा पुरुषस्याशुचेरिवानधिकारित्वान्नित्याकरणेपि प्रत्यवायो न स्यादिति चेत् । यदि तत्र प्रत्यवायः प्रामाणिकस्त्यज्यते तर्हि कामनाधिकारिविशेषणं । न तु वेदबोधितमिष्टसाधनत्वमपि प्रामाणिकत्वात् । कल्प्यतां वा कामनेतरयावदधिकारवतामकरणमेव प्रत्यवायहेतुरिति न किञ्चिदेतत् न च साध्यत्वसाधनत्वयोर्विरोधः । एकस्मिन्पाके ओदनसाधनत्वकृतिसाध्यत्वयोः सत्त्वात् ॥

कथमन्यथा तवेष्टसाधनताज्ञानकालीनं कृतिसाध्यताज्ञानं पाकादौ प्रवर्तकमिति कृतिसाध्यत्वे च बलवदनिष्टाननुबन्धित्वं विशेषणं देयं । नातो मधुविषसंपृक्तान्नभोजने कृतिसाध्यत्वेन सुखसाधत्वेन ज्ञातेऽपि प्रवृत्तिर्बलवदनिष्ठानुबन्धीत्वेन ग्रहात् । यदा च बलवदनिष्टाननुबन्धित्वेन ज्ञायते तदा प्रवर्तत एव । एवं च बलवदनिष्टानुबन्धीष्टसाधन-

त्वेसति कृतिसाध्यत्वविषयकं ज्ञानं प्रवर्तकं । विध्यर्थोऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वेसति कृतिसाध्यत्वम् ॥

एवं सन्ध्यावन्दनादौ कामनाशून्यस्यप्रवृत्त्यभावे इष्टापत्तौ ॥ तर्हि किमनिष्टमत आह तथा चेति । इदमुपलक्षणं अनधिकृतकर्त्तव्यत्वेन कामनाकृतमपि नित्यं निःफलं स्यादित्यपि बोध्यं । त्यज्यत इति । नित्यस्यल इति शेषः । तथाचकामनाया अधिकारिविशेषणत्वत्यागे कामनाशून्यस्य सन्ध्यावन्दनाभावे प्रत्यवायो भवत्येवेति भावः । नन्वितश्च त्यज्यतामिष्टसाधनत्वस्य विध्यर्थत्वं तथा च नित्ये फलकल्पनाभावे काम्यत्वाभावात्कामनाधीनकर्त्तव्यत्वे कामनानाधिकारिविशेषणमिति कामनाशून्यस्याकरणे प्रत्यवायो भविष्यत्येवेत्यत आह नन्विति । त्यज्यत इत्यनुषज्यते । प्रामाणिकत्वात् ननु त्यागस्यावश्यकत्वे इष्टसाधनत्वमेव त्यज्यतां । तथा च वेदेन बलवदनिष्टाननुबन्धिकृतिसाध्यत्वमेव बोध्यते । न नु नित्यादौ बाधितेष्टसाधनत्वमपि तदुक्तं । न हि बाधितमर्थं वेदोऽपि ब्रूत इति । दघादहरहः श्राद्धमित्याद्यर्थवादादेस्तवकत्वमात्रं नत्विष्टसाधनत्वबोधकत्वमत आह कल्प्यतामिति । कामनेतरशौचाद्यधिकारस्तत्र भवत्येवेति भावः । ननु यदि वेदबोधितेष्टसाधनत्वं न त्यज्यते तर्हि कामनाशून्यकृतसन्ध्यावन्दनादेः कथं फलजनकत्वं । अन्यथाकामनाशून्यकृतकर्मणः कायव्यूहादिना प्रारब्धकर्मभुञ्जानस्य मुमुक्षोर्योगिनोऽपि फलं स्यात् । इष्टापत्तौ तेषां मोक्षो न स्यात् । यदि तादृशकर्मणो न फलजनकत्वं तदा तद्बोधक वेदाप्रामाण्यापत्तिरित्यभिसन्धायाह नकिञ्चिदिति । अयमर्थः। यथा क्षेत्रमध्ये पतितसलिलसहित बीजस्याङ्कुरजनकत्वेपि शिलाशकले नाङ्कुरजनकत्वं तथा तत्वज्ञानाभावस्यापि कारणत्वात् । अथ कामनाया अपिकारणत्वं । इत्यं च कामनाशून्यास्मदादिकृतसन्ध्यावन्दनस्य यक्ष्मादेरपि फलजनकत्वापत्तिः । न

खलु कारणान्तराभावे सति यत्किञ्चित्कारणात्कार्यमिति वेदोपि ब्रूते । अथ साध्यत्वसाधनत्वयोरेककालावच्छेदेन विरोधेपि भिन्नकालावच्छेदेन तयोरविरोधात तथा च कपालं कलवद् घटप्रागभाववदिति वत्पाकः कृतिसाध्यः ओदनसाधनमिति स्यात् साधकाभावादित्यभिप्रायवान्समाधत्ते एकस्मिन्निति । सत्वात् । भिन्नकालावच्छेदेन सत्त्वात् । सम्भवादिति पाठे भिन्नकालावच्छेदेन सम्भवात् ।

अस्वीकारे बाधकमाह कथमिति । इदमुपलक्षणं तवमते लिङ्गपक्षितलैङ्गिकभानस्य व्यवस्थापितत्वात्मत्कृतिसाध्यत्वव्याप्यमत्कृतिंविना सत्वेसति मदिष्टसाधनत्ववान्पाकः कृतिसाध्य इति कथमनुमितिः । कथं वा कृतिसाध्यत्वतादृशेष्टसाधनत्वयोः सामानाधिकरण्यग्रहाद्व्याप्तिग्रहे तादृशेष्टसाधनत्वेन हेतुना कृतिसाध्यत्वानुमानमिति । उपसंहरति एवं चेति । कृतिसाध्यत्वप्रकारकज्ञानस्यैव कृतिसाध्यत्वप्रकारिकेच्छायां हेतुत्वात्तदिच्छाद्वारैव तादृशज्ञानस्य प्रवृत्तिहेतुत्वे उक्तविनिगमनाविरह इति भावः । ननु तथापिविध्यर्थः क इत्य आह विध्यर्थ इति ।

**अत एव कलञ्जभक्षणस्येष्टसाधनत्वे सति कृतिसाध्यत्वेऽपि बलवदनिष्टाननुबन्धित्वाभावाद्विशिष्टाभावोऽस्तीति न कलञ्जं भक्षयेदिति विध्यर्थनिषेध उपपद्यते कथं तर्हि श्येनेनाभिचरन्यजेतेत्यत्र विधि प्रवृत्तिः । श्येनस्य हिंसात्वेन नरकरूपबलवदनिष्टानुबन्धित्वादिति चेन्न श्येनो हि वधसाधनं न तु नरकसाधनं मानाभावात् । श्येनाद्धवधो वधाच्च नरकमिति न तत्रास्तिकानां प्रवृत्तिः ।**

ननु न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणस्य तृप्तिरूपेष्टसाधनत्वेन कृतिसाध्यत्वे चेष्टसाधनत्वकृतिसाध्ययोर्निषेधानुपपत्तिरित्यत आह

तदाह वृद्धयाज्ञवल्क्यः।

ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यत इति।

आर्त्तिर्मरणम्।

ग्रहणस्नानप्रसंगाद्ग्रहणदानेऽप्यर्थवादेन पुरस्तात् प्रतिप्रसवमाह।

**मरुतो वसवो रुद्रा आदित्याश्चाथ देवताः।**
**सर्वे सोमे प्रलीयन्ते तस्माद्दानन्तु सङ्ग्रहे॥ २३॥**

सङ्ग्रहे सम्यग्राहुणा ग्रस्यमाने चन्द्रे मरुद्वसुरुद्रादित्यादयः सर्वेऽपि देवा नश्यन्ति तस्माद्दानं कृत्वा ते रक्षणीया इति। यद्यपि रात्रिदान-प्रतिषेधो न मूलवचने प्रस्तुतस्तथापि वक्ष्यमाणं तमादायायं प्रतिप्रसव इतिज्ञेयम्।

ग्रहणदृष्टान्तेनान्यत्रापि रात्रिदानमाह।

**खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे तथा।**
**सर्वथा दानमस्त्येव नान्यत्र तु विधीयते॥ २४॥**

यथा ग्रहणे रात्रौ दानं प्रतिप्रसूतं तथा खलयज्ञविवाहरविसंक्रान्तिष्वपि रात्रौ दानं भवतीति ज्ञेयम्॥ खलयज्ञो द्वितीयाध्याये वर्णितः

किञ्च।

**पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि।**
**राहोश्च दर्शने दानं प्रशस्तं नान्यदा निशि॥२५॥**

राहुदर्शनइव पुत्रजन्मनि यज्ञे ज्योतिष्टोमादौ अत्ययकर्मणि मरणे च तन्निमित्तं दानं रात्रावपि भवति नान्यदेति।

यदुक्तमप्रशस्तं निशि स्नानमिति तस्य प्रतिप्रसवान्तरमाह॥

**महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्।**
**प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत्॥२६॥**

योऽयं रात्रौ स्नाननिषेधस्स महानिशाविषयस्सच मध्यमं यामद्वयं प्रदोषपश्चिमयामयोस्तु दिनवन्नद्यादिष्वपि स्नानं कर्तव्यम् ॥ अयञ्च नित्यस्नानस्यैवापद्विषयः कालान्तरविधिः । काम्यनैमित्तिकयोस्तु महानिशायामप्यभ्यनुज्ञानात् ।

तथाच व्यासः ।

महानिशा तु विज्ञेया मध्यं यामद्वयं निशि ।
तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते इति ।

इदानीं नैमित्तिकस्नानमाह ॥

**चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ॥**
**एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥२७॥**

चैत्यः चितियोग्यः श्मशानं तत्रत्यो वृक्षश्चैत्यवृक्षश्चयनोद्भवो वा वृक्षश्च चितिश्चयनं वा यूपादयः प्रसिद्धा एतान् स्पृष्ट्वा स्पर्शकालीनवस्त्र युक्तएव जलमाविशेत् । जलमाविशेदित्यनेन उद्धृतोदकस्नान निषेधति ।

तथाच विष्णुः

स्नानार्हो यो निमित्तेन कृत्वा तोयावगाहनम् ।
आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत् ।

रात्रौ तु नैमित्तिकं स्नानं गृहे एव कार्यं । तदाह यमः ।

विप्रः स्पृष्टो निशायां तु उदक्या पतितेन च ।
दिवानीतेन तोयेन गृहे स्नानं समाचरेत् ।

तत्र विशेषमाह वृद्धपराशरः ।

रात्रौ स्नाने तु सम्प्राप्ते स्नायादनलसन्निधौ ।
यदि गेहे न तोयं स्यात्तदा शुद्धिः कथं भवेत् ।
धाम्नोधाम्नस्तु मंत्रेण गृह्णीयादग्निसन्निधौ ।

एवमपिजलग्रहणासम्भवे मरीचिः ।

दिवाहृतन्तु यत्तोयं गेहे यदि न विद्यते ।
प्रज्वाल्याग्निं ततः स्नायाच्चद्यां पुष्करणीषु च ।

अत्र स्नानाङ्गतर्पणं नास्तीत्याह वृद्धपराशरः ।

अस्पृश्यस्पर्शने जाते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितमिति ।

जन्ममरणक्षौरमैथुनेषु देवर्षिपितृतर्पणरहितमित्यर्थः ।

किञ्च ।

**अस्थिसञ्चयनात्पूर्वं रुदित्वा स्नानमाचरेत् ।**
**अन्तर्दशाहे विप्रस्य ह्यूर्ध्वमाचमनं स्मृतम् ॥२८॥**

मृतस्य विप्रस्य दशाहाभ्यन्तरे अस्थिसञ्चयनात्प्राक् ब्राह्मण क्षत्रियादिर्वा रुदित्वा स्नानमाचरेत् । ऊर्ध्वं तस्मादाचमनमिति वर्णितं तृतीयाध्याये ।

यदुक्तं ग्रहणे रात्रिस्नानमपि प्रशस्तमिति तदुपपादयति ।

**सर्वं गंगासमं तोयं राहुग्रस्ते दिवाकरे ।**
**सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥२९॥**

रविग्रहदृष्टान्तो निर्विवादता बोधनार्थः ।

तथाच भरद्वाजः ।

चन्द्रसूर्योपरागे तु यत्कर्तव्यं तदुच्यते ।
सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गंगासमं तोयं राहुग्रस्ते दिवाकरे इति ।

इदानीमुक्तेषु स्नानादिषु गुणविशेषमाह ॥

**कुशैः पूतं भवेत्स्नानं कुशेनोपस्पृशेद्द्विजः ॥**
**कुशेन चोद्धृतं तोयं सोमपानसमं भवेत् ॥३०॥**

पूर्वोक्तं स्नानं मार्जनाद्यङ्गसाधनेन कुशैर्निर्वर्त्यमानं पूतं पावित्र्यातिशयहेतुर्भवेत् नैतावता कुशोपादानं काम्यं शङ्कनीयम् ।

जपे होमे च दाने च स्वाध्याये पितृतर्पणे ॥
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैरिति ।

शातातपेनावश्यकत्वबोधनात् ॥

कुशहीनं तु यत्स्नानं तिलहीनं तु तर्पणम् ।
तत्सर्वं त्रिजटे तुभ्यं यच्च श्राद्धमदक्षिणमिति ॥

पुराणे कुशाभावे स्नानवैयर्थ्यबोधनाच्च । पूर्वोक्तमाचमनं कुशेन कुशहस्तेन कार्यम् यतः कुशोद्धृतं तोयं पीयमानं सोमपानसमफलकं भवति ।

तथाच मार्कण्डेयः

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेदिति ।

एतद्ग्रन्थिरहितदर्भाभिप्रायम् ।

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनञ्चरेदिति हारीतस्मरणात् ।

पवित्रदलसंख्योक्ता पुराणे ।

सप्तभिर्दर्भपिञ्जूलैः कुर्याद्ब्राह्मं पवित्रकम् ।
पञ्चभिः क्षत्रियस्यैव चतुर्भिश्च तथा विशः ।
द्वाभ्यां शूद्रस्य विहितमन्तराणां तथैव च ।

मार्कण्डेयोऽपि ।

चतुर्भिर्दर्भपिञ्जूलैः ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ।
त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा ।
चतुर्भिश्चाभिचाराख्यं कुर्वन् कुर्यात्पवित्रकमिति ।
सर्वत्र सर्वेषां द्विदलमेवेति कात्यायनः ।
अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ।

कुशाभावे काशादयो ग्राह्याः । तदाह विष्णुः ।

कुशाः काशा यवा दूर्वा गोधूमाश्चाथ तण्डुलाः ।
उशीरा व्रीहयो मौञ्जा दशदर्भाश्च बल्वजा इति ।

इदानीं कृत्स्नवेदाध्ययनाशक्तावेकदेशाध्ययनमभ्यनुज्ञातुं सर्वथाध्ययनाभावं निन्दति ॥

**अग्निकार्यात्परिभ्रष्टाः सन्ध्योपासनवर्जिताः ।**
**वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥३१॥**

अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपीत्यादिना ब्रह्मचारिणो विहितं समिदाधानं तद्रहिता ब्राह्मण्यं विहाय वृषलत्वं प्राप्नुवन्ति । इदञ्च सप्तरात्रादूर्ध्वमवगन्तव्यम् ।

तथाच मनुः ।

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् । इति ।

तथा सप्तरात्रं त्रिकालविहितसन्ध्योपासनरहिता वृषला भवन्ति ।

तथाच संवर्त्तः ।

सन्ध्यातिक्रमणे यस्य सप्तरात्रं गमिष्यति ।
उन्मत्तदोषयुक्तोपि पुनः संस्कारमर्हति ।

तथावेदा वेदत्वाश्रयमृगादिकमप्यनधीयाना वृषला भवन्ति ।

तथाच श्रूयते ।

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् अनन्द्व्य ब्रह्मबन्धुरिवभव वशिष्ठोपि ।

नानृग् ब्राह्मणो भवति न वणिग्न कृषीवलः ।
न शूद्रप्रेषणाङ्कुर्वस्तेनो न चिकित्सक इति ।

उपपादितं चैतदष्टमे

ब्राह्मणस्त्वनधीयानो ऽमन्त्रो ब्राह्मणस्तथा । तथा विप्रोऽनृचोऽफलइत्यादिना ।

तर्हि अशक्तेन किङ्कर्तव्यमित्यतआह ॥

**सतस्माद्वृषलस्तेन ब्राह्मणेन विशेषतः ॥**
**अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥ ३२ ॥**

पठित्वा चतुरो वेदांस्त्रीन् द्वावेकमथापि वा ।
अधीत्य चाधिगम्यार्थं ततःस्नायाद्विजोत्तमः ॥

इत्यादिस्मृत्या चतुस्त्रिद्व्येकवेदाध्ययने समुच्चयविकल्पौ

शक्ताशक्तयोर्विहितौ तत्रान्तिमे पक्षे एकवेदाध्ययनेप्यशक्तेन ब्राह्मणेनैकदेशोप्यध्यायकाण्डादिर्वेदस्याध्येतव्यो ऽन्यथा वृषलत्वापत्तेः ।

अयमभिसन्धिः । स्वाध्यायोऽध्येतव्य इत्यादिविधिर्वेदैकदेशाध्ययनेप्यात्मानं लभते वेदत्वस्यावयवावयविवृत्तित्वात्सुवर्णवत् । अन्यथा स्त्रीशूद्रौ वेदं नाधीयातामित्यादिनिषेधेषु समुदाय एव विषयः स्यात् । नचैवं वर्णमात्रोच्चारणप्रतिषेधेनातिप्रसङ्गः नित्यानुपूर्वीकः पदसमुदायो वेद इति वेदलक्षणेन नित्यायाः पदानुपूर्व्या एव वेदत्वाभिव्यञ्जकत्वात् । तर्ह्यग्निमील इति पदद्वयेनापि विधिः सिध्येत् । मैवम् । नानृग् ब्राह्मणो भवतीत्यादिना विधेः ऋक्न्यूनविषयत्वाभावात् । तस्मादेकदेशाध्ययनेपि विधिसिद्धिः । एकदेशोपि च नित्यकर्मावबोधकएव नान्यः । तस्यैव नित्यकर्मापेक्षितत्वेन नित्याध्येयत्वात् । इतरभागाध्ययनत्वं नित्यापेक्षितत्वात्काम्यमेव । यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतः तथापि दर्शपूर्णमासौ कुर्वाणस्य ज्योतिष्टोममन्त्रब्राह्मणं न क्वचिदुपयुज्यत इत्यसदपि नाधिकारं व्यावर्त्तयति । दृष्टिवेदनेनैव योग्यतायाः सिद्धत्वात् । तेन तद्याजिनस्तावानेन स्वाध्याय इति प्रपञ्चितमेव वार्त्तिके यदपि प्रायश्चित्तसाद्यर्थं सकलवेदाध्ययनमिति तदप्यनित्यत्वात्प्रायश्चित्तस्य न सर्वाध्ययननित्यतां गमयति ।

अतएवोक्तम् ।

अधीत्य यत्किञ्चिदपि वेदार्थमधिगच्छति ।
स्वर्गलोकमवाप्नोति कर्मानुष्ठानविद्द्विज इति ॥

अर्थज्ञानमपि तावत एव नित्यमित्यलमतिप्रसङ्गेन ।
शाखाध्ययने तु स्वीयैव नित्या ॥

तथाच वसिष्ठः ।

पारम्पर्यागतो वेदः स वेदः परिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥
यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु गर्हितः ॥

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
तच्छाखाध्ययनं कुर्यान्न तेन पतितो भवेदिति ॥

अत्रोपनीयवेदमध्यापयेदित्यनेनोपनयनस्य वेदाध्ययनार्थत्वेऽप्यध्येष्यमाणशाखीयकल्पेनोपनीतस्यैव तच्छाखाध्ययनाधिकारो न शाखान्तरीयकल्पेन । पातित्यस्मरणात् । स्वशाखा च प्रथममध्येयेति तत्कल्पेनैवोपनीतस्य ब्राह्मण्यसिद्धिः । ततश्च प्रतिशाखाध्ययनं तत्तत्कल्पेनोपनयनं सिध्यति । महानाम्न्याद्यध्ययनाङ्गव्रतादेशनवत् ।

तदाहाश्वलायनः ।

अथोपेतपूर्वस्येत्यादिविवृणोत्येतद्गुरदत्तः । एवं ब्रुवन्नेतज्ज्ञापयति तेन तेन प्रकारेण प्रतिवेदमुपनयनं कर्तव्यमिति ।

शौनकोऽपि ।

यो वेदान्तरमध्येतुं तत्सूत्रविधिना ततः ।
कृतोपनयनोऽधीत्य तं वेदं सकलं द्विजः ॥
द्वितीयमेवमृग्वेदमध्येतुमभिवाञ्छया ।
एतद्गृह्योक्तविधिना पुनरप्युपनीयतद्वेति ॥

एतेन ऋत्विजामपि मधुपर्के विवादो निरस्तः आर्त्विज्यशाखीयमधुपर्कसंस्कृतानामेव तत्तदार्त्विज्याधिकारात् ।

अग्निकार्यादिषु त्रिषु नियमविशेषमाह ।

**शूद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः ।**
**जपतो जुह्वतो वापि गतिरूर्ध्वा न विद्यते ॥ ३३ ॥**

निरन्तरं शूद्रान्नभोजिनो वेदाध्ययनगायत्रीजपाग्निहोमादिजन्याप्यूर्ध्वगतिर्न भवतीति तेषु तत्परिहार आवश्यकः । जपहोमानन्तरभाविनोऽपि वेदाध्ययनस्य पूर्वानुकीर्तनं तु वेदाध्ययनहेतुकत्वमितरयोर्ज्ञापयितुम् ।

उक्तमर्थमुपपादयति ।

**शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् ।**
**शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥३४॥**

शूद्रान्नं पूर्वोक्तं शूद्रसम्पर्क एकगृहवासेन सङ्घर्षः, शूद्रेण सहैकासन उपवेशनं शूद्रादुपदेशाधिगमश्चेत्येते प्रत्येकं ज्वलन्तं ब्रह्मवर्चसातिशयेन दीप्यमानमपि नरके पातयन्ति ।

किञ्च

**यः शूद्रया पाचयेन्नित्यं शूद्री च गृहमेधिनी ॥**
**वर्जितः पितृदेवेभ्यो रौरवं याति स द्विजः ॥३५॥**

यः स्वीयमप्यन्नं शूद्रस्त्रिया प्रत्यहं पाचयित्वा भुङ्क्ते यस्य च शूद्रैव गृहमेधिनी गृहव्यापारनिर्वाहिका नतु भार्या, तस्याः कलावप्रसक्ते स द्विविधोपि द्विजातिर्विप्रादिः देवपितृकर्मानधिकारी सन् रौरवं नरकं प्राप्नोति ।

किञ्च ॥

**मृतसूतकपुष्टाङ्गं द्विजं शूद्रान्नभोजिनम् ।**
**अथ तं न विजानामि कां कां योनिङ्गमिष्यति ॥३६॥**

य असपिण्डस्य जननमरणाशौचयोरन्नं भुक्त्वा स्वाङ्गं पुष्णाति यश्च शूद्रान्नं भुङ्क्ते स कां कां योनिं गमिष्यतीत्यहं न जानामि अनेनानेकत्वं योनीनामुपवर्णितम् ।

तदेव स्पष्टयति ।

**गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ।**
**श्वयोनौ सप्तजन्म स्यादित्येवं मनुरब्रवीत् ॥ ३७ ॥**

श्वशूकरगृध्रयोनिषु क्रमेणसप्तदश दशद्वादश जन्मानि लभतइति मनुमतम् ।

नन्वेवं शूद्रान्नं मा नाम भुञ्जतां यागाद्यर्थं तद्ग्रहणे को दोष इत्यत आह ।

**दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।**
**ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥३८॥**

यो विप्रः शूद्रस्य दक्षिणार्थं शूद्राद्यागार्थं गृहीताया दक्षिणाया निर्वाहाय हविर्जुहोति ज्योतिष्टोमादिभिर्यजते स जीवन् शूद्रो ब्रह्मकर्मानर्हः प्रेत्य चण्डालश्च भवति ।

तथा च मनुः ।

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित् ।

यजमानोऽपि भिक्षित्वा चण्डालः प्रेत्य जायत इति ।

नचैतावता शूद्रस्य यज्ञार्थद्रव्यदानप्रतिषेध इत्याह शूद्रस्तु ब्राह्मणो भवेदिति । यः शूद्रो यज्ञफलकामनया यज्ञपर्याप्तं द्रव्यं दत्वा ब्राह्मण-द्वारा यज्ञं कारयति स जात्या शूद्रोऽपि ब्राह्मणवद्यज्ञफलभाग्भवति ।

तथाच राजधर्मेषु ।

दक्षिणा सर्वयज्ञानां दातव्या भूतिमीप्सुभिः ।

पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिरिति ।

दस्युभिः पूर्वोक्तैः शूद्रादिभिः सर्वैर्नीचैर्भूतिमीप्सुभिस्तत्तद्यज्ञफल-कामैः सर्वयज्ञानां श्रौतस्मार्त्तानां दक्षिणा निर्वाहकं द्रव्यं दातव्यं तेना-त्मनः फलसिद्धिर्भवतीत्यर्थः । तर्हि तदभावे किं न देयमित्यत आह । पाकयज्ञास्तोकयज्ञास्थालीपाकादयः महार्हा ज्योतिष्टोमादय इव कर्तृ फलसिध्यर्थमपि देयाः कारणीया इत्यर्थः ।

**मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः ।**
**भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत् ॥ ३९ ॥**

यो मौनेन भोक्ष्य इति संकल्पं कृत्वा भोक्तुमासीनस्य यावद्भोजनस-माप्ति न वदेत्, यद्यन्तरा प्रमादाद्वदति तदाऽवशिष्टमन्नं तथैव परित्य-जेदिति ॥

किंच ।

**अर्द्धभुक्ते तु यो विप्रस्तस्मिन्पात्रे जलं पिबेत् ॥**
**हतं दैवं च पित्र्यं च आत्मानं चोपघातयेत् ॥ ४० ॥**

ये ऽसमाप्तभोजन एव भोजनपात्रमुद्धृत्य तेन जलादि पेयम् पिबेत् तेन पूर्वानुष्ठितमात्मनो दैवं पित्र्यं च कर्मजातं हतम् आत्मा चोपहत इति ।

किंच ।

**भुञ्जानेषु तु विप्रेषु यो ऽग्रपात्रं विमुञ्चति ॥**
**स मूढः स च पापिष्ठो ब्रह्मघ्नः स खलूच्यते ॥४१॥**

एकपंक्त्युपविष्टेष्वसमाप्तभोजनेष्वेव विप्रेषु यः प्रथममेव स्वपात्रं त्यक्त्वोत्तिष्ठति स मूढपापिष्ठब्रह्मघ्नादिशब्दैर्निन्द्यो भवति ।

भोजनपात्रपरित्यागप्रसंगेन श्राद्धे पात्रचालनकालमाह ॥

**भोजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ॥**
**न देवास्तृप्तिमायांति निराशाः पितरस्तथा ॥ ४२ ॥**

श्राद्धे विप्रभोजनानन्तरं भोजनपात्रेष्ववस्थितेषु यदि द्विजा स्वस्तीति वदन्ति तदा विश्वेदेवास्तृप्तिं नायान्ति पितरश्च निराशा' गच्छन्ति तस्मात्स्वस्तिवाचनात्पूर्वं पात्रचालनं कार्यमिति ।

प्रकृतमनुसरति ।

**अस्नात्वा नैव भुञ्जीत अजप्त्वाग्निमपूज्य च ॥**
**न पत्रपृष्ठे भुञ्जीत रात्रौ दीपं विना तथा ॥४३॥**

यद्यपि स्नानादीनां भोजनकालात्प्रागेव विहितत्वादस्नानभोजनादि न प्रसक्तं तथा स्वकालेऽननुष्ठितानां भोजनकालेप्यनुष्ठानविधानार्थमिदम् अन्यथा स्वकालातिक्रमेण प्रधानलोपप्रसङ्गात् । तथा पत्रावल्यां भुञ्जानः पत्राणां पृष्ठभागे न भुञ्जीत किन्त्वन्तर्भागे, रात्रौ च दीपं विनान्धकारे न भुञ्जीत ।

इदानीं द्रव्यार्जनविधिविशेषमाह ॥

**गृहस्थस्तु दयायुक्तो धर्ममेवानुचिन्तयेत् ॥**
**पोष्यवर्गार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान् ॥ ४४ ॥**

गृहस्थः पुत्रभृत्यकलत्रादिदैन्यदर्शनात्तमतया दयायुक्तोपि पोष्यवर्गस्य पोषणरूपार्थसिध्यर्थं धर्मं शास्त्रीयमेव याजनादिद्रव्योपार्जनोपायं चिन्तयेत् । एवं न्यायवर्त्ती सन् परलोकप्रधानत्वेन सुबुद्धिमान् तत्त्वज्ञानवान् भवति ॥

किञ्च ।

**न्यायोपार्जितवित्तेन कर्तव्यं ह्यात्मरक्षणम् ॥**
**अन्यायेन तु यो जीवेत्सर्वकर्मबहिष्कृतः ॥ ४५ ॥**

न्यायैर्याजनाध्यापनप्रतिग्रहकृषिवाणिज्यशिल्पैः प्रथमद्वितीयाध्यायविहितैरुपायैरर्जितेन वित्तेनात्मनः सपरिवारस्य रक्षणं कर्तव्यम् ।

तथाच मनुः ।

षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवतीति ।

याजनादिभिः षड्भिर्जीवत्येकः याजनादिस्त्रिभिरन्यः याजनाध्यापनाभ्यामपरः चतुर्थस्त्वध्यापनेनैवेत्यर्थः । पूर्वोक्तस्यानुवादोन्यनिषेधार्थस्तमेवाह अन्यायेन पूर्वविहितोपायातिरिक्तेनोपायेन ।

कुशूलकुम्भीधान्यो वा त्र्याहिको श्वस्तनोपि वा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥

इत्यादिना यो जीवेत्सनित्यनैमित्तिकादिद्रव्यातिशयसाध्यसर्वकर्मानर्हतया बहिष्कृतो लोकविद्विष्टो भवेत् ।

तथाच याज्ञवल्क्यः

अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्नत्विति ।

कलिवर्ज्येपि । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनितया तथेति ।

अथदेवपूजानन्तरकर्तव्यं मङ्गलदर्शनविधिमाह ॥

**अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ॥**
**दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्तु नित्यशः ॥४६॥**

अग्निचिदिष्टकाचयनकृत् कपिला गौः सत्री अन्नसत्रादिकर्त्ता-नतु क्रतुसत्रकर्त्ता तस्य कलिवर्ज्यत्वेनाप्रसङ्गः । राजा ऽभिषिक्तः क्षत्रिये भिक्षुः संन्यासी महोदधिः समुद्रः एते दर्शनेनैव द्रष्टारं पुनन्ति तस्मा देतान्नित्यं पश्येत् ।

अस्य कालमाह दक्षः । देवकार्यन्ततः कृत्वा गुरुमङ्गलवीक्षणमिति ।

कात्यायनस्त्वन्यथाह ।

श्रोत्रियं सुभगं गां च अग्निमग्निचितं तथा ।

प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यतइति ।

एतन्मणिमृदङ्गदर्पणरोचनाचन्दनहेमादीनां स्मृत्यन्तरोक्तानामुप-लक्षणम् ।

दर्शनीयमङ्गलप्रसङ्गेन रक्षणीयमङ्गलान्याह ॥

**अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम् ।**
**तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत् ॥४७॥**

अरणिरग्नियोनिकाष्ठं कृष्णमार्जारः सर्वश्यामतनुः चन्दनं मल-यजं सुमणिः पद्मरागादिः घृततिलौ प्रसिद्धौ कृष्णाजिनं कृष्णसार-त्वक् च्छागो वस्तः एतानि गृहस्थः स्वगृहे रक्षयेदेव ।

इदानीमुक्तवक्ष्यमाणानां महापातकानां साधारणं निवृत्तिहेतुं गोचर्मदानं विधातुं तल्लक्षणमाह ॥

**गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम् ।**
**तत् क्षेत्रं दशगुणितं गोचर्म परिकीर्तितम् ॥ ४८ ॥**

एकेन वृषेण सहितं गोशतं यत्रायन्त्रितं स्वच्छन्दमवतिष्ठते तस्माद्दशगुणा भूमिर्गोचर्मेत्युच्यते ।

मनुस्त्वन्यथाह ।

दशहस्तेन दण्डेन त्रिंशतिं तु शतं पुनः ।
पञ्च वाप्यधिकं कृत्वा एतद्गोचर्म कीर्त्तितमिति ॥

वृद्धमनुरपि ।

सप्तहस्तेन दण्डेन त्रिंशद्दण्डानि वर्तनम् ।
तान्येव दश गोचर्म दाता पापैः प्रमुच्यतइति ॥

गोचर्मदानमाह ।

**ब्रह्महत्यादिभिर्मर्त्यो मनोवाक्कायकर्मजैः ।**
**एतद्गोचर्मदानेन मुच्यते सर्वकिल्विषैः ॥ ४६ ॥**

मनोवाक्कायकर्मजैर्ब्रह्महत्यादिभिः सर्वकिल्विषैरेतद्गोचर्मदानेन मर्त्यो मुच्यत इति ब्रह्महत्यादिभिरत्रादिशब्दात्सुरापानसुवर्णस्तेयगुरुतल्पगमनानां ग्रहणम् नतु तत्संसर्गस्य तस्य कलौ महापातकत्वनिराकरणात् मनोवाक्कायानां कर्माणि व्यापारास्तेभ्यो जातैरेतस्य पूर्वोक्तस्य गोचर्मणो नतु मन्वाद्युक्तस्येत्येवमर्थं प्रक्रान्तस्यापि पुनरेतच्छब्देन परामर्शः । आदिशब्देन विवक्षितग्रहणे सिद्धे पुनः सर्वशब्दोपादानं महापातकसमानामुपसंग्रहार्थं न तूपपातकादीनां तेषामतिलघुत्वात् । तेन महापातकसमैरपि किल्विषैर्मुच्यते इति । ननु मनोवाक्कायकर्मजेषु महापातकेषु तुल्यं प्रायश्चित्तमनुपपन्नं तेषां तुल्यत्वाभावात् । कलौ पतति कर्मणेत्यनेन मानसवाचिकव्यापारयोरपातकत्वबोधनाच्चेति चेत् । अत्राहुः । अत्यन्तावृत्तानां मानसानामीषदावृत्तानां वाचिकानां सकृत्कृतानां कायिकानां च समत्वसम्भवादिति । तन्न । एकेन विधिनानुदितेषु निमित्तेषु वैषम्याश्रयणे वाक्यभेदप्रसङ्गात् । अत्रोच्यते । मनोवाक्कायकर्मजैरित्यस्यायमर्थः मनसा सङ्कल्प्य वाचाऽभिलप्य कर्मणोपपादितैरिति अनेन कामकृतत्वमुपलक्ष्यते ततश्च कामकृतेषु ब्रह्महत्यादिषु चतुर्ष्वपीदं साधारणं प्रायश्चित्तमिति सिद्धम् । नचेदमनुवादमात्रमिति शङ्कनीयम् । सर्वेभ्यो दर्शपूर्णमासौ सर्वेभ्यो ज्योतिष्टोम इतिवत्फलविधित्वसम्भवात् । फलोत्पत्तिश्च योगसिद्ध्यधिकरणन्यायेन कामनावन्निमित्तवशेन क्रमिकैव ॥ यदापि युगपन्निमित्तसन्निपातस्तदापि प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेनावृत्तिरिति ।

उक्ते दाने पात्रविशेषमाह ।

**कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः ।**
**यद्दानं दीयते तस्मै तद्दानं शुभकारकम् ॥ ५० ॥**

विशेषतइति कुटुम्बित्वादिभिः प्रत्येकं सम्बध्यते। तेन योतिकुटुम्बी योतिदरिद्रो योतिश्रोत्रियस्तस्मै यद्दानं तदेव शुभस्य प्रकृतपापक्षयस्य कारकमिति ।

उक्तलक्षणभूम्यपहारे शुध्यभावमाह ।

**वापीकूपतडागाद्यैर्वाजपेयशतैर्मखैः ।**
**गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति ॥ ५१ ॥**

यो ब्रह्महत्यादिपापापनुत्तये स्वयमन्येन वा दत्तां गोचर्ममात्रां भूमिमपहरति स शास्त्रान्तरे प्रत्येकं शोधकत्वेन प्रसिद्धैरपि वाप्यादिभिरिह समुदितैरपि न शुद्ध्यत्यत्यन्तपतित एव भवतीति। नच सामान्यभूम्यपहारपरमिदं व्याख्येयं तस्य सुवर्णस्तेयसमत्वेनाद्दुं प्रायश्चित्तसद्भावाच्छुध्यभावानुपपत्तेः । तस्माद्यथोक्तमेव साधीयः ।

इदानीं सप्तमाध्यायोक्तरजोनिर्णयस्य विशेषमाह ॥

**अष्टादशदिनादर्वाक् स्नानमेव रजस्वला ।**
**अतऊर्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत् ॥ ५२ ॥**

रजोदर्शननिमित्तात्स्नानादनन्तरमष्टादशदिनादर्वाक् सप्तदशेऽहनि पुनर्यदि रजस्वला भवति तदा स्नानमेवाचरेन्न त्रिरात्राशौचम् । अतः सप्तदशाहादूर्ध्वमष्टादशादिदिनत्रये रजोदर्शने क्रमेणैकाहत्रिदिनमित्येवं त्रिरात्रमाशौचं भवेदित्युशनसोमतम् ।

तथाच कश्यपः ।

ऋतुस्नाता तु या प्रौढा पुनरेव रजस्वला ।
स्नानात्सप्तदशाहे तु शौचेनैव शुचिर्भवेत् ।
अष्टादशाहे त्वेकाहं द्व्यहमेकोनविंशतौ ।

विंशतिप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति । उपपादितमेतत्सप्तमाध्याये । तत्रैवोक्तस्य चण्डालादिस्पर्शनिर्णयस्य शेषमाह ॥

**युगे युगे द्वयं चैव त्रियुगं च चतुर्युगम् ।**
**चण्डालसूतिकोदक्यापतितानामधः क्रमात् ॥९३॥**

चण्डालादीनामधः क्रमात्प्रातिलोम्यक्रमेणैकद्वित्रिचतुर्युगमन्तरं स्पर्शनिवारणाय न्याय्यम् । तेनायमर्थः पतितस्य व्यवधानमेकेन युगेन उदक्याया युगद्वयेन सूतिकाया युगत्रयेण चण्डालस्य युगचतुष्टयेन कार्यमिति । युगं चायतौ बाहू व्यामइति यावत् ।

किंच ।

**ततः सन्निधिमात्रेण सचैलं स्नानमाचरेत् ॥**
**स्नात्वावलोकयेत्सूर्यमज्ञानात्स्पृशते यदि ॥ ९४ ॥**

उक्तव्यवधानाभावेन सन्निधिमात्रे स्पर्शाभावेपि सचैलं स्नानं कार्यम् । अज्ञानतः स्पर्शे तु स्नानं सूर्यावलोकनं च । कामतः स्पर्शे तु च्यवनः । श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं यूपं चित्तिं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहमानुषास्थिशवस्पृशं रजस्वलां महापातकिनं च कामतः स्पृष्ट्वा सचैलमम्भोवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेद्घृतं प्राश्य पुनः स्नात्वा त्रिराचामेदिति । एवमन्येषामप्यस्पृश्यानां स्पर्शे स्नानं तत् स्पृष्टस्य स्पर्शे त्वाचमनम् तृतीयस्य श्रोत्रस्पर्शइत्याद्यवगन्तव्यम् । यद्यपि चण्डालस्य स्पर्शने चैवं सचैलं स्नानमाचरेदिति षष्ठे ऽभिहितं तथाप्यज्ञानविषयतां तस्य स्पष्टयितुं पुनरत्रोपन्यासः पूर्वोक्तव्यवधानासम्भवे तु व्याघ्रपादः ।

चण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
गोबालव्यजनादर्वाक् सचैलं स्नानमाचरेत् ।

तस्याप्यसम्भवे संवर्तः ।

संकटे विषमे चैव दुर्गे चैव विशेषतः ।
हट्टपट्टणमार्गे च संभवं तु यथाभवेदिति ।

इदानीमनन्तराध्यायोक्तनिषिद्धजलपानप्रायश्चित्तविधिशेषमाह ॥

**विद्यमानेषु हस्तेषु ब्राह्मणोऽज्ञानदुर्बलः ॥**
**तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम् ॥६५॥**

जलं पिबेन्नांजलिनेति निषेधस्य सार्वकालिकत्वभ्रमेण विशेषज्ञान हीनो यो ब्राह्मणो विद्यमानेष्वपि हस्तेषु गवादिवद्वक्त्रेणैव तोयं पिबेत्स जन्मान्तरे श्वयोनावभिजायते हस्तसद्भावकीर्त्तनं पात्राभावे तेनापि जलपानाभ्यनुज्ञानार्थं बहुवचनं स्वपरहस्ताभिप्रायेण तेन स्वहस्ताभावे परहस्तेनापि पेयमिति ।

एवमाचारादिकाण्डत्रयशेषं स्नानानि पञ्चपुण्यानीत्यारभ्य श्वयोनौ जायते ध्रुवमित्येतदन्तेन ग्रन्थसन्दर्भेण समाप्य प्रकृतं प्रायश्चित्ताभिधानमनुसरति । तत्र शपथोल्लंघने प्रायश्चित्तमाह ॥

**यस्तु क्रुद्धः पुमान्ब्रूयाज्जायायास्तु अगम्यताम् ।**
**पुनरिच्छति वदेदेनां विप्रमध्ये तु श्रावयेत् ॥६६॥**
**आर्त्तः क्रुद्धस्तमोन्धोहं क्षुत्पिपासाभयार्दितः ।**
**दानं पुण्यमकृत्वा वा प्रायश्चित्तं दिनत्रयम् ॥६७॥**
**उपस्पृशेत्त्रिषवणं महानद्युपसंगमे ।**
**तीर्थान्ते चैव गां दद्याद्ब्राह्मणान् भोजयेद्दश ॥**

यः क्रोधेन स्वभार्यामगम्या त्वं मे मात्रादिसमेति प्रतिजानीयात्स तां यावज्जीवं न गच्छेत्। मनसोऽनियतेच्छानिबन्धनत्वात् यदि पुनर्गन्तुमिच्छति तदा पर्षदये प्रतिज्ञाहेतुक्रोधबीजमार्त्त्यादि स्वस्य निवेदयेत् यथा तस्मिन्कालेऽहमार्त्तो व्यथितस्तमोन्धोभ्रान्तः क्षुधितः पिपासितो राजादिभीतो वा आसमनया कटुवचनैर्मुहुस्तुद्यमानः क्रुद्धस्सन्नेवमब्रुवमिति । तथा दानं करिष्यामीति सङ्कल्प्य पुण्यं काशीयात्रादिकं वा सङ्कल्प्य न करोति सोऽपि पर्षदये स्वस्य सङ्कल्प इति निवेदयेत् । अनन्तरं पर्षदुप-

कविभक्ती बलीयसीति कर्मणीप् । करणे च भा भवति । वषडग्नये । वषडिन्द्राय । योगग्रहणं किम् । नमो जिनानामायतेभ्यः । ननु ङ्याम्मृदः स्वादयो विहिताः । तदन्तविषयोऽयं नियमः पदविधिः । ततोऽसामर्थ्यादेव जिनशब्दान्न भविष्यति योगग्रहणमनर्थकम् । अन्यैरपि योगे यथा स्यात् इत्येवमर्थम् । हितशब्दयोगे उपसंख्यानम् ॥*॥ अरोचकिने हितम् ॥ कृप्त्यर्थधुप्रयोगे अव्वक्तव्या ॥ * ॥ मूत्राय प्रकल्पते यवागूः । मूत्राय संपद्यते । मूत्राय जायते । भिन्नविकारापत्तौ चेदं वक्तव्यम् । अभेदे मूत्रं संपद्यते यवागूरिति नैव भवति । विकारग्रहणं किम् । देवदत्तस्य संपद्यते यवागूः । मूत्रं संपद्यते यवाग्वाः । उत्पातेन ज्ञाप्यमाने अव्वक्तव्या ॥ * ॥

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय भवेत्सिता ॥
तेनैतत् सर्वं लब्धम् ॥

## प्रकृष्यगर्हे मन्यकर्मण्यजीवे वा ॥ २७ ॥

प्रकृष्यगर्हाऽतिशयतिरस्कारः । प्रकृष्यगर्हे गम्ये मन्यतेः कर्मणि जीववर्जिते वा अव्विभक्ती भवति । न त्वा तृणं मन्ये । न त्वा तृणाय मन्ये । न त्वा बुसं मन्ये । न त्वा बुसाय मन्ये । प्रकृष्येति किम् । काष्ठं त्वां मन्ये । लोष्टं त्वा मन्ये । न त्वा नावं मन्ये । यावत्तीर्णं नाव्यं भवति । न त्वा अन्नं मन्ये । यावद् भुक्तं श्राद्धम् । गर्ह इति किम् । इन्द्रनीलात् पद्मरागमधिकगुणं मन्ये । प्रशंसेयम् । उभयग्रहणं किम् । अश्मानं दृषदं मन्ये । स्वरूपकथनमेतत् । मन्यग्रहणं किम् । न त्वा तृणं चिन्तयामि । विकरणनिर्देशः किम् । न त्वा

तृणं मन्ये । अजीव इति किम् । न त्वां श्वानं मन्ये । न त्वां शृगालं मन्ये । अगर्हवाचित्वाद् युष्मदस्मदादेरङ्विभक्ती न भवति ॥

### संज्ञो भा ॥ २८ ॥

कर्मणीति वर्तते । संपूर्वस्य जानातेः कर्मणि भा भवति । मात्रा संजानीते । मातरं संजानीते । पित्रा संजानीते । पितरं संजानीते । संप्रतेरस्मृताविति दः । वेति व्यवस्थितविभाषाऽनुवर्तते । तेन दविषये भाविकल्पः । स्मृत्यर्थे भाविधिः । तत्र मातुः संजानाति । मातरं संजानाति । स्मर्थदयेशाङ्कर्मणीत्यत्र ताविकल्पं वक्ष्यति । कृत्प्रयोगे परत्वात् कर्तृकर्मणोः कृतीति तैव भवति मातुः संज्ञाता ॥

### कर्तृकरणे भा ॥ २९ ॥

कर्त्तरि करणे च कारके भाविभक्ती भवति । देवदत्तेन भुक्तम् । जिनदत्तेन भुक्तम् । करणे । दात्रेण लुनाति । भेति वर्तमाने पुनर्भाग्रहणं किम् । प्रकृत्यादिभ्यो यथा स्यात् । प्रकृत्या ऽभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण वैयाकरणः । काश्यपोऽस्ति गोत्रेण । समेण धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । सहस्रेण अश्वान् क्रीणाति ॥

### सहार्थेन ॥ ३० ॥

योग इति मण्डूकप्लुत्याऽनुवर्तते । सहशब्दार्थेन योगे भाविभक्ती भवति । प्रधानस्य मृदर्थातिरेकाभावादप्रधाने भवति । पुत्त्रेण सहागतः । पुत्त्रेण सह पिङ्गलः ।

पुत्रेण सह धनवान् । अत्र प्रधानाप्रधानयोः क्रियागुणद्रव्यसम्बन्धे सति सहयोगः । अर्थग्रहणं किम् । पुत्रेण सार्द्धमागतः । पुत्रेण समम् । पुत्रेण साकम् । पुत्रेणामा । तस्य द्रोणस्य संग्रामः सारणेन गदेन च । युगपत् कोपकामाभ्यां मनीषिण इवाभवत् । विनाऽपि सहशब्देन तदर्थसंप्रत्ययमात्रे च भवति । अन्त्येनेताऽदिः । अन्त्येन सह आदिरित्यर्थः । योग इत्येव । शिष्येण सहोपाध्यायस्य गौः । पुत्रेण सह स्थूलो ग्रामे । उपाध्यायशब्दस्य ग्रामशब्दस्य च नास्ति सहशब्देन योगः ॥

## येनाङ्गिविकारेत्थम्भावौ ॥ ३१ ॥

अङ्गिविकारः शरीरविकृतत्वम् । अनेन प्रकारेण भवनमित्थंभावः । कश्चिदेव छात्रादौ प्रकारे वृत्तिरित्यर्थः । येनाङ्गिनो विकार इत्थम्भावश्च लक्ष्यते ततो भाविभक्ती भवति । अक्ष्णा काणः । पाणिना कुणिः । पादेन खञ्जः । इत्थम्भावेऽपि भवान् कमण्डलुना छात्रमद्राक्षीत् । चूलया परिव्राजकमद्राक्षीत् । सहार्थेनेत्यस्याविवक्षायामिदं द्रष्टव्यम् । अङ्गिविकारेत्थम्भावाविति किम् । अक्षि काणमस्य । वृक्षं प्रति विद्योतते ॥

## हेतौ ॥ ३२ ॥

हेताविस्यर्थनिर्देशः । हेतावर्थे भा च भवति तद्वाचिनः । अन्नेन वसति । धनेन कुलम् । विद्यया यशः । इह लौकिकफलसाधनयोग्यः पदार्थो हेतुर्गृह्यते । तद्योजको हेतुरित्यस्य पारिभाषिकस्य प्रयोगे सिद्धैव भा । उत्तरसूत्रे त्वविशेषेण हेतोर्ग्रहणं द्रष्टव्यम् ॥

## कर्णोऽकर्त्तरि ॥ ३३ ॥

हेताविति वर्तते । कर्तृवर्जिते ऋणे हेतौ काविभक्ती भवति । भापवादोऽयम् । शताद्बद्धः । सहस्राद्बद्धः । उत्तमर्णोऽत्र कर्ता । अकर्तरीति किम् । बद्धस्त्वया देवदत्तः । नाऽहं बध्नामि । शतं मे धारयति । शतेन बद्धः । बन्धितस्त्वया देवदत्तः । नाऽहं बन्धयामि । शतेन बन्धितः । कथं देवदत्तेन शतेन बन्धितः । एकस्य हेतुकर्तृत्वमपरस्य प्रयोज्यकर्तृत्वमित्यदोषः । केति योगविभागः । तेन हेतौ काऽपि भवति । कृतकत्वादनित्यः । अनुपलब्धेर्नास्तीति ॥

## गुणे श्रीदत्तस्याऽस्त्रियाम् ॥ ३४ ॥

हेताविति वर्तते । अस्त्रीलिङ्गे गुणे हेतौ श्रीदत्तस्याचार्यस्य मतेन काविभक्ती भवति । अन्येषां मतेन हेताविति भा । जाड्याद्बद्धः । जाड्येन बद्धः । परिख्यात्यान्मुक्तः । पारिख्यात्येन मुक्तः । गुण इति किम् । धनेन कुलम् । अस्त्रियामिति किम् । बुद्ध्या मुक्तः ॥

## ता हेतौ ॥ ३५ ॥

हेताविति शब्दनिर्देशोऽयं हेत्वर्थस्य तु प्रकृतत्वात् । हेतुशब्दे प्रयुक्ते हेत्वर्था ता भवति । अन्नस्य हेतोर्वसति । अध्ययनस्य हेतोर्वसति । भिक्षाया हेतोर्वसति । हेतुशब्दोऽपि हेत्वर्थे वर्तते । तस्मादपि ता । सामानाधिकरण्याद्वा ॥

## सर्वनाम्नो भा च ॥ ३६ ॥

हेतुशब्दे प्रयुक्ते सर्वनाम्नो भाविभक्ती ता च । केन हेतुना वसति । कस्य हेतोर्वसति । येन हेतुना वसति । यस्य हेतोर्वसति । पूर्वेण तायामेव प्राप्तायामयमारम्भः ।

अथवा चकारोऽनुक्तसमुच्चयार्थः । तेन निमित्तकारणप्रयोजनहेतुषु प्रयुक्तेषु सर्वासां प्रायोदर्शनमित्येतल्लब्धम् । किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्तात् । कस्य निमित्तस्य । कस्मिन्निमित्ते वसति । एवं कारणप्रयोजनहेतुषूदाहार्यम् । प्रायोग्रहणादिन्न भवति ॥

## का ऽपादाने ॥ ३७ ॥

अपादाने कारके काविभक्ती भवति । ग्रामादागच्छति । आचार्यादधीते । रथात् पतितः । केति योगविभागादन्यत्राऽपि भवतीति । तेनेदं बहु वक्तव्यं न भवति । प्यखे कर्मणि का वक्तव्या । प्रासादमारुह्य प्रेक्षते । प्रासादात् प्रेक्षते । प्रासादाच्छृणोति । अधिकरणे प्यखे का वक्तव्या । आसने उपविश्य प्रेक्षते । आसनात् प्रेक्षते । शयनात् प्रेक्षते । प्रश्नाख्यानयोश्च का वक्तव्या । किं देवदत्तो व्याकरणात् कथयति । आख्याने व्याकरणात् कथयति । यतश्चाध्वकालपरिच्छेदस्ततः का वक्तव्या । गवीधुमतः साङ्काश्यं चत्वारि योजनानि । कार्तिक्या आग्रहायणी मासे । कायुक्तात् परादध्वनः वा वेप् च वक्तव्ये । गवेधुमत साकाश्यं चत्वारि योजनानि चतुर्षु योजनेषु ॥

## दिक्छब्दान्यारादितरर्त्तेऽञ्च्वाहियुक्ते ॥ ३८ ॥

दिक्छब्द अन्य आरात् इतर ऋते अञ्चु आ आहि इत्येतैर्युक्ते का विभक्ती भवति । दिक्छब्द । इयमस्याः पूर्वा । इयमस्या उत्तरा । शब्दग्रहणं किम् । दिशि दृष्टो यः शब्दो देशकालवृत्तिनापि तेन योगे यथा स्यात् । पूर्वो

ग्रामात् । उत्तरो ग्रामात् । पूर्वो ग्रीष्माद्वसन्तः । अन्यदित्यर्थग्रहणम् । अन्यो देवदत्तात् । व्यतिरिक्तो देवदत्तात् । भिन्नो देवदत्तात् । अर्थान्तरं देवदत्तात् जिनदत्तः । देवदत्ते मृदर्थातिरेकात् तायां प्राप्तायां का विधीयते । आरात्शब्दो झिसंज्ञकः । दूरेऽन्तिकेच वर्तते तद्योगे दूरान्तिकार्थैस्ता चेति अस्मिन् प्राप्ते काविधिः । आराद् गृहात् क्षेत्रम् । आराद्देवदत्तात् पीठम् । इतरो निर्दिश्यमानप्रतियोग्यर्थः । इतरो देवदत्तात् । ऋते इति झिसञ्ज्ञं पदम् । ऋते धर्मात् । कुतः सुखम् । अञ्चुधु । प्राग्ग्रामात् । प्राची दिग्रमणीया । इत्येवमाद्यर्थे आगतस्य अस्तातः अञ्चेरुबित्युप् । अस्य दिक्छब्दत्वेपि तातसर्थे त्येनेति ता प्राप्ता तदपवादोऽयम् । आ दक्षिणा ग्रामात् । उत्तरा ग्रामात् । आहि । दक्षिणाहि ग्रामात् । उत्तराहि ग्रामात् । अस्तादर्थे दक्षिणादा-आहिच दूरे । उत्तराच्चेति आआहित्यौ । अत्रापि ता तसर्थेत्येनेति ता प्राप्ता । अवयवयोगे प्रतिषेधो वक्तव्यः । पूर्वञ्छात्राणामामन्त्रयस्व ॥

## ता ऽतसर्थै त्येन ॥ ३९ ॥

वक्ष्यति दक्षिणोत्तराभ्यामतस् । तत्समानार्थेन त्येन युक्ते ता विभक्ती भवति । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । उपरि ग्रामस्य । उपरिष्टाद् ग्रामस्य । उपर्युपरिष्टात्पश्चादिति अतसर्थे निपातितौ । पुरो ग्रामस्य । पुरस्ताद् ग्रामस्य । पूर्वाधरावराणां पुरधवोऽस्तीतीति च पुरादेशः ॥

## इवेनेन ॥ ४० ॥

इब्विभक्ती भवति एनेन योगे । दक्षिणेन विजयार्द्धं

वसति । दक्षिणोत्तरावरादादित्यधिकृत्य । वैनोदूरेकाया इति अस्तादर्थे एन इत्ययं त्यः । पूर्वसूत्रे नेति योगविभागादनेन योगे ताऽपि भवति इति केचित् । दक्षिणेन ग्रामस्य । उत्तरेण ग्रामस्य ॥

## पृथग्विनानानाभिर्भा वा ॥ ४१ ॥

पृथग्विना नाना इत्येतैर्युक्ते वा भाविभक्ती भवति । पृथग्देवदत्तेन पृथग्देवदत्तात् । विना देवदत्तेन । विना देवदत्तात् । नाना देवदत्तेन । नाना देवदत्तात् । पक्षे अन्यार्थत्वात् कापि भवति । अथ पृथगादयोऽसहायार्थे वर्तन्ते नान्यार्थे । एवं तर्ह्यधिकारात् का एष्टव्या । त्रयाणां ग्रहणं पर्यायनिवृत्त्यर्थम् । हिरुग्देवदत्तस्य । करणे स्तोकाल्पकृच्छ्रकतिपयेभ्योऽसत्ववचनेभ्यो भाके वक्तव्ये । स्तोकेन मुक्तः । स्तोकान्मुक्तः । अल्पेन मुक्तः । अल्पान् मुक्तः । कृच्छ्रेण मुक्तः । कृच्छ्रान्मुक्तः । कतिपयेन मुक्तः । कतिपयान्मुक्तः । असत्ववचनेभ्य इति किम् । स्तोकेन विषेण हतः । नेदम् वक्तव्यम् । विवक्षातः कारकाणि भवन्ति इत्युभयं सिद्धम् । क्रियाविशेषणविवक्षायां भाके न भवतः । स्तोकं चलति । अल्पं जल्पति ॥

## दूरान्तिकार्थैस्ता च ॥ ४२ ॥

केति वर्तते । दूरार्थैरन्तिकार्थैश्च ग्रामस्य युक्ते ताविभक्ती भवति का च । दूरं ग्रामस्य । दूरं ग्रामात् । विप्रकृष्टं ग्रामस्य । विप्रकृष्टेन ग्रामात् । अन्तिकं ग्रामस्य । अन्तिकं ग्रामात् । अभ्यासं ग्रामस्य । अभ्यासं ग्रामात् ॥

## तेभ्य इप् च ॥ ४३ ॥

तेभ्यो दूरान्तिकार्थेभ्य इबिरभक्ती भवति का च । दूरं ग्रामस्य । दूराद् ग्रामस्य । विप्रकृष्टं ग्रामस्य । विप्रकृष्टाद् ग्रामस्य । अन्तिकं ग्रामस्य । अन्तिकाद् ग्रामस्य । समीपं ग्रामस्य । समीपाद् ग्रामस्य । कानुवर्तनादेव सिद्धा । चकारो ऽनुक्तसमुच्चयार्थः । तेन भापि भवति । दूरेण ग्रामस्य । अन्तिकेन ग्रामस्य । असत्ववचनेभ्य इति वक्तव्यम् । इह मा भूत् । दूरात् पथ आगतः । दूरस्य पथः शंबलम् । अन्तिका ग्रामाः । यद्यसत्ववचनेभ्य इत्युच्यते इब्विधानमनर्थकम् । लिङ्गमशिष्यं लोकाश्रयत्वात् । नपुंसके सारम्भावेन सिद्धम् । इदं प्रयोजनं सपूर्वाया वाया इत्येष विकल्पो मा भूत् । ग्रामो दूरं त्वा पश्यति । ग्रामो दूरं मा पश्यति ॥

## ईबधिकरणे च ॥ ४४ ॥

ईब्विभक्ती भवति अधिकरणे कारके दूरान्तिकार्थेभ्यश्च । कटे आस्ते । शयने शेते । दूरान्तिकार्थेभ्यः । दूरे ग्रामस्य । विप्रकृष्टे ग्रामस्य । अन्तिके ग्रामस्य । समीपे ग्रामस्य । क्तस्येन्विषयस्य कर्मणीब् वक्तव्या ॥ अधीति व्याकरणे । अधीतमनेन व्याकरणमित्यस्मिन्नर्थे इष्टादेरिति इन् । एवमाम्नाती छन्दसि । परिगणितो ज्योतिषि । निमित्तात् कर्मसंयोगे इब् वक्तव्या । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः । नेदं बहु वक्तव्यम् । ईबिति योगविभागात् सिद्धम् ॥

## यद्भावाद्भावगतिः ॥ ४५ ॥

भावः क्रिया । ईबिति वर्तते । यस्य भावाद्भावान्तर-

गतिर्भवति तत्र इब् भवति । गोषु दुह्यमानासु गतः । दुग्धास्वागतः । अत्र प्रसिद्धेन गोदोहनभावेन गमनक्रिया लक्ष्यते । एवं देवार्चनायां क्रियमाणायां गतः । कृतायामागतः । इह बदरमात्रेष्वाम्रेषु गतः एकेष्वागतः । सामर्थ्याज्जातेष्विति प्रतीयते । यद्भावादिति किम् । यो जटाभिः स भुङ्क्ते जटाद्रव्यम् । पुनर्भावग्रहणं किम् । यो भुक्तवान् स देवदत्तः ॥

## ता चानादरे ॥ ४६ ॥

अनादरो ऽवज्ञा । यद्भावाद् भावान्तरगतिर्भवति तत्र ताविभक्ती भवति ईप् चानादरे गम्यमाने । देवदत्तस्य क्रोशतः प्राव्राजीत् । देवदत्ते क्रोशति प्राव्राजीत् । रुदतः प्राव्राजीत् । रुदति प्राव्राजीत् । अत्रावज्ञानेन क्रोशनेन प्रव्रजनभावो लक्ष्यते ॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ४७ ॥

स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैर्युक्ते तपौ विभक्त्यौ भवतः । गवां स्वामी । गोषु स्वामी । गवामीश्वरः । गोष्वीश्वरः । गवामधिपतिः । गोष्वधिपतिः । दायमादत्ते दायादः । प्र इतिनियमादन्यस्मिन् गावप्राप्ते के अत एव निपातनात् कः । गवां दायादः । गवां साक्षी । गोषु साक्षी । गवां प्रतिभूः । गोषु प्रतिभूः गवां प्रसूतः । गोषु प्रसूतः चकारः किमर्थः । तेपोरनुवर्तनार्थः । अन्यथा पूर्वत्र चानुकृष्टाया ईपोऽनुवृत्तिर्न स्यात् । उत्तरसूत्रयोरपि चकारस्येदमेव फलम् । प्रसूतयोगे ईबेव प्राप्ता इतरैर्योगे ता प्राप्ता ॥

## कुशलायुक्तेन चासेवायाम् ॥ ४८ ॥

आसेवा मुहुर्मुहुः सेवा तात्पर्यं च । कुशल आयुक्त इत्येताभ्यां युक्ते आसेवायां गम्यमानायां तेपौ विभक्त्यौ भवतः । कुशलो विद्याग्रहणस्य कुशलो विद्याग्रहणे । आयुक्तस्तपश्चरणस्य आयुक्तस्तपश्चरणे । आसेवायामिति किम् । आयुक्तो गौः शकटे । आकृष्य युक्त इत्यर्थः । अधिकरणलक्षणेयमीप् ॥

## यतश्च निर्द्धारणम् ॥ ४९ ॥

जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम् । यतश्च निर्द्धारणं ततस्तेपौ विभक्त्यौ भवतः । मनुष्याणां क्षत्रियः शूरतमः । मनुष्येषु क्षत्रियः शूरतमः । नारीणां श्यामा दर्शनीयतमा । नारीषु श्यामा दर्शनीयतमा । अध्वगानां धावन्तः शीघ्रतमाः । अध्वगेषु धावन्तः शीघ्रतमाः । प्रपञ्चार्थमिदं समुदाये अवयवोऽन्तर्भूतः । अधिकरणविवक्षायामीप् सिद्धा अवयवसम्बन्धविवक्षायां तापि सिद्धा अतएवापादाने कापि भवति । गोभ्यः कृष्णा निर्द्धार्यते इति ॥

## विभक्ते का ॥ ५० ॥

यतश्च निर्द्धारणमिति वर्तते भिन्नजातीयात् समुदायाद्गुणादिना पृथक्करणं विभक्तनिर्द्धारणं तत्र का विभक्ती भवति । पूर्वेण तेपोः प्राप्तयोरयमपवादः । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः । दर्शनीयतराः । अयमस्मादधिकः अयमस्माद्विलक्षणः । इदमपि प्रपञ्चार्थम् । पाटलिपुत्रकाणामवधिभावेन बुद्धिं प्राप्तानामपादानत्वमस्ति ॥

## साधुनिपुणेनाचार्यामीबप्रतेः ॥ ५१ ॥

साधु निपुण इत्येताभ्यां युक्ते अर्चायां गम्यमानाया-मीब्विभक्तो भवति प्रतिशब्दस्याप्रयोगे। मातरि साधुः । मातरि निपुणः । पितरि निपुणः । तापवादोऽयम् । अर्चा-यामिति किम् । साधुर्निपुणो वाऽमात्यो राज्ञः । अप्रतेरिति किम् । साधुर्देवदत्तो मातरं प्रति । प्रतिग्रहणमगितिसंज्ञा-नामभिपर्यंतानामुपलक्षणम् । मातरमभि । मातरं परि । मातरमनु । कथमसाधुः पितरि । अनिपुणो मातरि । पूजा-प्रयुक्तसाधुनिपुणप्रतिषेधोऽयम् ।

## प्रसितोत्सुकाभ्यां भा च ॥ ५२ ॥

प्रसित उत्सुक इत्येताभ्यां युक्ते भाविभक्तो भवति । ईप् च । केशैः प्रसितः । केशेषु प्रसितः । प्रसक्त इत्यर्थः । केशैरुत्सुकः । केशेषूत्सुकः । पक्षे भार्थमिदम् । ईवधिकरण-त्वादेव सिद्धः ॥

## उसि भे ॥ ५३ ॥

ईबनुवर्तते भा च । उस्विषये भवाचिनि भेपी विभ-क्त्यौ भवतः । भाद्युक्तः काल इत्यागतस्याणः उसभेद इत्युसिकृते यदा भवाचीशब्दः काले वर्तते तदा तस्माद्भा च ईप् च भवत इत्यर्थः । पुष्येण पायसमश्नीयात् । पुष्ये पायसमश्नीयात् । मघाभिः पललौदनम् । मघासु पललौद-नम् । उसीति किम् । मघासु ग्रहः नात्र मघाशब्दः काले वर्तते । भ इति किम् । पञ्चालेषु वसति । पञ्चालस्यापत्यानि पञ्चालाः तेषां निवासः पञ्चालः । निवासार्थे आगतस्याणः जनपद उसित्युस् । इह कस्मान्न भवति । अद्य पुष्यः ।

मिङैकार्थत्वात् चानुकृष्टाया ईपः कथमनुवृत्तिः ईबधिकारे सूत्रारम्भसामर्थ्यादत्राप्यधिकरणत्वादीप् सिद्धा पक्षे भार्थं वचनं यद्यधिकरणस्यापि करणविवक्षा यथा स्थाल्या पचति तदेदं प्रपञ्चार्थम् ॥

मिङैकार्थे वा प्रथमा ॥ ५४ ॥

मिङन्तेन पदेन एकार्थे वर्तमानान्मृदो वा विभक्ती भवति । गौश्चरति । कुमारी तिष्ठति । ओदनः पच्यते । खारो मीयते । एकः । द्वौ । बहवः । इत्यत्रोक्तेष्वप्येकत्वादिषु भा भवतीत्युक्तप्रायम् । च वा ह उच्चैरित्येवमादिषु अनर्थकेषु च प्रादिषु मिङन्तेनैकार्थत्वाभावेऽपि सुपो भेरिति ज्ञापकाद्भवति । भावे वर्तमानेन मिङन्तेन स्वभावादन्येनैकार्थत्वं नास्ति । आस्यते देवदत्तेन नन्वेकत्वादिविशिष्टेषु कर्मादिषु कर्मादिविशिष्टेषु वा एकत्वादिषु इबादिनां नियमात् परिशेषात् वृत्तः प्लक्ष इत्येवमादिषु वादिषु च ङ्याम्मृद इत्यनेनैव वाथाः सिद्धत्वादनर्थकमिदं नानर्थकम् । एकद्विबहुवचनानां व्यतिकरनिवृत्त्यर्थं वायास्नायाश्च विषयभेदार्थं चेदं विसर्जनीयो विभाषा सन्देहनिवृत्त्यर्थम् ॥

सम्बोधने बोध्यम् ॥ ५५ ॥

सम्बोधनमभिमुखीकरणं सम्बोधने या वा तस्या बोध्यमित्येषा संज्ञा । सम्बोधनेऽपि मिङैकार्थत्वमस्ति इति पूर्वेण वाविधानम् । हे देवदत्त आगच्छ । हे देवदत्तौ । हे देवदत्ताः । हे पचन् । हे पचमान । सम्बोधन इति शतृशानौ बोध्यसंज्ञाप्रयोजनम् । बोध्यमसद्वदित्येवमादि ॥

## एकः कि ॥ ५६ ॥

बोध्यसंज्ञायां वाया एकवचनं किसंज्ञं भवति । हे कन्ये । हे वटो । किप्रदेशाः केरेङ इत्येवमादयः ॥

## ता शेषे ॥ ५७ ॥

कर्मादिकारकाणां अविवक्षा कर्मादिभ्योऽन्यो वा मृदर्थातिरेकः स्वस्वामिसंबन्धादिः शेषः । ता विभक्ती भवति शेषे अर्थविशेषे । नटस्य शृणोति । ग्रन्थिकस्य शृणोति । स्वस्वामिसम्बन्धसमीपसमूहविकारावयवस्थानादयस्तार्थाः । राज्ञः स्वम् । मद्राणां राजा । देवदत्तस्य समीपम् । यवानां राशिः । यवानां धानाः । देवदत्तस्य हस्तः । गोः स्थानम् । शेषग्रहणं किम् । इवादयो नियताः कर्मादयस्त्वनियतास्तेभ्यस्ता मा भूत् ॥

## ज्ञोस्वार्थेकरणे ॥ ५८ ॥

स्वार्थोऽवबोधनं तत्पर्युदस्यतो जानातेरस्वार्थे वर्तमानस्य करणे ताविभक्ती भवति । सर्पिषो जानीते । पयसो जानीते । सर्पिषा करणभूतेन अवेक्षते प्रवर्तते वा इत्यर्थः । ज्ञोपह्नवेधेरिति दविधिः करणस्य शेषत्वविवक्षायामविवक्षायां च तैव भवति । अस्वार्थ इति किम् । स्वरेण पुत्रं जानाति ॥

## स्मर्थदयेशां कर्मणि ॥ ५९ ॥

शेष इति वर्तते स्मृ इत्यनेन समानार्थानां धूनां दय ईश् इत्येतयोश्च कर्मणि शेषत्वेन विवक्षिते ता विभक्ती भवति । मातुः स्मरति । पितुरध्येति । सर्पिषो दयते । सर्पिष ईष्टे । कर्मणीति किम् । मातुर्गुणैः स्मरति । शेष इत्येव

मातरं स्मरति। यद्येवं नार्थोऽनेन ता शेष इत्येव सिद्धम् । लादेसेनभ्केति प्रतिषेधोऽपि कर्तृकर्मणोः कृतीत्येतस्याः प्राप्तेरनन्तरत्वात् नापि प्रतिपदमिति सविधिप्रतिषेधार्थं नेयं प्रतिपदविधाना ता वृत्तिरपि दृश्यते अर्थानुस्मरणं धर्मानुचिन्तनम्। एवं तर्हि कर्मणः शेषत्वेन विवक्षितत्वादकर्मकत्वोपपत्तेर्लव्यक्तखार्थाः भावे सिद्धा भवन्ति। मातुः स्मर्यते। मातुः स्मर्तव्यम्। सकर्मकविवक्षायां कर्मणि भवन्ति। माता स्मर्यते। माता स्मर्तव्या॥

प्रतियत्ने कृञः ॥ ६० ॥

करोतेः कर्मणि ताविभक्ती भवति प्रतियत्ने गम्यमाने। असतोऽर्थस्य प्रादुर्भावाय सतो गुणान्तराधानाय समीहा प्रतियत्नः। एधो दकस्योपस्कुरुते। काण्डं गुणस्योपस्कुरुते। गन्धनावक्षेपादिना दः। प्रतियत्न इति किम्। कटं करोति। बुद्धा शेष इत्येव एधो दकमुपस्कुरुते॥

रुजर्थस्य भाववाचिनो ऽज्वरिसन्तापेः ॥ ६१ ॥

रुजर्थानां धूनां भावकर्तृकाणां कर्मणि ता विभक्ती भवति ज्वरिसन्तापी वर्जयित्वा। चोरस्य रुजति रोगः। रुजर्थस्येति किम्। एतिजीवेतिमानदः। गत्यर्थयोः भाववाचिन इति किम्। श्लेष्मा मधुराशिनं रुजति। अज्वरिसन्तापोरिति किम्। आमूनं ज्वरयति ज्वरः। घटादित्वात् प्रादेशः। अत्याशिनं सन्तापयति ज्वरः। शेष इत्येव। चोरं रुजति॥

आशिषि नाथः ॥ ६२ ॥

आशीःक्रियस्य नाथः कर्मणि ता विभक्ती भवति। सर्पिषो नाथते। पयसो नाथते। सर्पिर्मे भूयात् इत्यर्थः।

आशिषि नाथ इत्युपसंख्यानेन दविधिः । आशिषीति किम् । माणवकमुपनाथति अङ्ग पुत्राधीष्वेति । शेष इत्येव सर्पिर्नाथते ॥

## जासनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ६३ ॥

जास निप्रहण नाट क्रथ पिष इत्येतेषां हिंसाक्रियाणां कर्मणि ता विभक्ती भवति । जस ताडन इति चौरादिकः । चोरस्योज्जासयति । वृषलस्योज्जासयति । जसु मोक्षण इत्येतस्य दैवादिकस्याहिंसार्थत्वादग्रहणम् । जास इति कृतदीत्वोच्चारणं किम् । प्रादेशे मा भूत् । दस्युमजीजसम् । निप्रहण इति निप्रयोः समुदितयोः व्यस्तयोर्विपर्यस्तयोर्ग्रहणम् । चोरस्य निप्रहन्ति । चोरस्य निहन्ति । चोरस्य प्रहन्ति । चोरस्य प्रणिहन्ति । नट अवस्यन्दने । चुरादिः चोरस्योन्नाटयति । दीत्वोच्चारणं किम् । दस्यु मेऽनीनटत् । क्रथ-क्नथ क्लथ हिंसार्थाः । हेतुमतीति णिच् । चोरस्योत्क्राथयति दीत्वं हि किन्दस्यामूचिक्रथत् । घटादित्वेऽपि निपातनादुडः प्रादेशबाधनार्थं च । चोरस्य पिनष्टि । वृषलस्य पिनष्टि । हिंसायामिति किम् । धानाः पिनष्टि । शेष इत्येव । चौरं निहन्ति । रुजर्थत्वादेतेषामपीति चेद्भावकर्तृकार्थं वचनं चोरस्योज्जासयति राजा ॥

## व्यवहृपणोः सामर्थ्ये ॥ ६४ ॥

सामर्थ्यं समानार्थत्वं व्यवहृ पण इत्येतयोः सामर्थ्ये स्तुतिकर्मणि ता भवति क्रयविक्रये द्यूते च सामर्थ्यम् । शतस्य व्यवहरते । सहस्रस्य व्यवहरते । सहस्रस्य पणते । आयः कस्मान्न भवति गुपादिभिः साहचर्यात् भौवादिकस्य स्तुत्यर्थस्य तत्र ग्रहणम् । इह तु तौदादिकस्यानुदात्तेतः । सामर्थ्य-

इति किम् । शलाकां व्यवहरति । गणयतीत्यर्थः । देवान् पणयति । शेष इत्येव । शतं व्यवहरति । सहस्रं पणयते ॥

दिवश्च ॥ ६५ ॥

व्यवहृपणोः सामर्थ्य इति वर्तते । दिवश्च व्यवहृपणिसमानार्थस्य कर्मणि ता भवति । शतस्य दीव्यति । सहस्रस्य दीव्यति । चकारः किमर्थः सामर्थ्यानुकर्षणार्थः । ननु विकारादेव सामर्थ्यग्रहणमनुवर्तते ऽन्यथा चानुकृष्टमुत्तरत्र च वानुवर्तते वागावित्यत्र सामर्थ्यानुवृत्तिर्न स्यात् अनुक्तसमुच्चयार्थस्तर्हि क्वचिदन्यस्यापि प्रयोगे यथा स्यात् सक्तूनां पूर्णः । ओदनस्य तृप्तः सामर्थ्य इत्येव । साधून् दीव्यति ॥

वा गौ ॥ ६६ ॥

सामर्थ्य इति वर्तते । गिपूर्वस्य दिवः कर्मणि वा ता विभक्ती भवति । शतस्य प्रदीव्यति । सहस्रस्य प्रतिदीव्यति । सहस्रं प्रदीव्यति । इयं पूर्वेण प्राप्ते विभाषा । ननु शेषविवक्षया तापि भविष्यति इति व्यर्थमिदम् । एवं तर्हि इदमेव ज्ञापकं अगिपूर्वस्य शेषविवक्षा नास्ति इति । शतस्य दीव्यति । सामर्थ्य इत्येव । शलाकां प्रतिदीव्यति ॥

कालेऽधिकरणे सुजर्थे ॥ ६७ ॥

काले ऽधिकरणे ता विभक्ती भवति सुजर्थे त्ये प्रयुक्ते । द्विरन्होऽधीते । त्रिरन्होधीते । पञ्चशरान् भुङ्क्ते । संख्याया ध्वभ्यावृत्तौ कृत्वसिति कृत्वस् । द्वित्रिचतुर्भ्यः सुजिति सुच् । काल इति किम् । द्विःकांसपात्र्यां भुंक्ते अधिकरण इति किम् । द्विरन्हो भुंक्ते । सुजर्थ इति किम् । अहनि भुंक्ते । रात्रौ भुंक्ते । न त्वत्रापि द्विः त्रिर्वेति सुजर्थो गम्यते । प्रयुक्तग्रहणं

यदा शरीराद्युपकरणवत्त्वम्, तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

**तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥**

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने "अथ रथान् रथयोगान् पथः सृजत" इत्यारभ्य "अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ते"ति

य एषु सुप्तेषु जागर्ति

कामंकामं पुरुषो निर्मिमाणः ।

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति चेश्वरसृष्टै रथाद्युपकरणैर्जीवो भुङ्क्ते, तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥

**भावे जाग्रद्वत् ॥ १४ ॥**

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते । परमपुरुषोऽपि लीलार्थं दशरथवसुदेवपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीला[1]रसं यथा भुङ्क्ते, तथा[2] मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥

नन्वत्माऽणुपरमाण इत्युक्तम्, कथमनेकशरीरेष्वेकस्याणो रात्माभिमानसम्भव इत्यत्राह[3]—

१ मनुष्यदेहलीलेति प्र. पु. ।

२ यदा भुङ्क्ते तदेति प्र. पु. ।

३ इत्यत आहेति प्र. पु. ।

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे[1] वर्त्तमानस्य स्वप्रभया देशान्तरावेश,स्तथाऽऽत्मनोऽप्येकदेशस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीराबेशो नानुपपन्नः. यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्त्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन्देहे आत्माभिमान, स्तद्वत् । इयान्विशेषः, अमुक्तस्य कर्मणा संकुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सम्भवति, मुक्तस्य त्वऽसंकुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमितियहणानुगुणा च नानुपपन्ना । तथा हि दर्शयति—

"बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति ।

अमुक्तस्य कर्म नियामकम् मुक्तस्य तु स्वेच्छेति विशेषः ॥

ननु परं ब्रह्म प्राप्तस्याऽऽन्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मिति, तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते, तत्रोत्तरम्—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं वचनं मुक्तविषयम्, अपि तु 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्' । स्वाप्ययः सुषुप्तिरित्युक्तम्,सम्पत्तिश्च मरणम् । "वाङ् मनसि सम्पद्यते" इत्यारभ्य "तेजः परस्यां देवताया"मिति वचनात्तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निःसंबोधत्वं च विद्यते[2], अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्निःसंबोधत्वम् मुक्तस्य च सर्वज्ञत्व'माविष्कृतं हि' श्रुत्या "नाह[3] खल्वयं भगव[4]एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी"ति सुषुप्तिवेलायां

१ एकस्यैव कस्मिन्देशे—इति प्र· तृ· पु· ।
२ विद्यते इति पु· त्रयेपि पाठः ।
३ न ह—इति प्र· पु·, नाहमिति मु· द्वि· तृ· पु· च ।
४ भगव इति नास्ति पुस्तकेषु ।

निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य "स वा एष दिव्येन चक्षुषा मनसैतान्कामान् पश्यन् रमते य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते, तथा "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्सम्बोधत्वम् "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती" त्युक्तम्, न पश्यतीत्यर्थः । अतः "प्राज्ञेनात्मने"ति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥

अभावाधिकरणं समाप्तम् ॥ ५ ॥

अथ जगद्व्यापारवर्जाधिकरणम् ६।

**जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥१७॥**

किं मुक्तस्यैश्वर्य्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः । किं युक्तम् । जगदीश्वरत्वमपीति । कुतः । "निरञ्जनः परमं साम्यमुपैती"ति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगद्व्यापाररूपजगन्नियमेन विनोपपद्येते । अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तैश्वर्य्यमित्येवं प्राप्ते प्रचक्ष्महे—

'जगद्व्यापारवर्ज्ज'मिति । जगद्व्यापारो निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम्, तद्वर्ज्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्य्यम् । कुतः । 'प्रकरणात्' । निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति । यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते । असाधारणस्य हि लक्षणत्वम् । तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते" ति, "ब्रह्म वा इदमेकमेवाग्र आसीत्तदेकं सन्न व्यभवत्

तत्क्षत्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्राक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान" इति, "आत्मा वा इदमेकमेव तत्राग्र आसीत् नान्यत्किञ्चन मिषत स ऐक्षत लोकान् सृजा इति स इमाल्ँ लोकानसृजते"ति, "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि"इत्यादिषु "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर"इत्यारभ्य"य आत्मनि तिष्ठ"न्नित्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। 'असन्निहितत्वाच्च,' न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात् ॥

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति स इमाल्ँ लोकान्कामान्नी कामरूप्यऽनुसञ्चर" न्निति प्रत्यक्षेण श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते। अतो न जगद्व्यापारवर्जमिति चेत्,न, 'आधिकारिकमण्डलस्थोक्तेः' आधिकारिकाः-अधिकारेषु नियुक्ता हिरण्यगर्भादयः,मण्डलानि तेषां लोकाः, तत्स्था भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थ"स्तस्य सर्वेषु लोकेषु कामचारो भवती"त्यादिनोच्यते। अकर्मप्रतिहतज्ञानो मुक्तोऽधिकारि[1] लोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्त्तिन आधिकारिकमण्डलस्थान्सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते, न जगद्व्यापारः ।

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्त्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पं च स्या,त्तत्राह—

**विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥**

विकारे जन्मादिके न वर्त्तत इति विकारावर्त्ति, निर्धूतनिखिल-

---

१ मुक्तोऽधिकारीति मु० पाठः ।

विकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः, तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम् । 'तथा हि' परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन 'स्थितिमाह' श्रुतिः "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिका । तद्विभूतिभूतं जगत्तत्रैव वर्तते "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति श्रुतेः । अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्यानपि भोगान् भुङ्क्त इति "सर्वेषु लोकेषु कामचार" इत्यादिनोच्यते, न मुक्तस्य जगद्व्यापारः ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम् । निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति 'दर्शयतः' श्रुतिस्मृती—

"भीषाऽस्माद्वातः पवते
भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च
मृत्युर्धावति पञ्चम" इति

"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिः, तथा "एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"ति च श्रुतिः । स्मृतिरपि—

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः—"एष ह्येवानन्दयाति"

"मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चे"ति ।

यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्य्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः, तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम्, तस्य नित्य[1]स्थितिश्च तदायत्ता, परमपुरुषस्यैतन्नित्यतया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते । अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्ज्जम् ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्ज्जमित्यवगम्यते "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वञ्च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्याननुगुण्येन वर्णनीयमिति जगद्व्यापारवर्ज्जमेव मुक्तैश्वर्य्यम् ।

यदि परमपुरुषायत्तमेव मुक्तस्यैश्वर्य्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भवाशङ्कैत्यत्राह—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्प आश्रितवात्सल्यैकजलधिः परम-

१ नित्येति नास्ति द्वि॰ पु॰ ।

कारुणिको निरस्तसमस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः परम-पुरुषोऽस्तीति शब्दादवगम्यते, एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीत उपासीनाननादिकालप्रवृत्तानन्त-दुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिका-तिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते" इत्यादिकः । तथा च भगवता स्वयमेवोक्तम्—

"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
आ ब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति ।

न चोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मैकानुभवस्वभावस्य[1] तदेक-प्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा, तदर्थारम्भाद्यसम्भवाच्च[2] पुनरावृत्तिशङ्का । न च परमपुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्त्तयिष्यति, य एवमाह—

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभ" इति ।

---

१ ०कानुभवैकस्वभावस्येति मु०, ०कानुभवस्यैकस्वभावस्येति द्वि० पु० ।
२ तदर्थान्तरारम्भाद्यसम्भवादिति मु० प्र० पु० च पाठः ।

सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥ ६ ॥

इति श्रीमद्भगवद्रामानुजमुनिप्रणीते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

**समाप्तश्च फलाध्यायश्चतुर्थः ।**

**शास्त्रं च परिसमाप्तम् ॥**

"तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमऽशीशमत् ॥"

॥ हरिः ॐ तत्सत् हरिः ॐ तत्सत् हरिः ॐ तत्सत् ॥



रूपं विषयसम्बन्धसत्त्वात्तदनुपलम्भस्तत्सत्त्वविरोध्येव । परोक्षवृत्तेरपि वृत्तित्वाविशेषाद्यावत्स्वरूपं विषयसम्बन्धसत्त्वात्तदनुपलम्भो ऽपि तादृश एव । वस्तुतस्त्वस्मन्मते नानुपलब्ध्या ज्ञानाभावो गृह्यते, किं तु ज्ञानग्राहकसाक्षिणैवानुपलम्भनिरपेक्षेण विद्यमानो वृत्त्यभावो गृह्यत इति नानुपपत्तिरिति भावः ॥

किञ्च जन्यज्ञानस्य स्वप्रकाशत्वमते षष्ठप्रमाणानङ्गीकारात्तदभावग्राहकमपि दुर्निरूपमित्याह । अपि चेति ।

(ज्ञानाभावग्राहकानुपलम्भः) । अपि च ज्ञानाभावः केन ग्राह्यः । मनसेति चेत्, किं मनःप्रतियोगिनमपि गृह्णाति उताभावमात्रम् । चरमे ऽभावमात्रं सिद्ध्येन्न तु तस्य ज्ञानसम्बन्धित्वम् । प्रथमे ज्ञानस्य मानसत्वेन तस्य स्वप्रकाशत्वम् । अविद्यमानज्ञानस्य मानसत्वं न विरुद्धमिति चेत्तर्हि स्वप्रकाशत्वं विद्यमानत्वप्रयुक्तं स्यान्न ज्ञानरूपप्रयुक्तम् । तथा सति घटादेरपि स्वप्रकाशत्वापत्तिः । विद्यमानदशायां ज्ञानं स्वप्रकाशमिति चेत् । किं विद्यमानदशायां ज्ञानस्य स्वप्रकाशत्वे विद्यमानत्वमेव प्रयोजकम्, उत विद्यमानज्ञानत्वं केवलज्ञानत्वं वा । प्रथमे ऽतिप्रसङ्गाद्द्वितीये गौरवात्तृतीयमेव वाच्यम् । तथा चातीतादिज्ञानं

कथं मनसा गृह्येत । ज्ञानाभावस्य मनसा सम्बन्धाभावाच्च । संयुक्तविशेषणता सम्बन्ध इति चेन्न । निरवयवस्य मनसो निरवयवेनात्मना संयोगानुपपत्तेः । संयोगो ह्यव्याप्य वर्त्तते, न च निष्प्रदेशात्मनि मनसि च तस्याव्याप्यवृत्तिता सङ्गच्छते ॥

मनसोऽधिकरणात्मग्राहकतया तत्रत्याभावग्राहकत्वमिति नवीनमतानुरोधेन शङ्कते । मनसेति । विकल्पासहत्वान्नैवमित्यभिप्रेत्य विकल्पयति । किमिति । अभाव इति शब्देनाभावमात्रप्रतीतावपि न ज्ञानप्रतियोगिकत्वसिद्धिर्यथा एवं मनसापि तावन्मात्रे गृहीते न तत्सिद्धिरित्याह । चरम इति । आद्ये ज्ञानस्वप्रकाशत्वभङ्गः घटादिवदैन्द्रियकत्वादित्याह । प्रथम इति । वर्तमानदशायामेव स्वप्रकाशत्वादभावकाले वेद्यत्वमविरुद्धमिति शङ्कते । अविद्यमानेति । अतीतज्ञानादेर्ज्ञानत्वे सत्यपि वर्त्तमानत्वाभावेन स्वप्रकाशत्वे ज्ञानत्वं तत्राप्रयोजकं स्यात् किन्तु वर्त्तमानत्वमेव तथा चातिप्रसङ्ग इत्याह । तर्हीति । अतिप्रसङ्गपरिहारं शङ्कते । विद्यमानेति । अत्रापि स्वप्रकाशत्वप्रयोजकं विकल्प्य दूषयति । किं विद्यमानेति । सिद्धान्तेऽपि पुरुषान्तरीयप्रकाशस्य पुरुषान्तरवृत्तिविषयत्वमेव न प्रकाशविषयत्वमिति भावः । मनसो ज्ञानाभावासन्निकृष्टत्वादपि न तद्ग्राहकत्वमित्याह । ज्ञानाभावस्येति । मनःसंयुक्तात्मविशेषणतैव तत्सम्बन्ध इति शङ्कते

संयुक्तेति । आत्ममनसोः संयोगस्यैवासम्भवान्नायं सम्बन्ध इत्याह । निरवयस्येति । निरवयवयोरपि द्रव्यत्वात्संयोगः किन्न स्यादित्यत आह । संयोगो हीति ॥

नन्वव्याप्यवृत्तित्वन्नाम स्वात्यन्ताभावसमानाधिकरणत्वं तस्य निरवयवसंयोगेऽप्यविरोध इत्याशङ्क्य भावाभावयोर्युगपदेकत्र वृत्त्यसम्भवात्प्रदेशभेदेन वृत्तिर्वाच्या, निरवयवत्वे च तदनुपपत्तिरित्याह । न च निष्प्रदेशेति ।

(निरवयवत्वे भावाभावयोर्वृत्त्यसम्भवः)

**न च निष्प्रदेशोऽप्यौपाधिकप्रदेशो न विरुध्यत इति वाच्यम्। उपाधिर्ह्युपधेयेन सम्बद्धस्तमवच्छिन्द्यात्। अन्यथातिप्रसङ्गात्। सम्बन्धश्च निरवयवे संयोगेऽनुपपन्न एव। तस्याप्युपाध्यन्तरापेक्षायामनवस्था स्यात् ॥**

निरवयवे स्वाभाविकप्रदेशभेदाभावेऽप्यौपाधिकप्रदेशभेद उपपद्यत इत्याशङ्क्याह । न च निष्प्रदेश इति । उपाधिसम्बन्धस्यैवानुपपत्तिं वक्तुं तत्स्वरूपकथनमाह । उपाधिर्हीति । अस्तु तर्हि सम्बद्धस्यैव भेदकत्वमित्याशङ्क्य स किं स्वरूपसम्बन्ध उत संयोगः । नाद्यः स्वरूपद्वयात्मकसम्बन्धस्य सम्बन्धिद्वयव्यापकत्वेन भेदकत्वायोगात्। द्वितीयस्तु निरवयवे प्रदेशभेदमन्तरेण न सम्भवतीत्यभिप्रेत्याह । तत्सम्बन्धश्चेति । उपाधिसंयोगप्रयोजकप्रदेशभेद उपाध्यन्तरसम्बन्धाधीन इत्याशङ्क्याह । तस्यापीति ॥

उपाधिसम्बन्धे उपपत्तिमुक्त्वा तदधीनप्रदेशभेदो ऽपि दुर्निरूप इत्याह । किञ्चेति ।

(प्रदेशभेदासम्भवः) **किञ्चायमौपाधिकप्रदेशभेदः पारमार्थिक उत न । आद्ये तदेकत्वव्याघातो विरुद्धयोर्धर्मयोरेकत्रासमावेशात् । औपाधिकत्वं ह्युपाधिजन्यत्वात्तद्व्याप्यत्वादुपाध्यधीनसम्बन्धाद्वा । आद्ये अग्निसंयोगाद्रक्तिमोत्पत्तौ श्यामतेवौपाधिजन्यभेदान्निर्भेदता व्यावर्तेत । न वा कश्चिदुपाधित उपधेयस्वरूपव्यतिरेकेणातज्जन्यो भेदः सम्भवति । एवमप्यणुमनसि प्रदेशभेदासम्भवाच्च । नापि द्वितीयः । स्वाभाविकप्रदेशभेदाभावे उपाधिनापि तज्ज्ञानासम्भवात् । आरोपितप्रदेशभेदज्ञाने वा तव मते ऽर्थाभावेन संयोगस्य प्रदेशवृत्तित्वासिद्धेः ॥**

भेदस्य परमार्थत्वे उपहितानुपहितयोरभेदो न स्यात् समानसत्ताकयोर्भेदाभेदयोरेकत्र विरोधादित्याह । आद्य इति । किञ्च प्रदेशभेदस्यौपाधिकत्वं नामाग्निसंयोगजरक्ततावदुपाध्यधीनोत्पत्तिकत्वं किं वा स्फटिकलौहित्यवदुपाध्यधीनज्ञानविषयत्वमथवा उपाध्युत्पत्त्याभाववत्प्रतियोगिकभेदस्य घटादौ विद्यमानस्योपाधिविशिष्टेन सम्बन्धवत्त्वमिति विकल्पयति । औपाधिकत्वमिति । आद्ये ऽपि

किं पृथक्त्वं भेद अन्योन्याभावो वा। प्रथमं दूषयति । अग्नि-संयोगादिति । अन्योन्याभावस्यानादित्वाद्द्वितीयो ऽपि न सम्भवतीत्याह । न वा कश्चिदिति । भेदस्य जन्यत्वमङ्गीकृत्य मनसि तदसम्भवमाह । एवमपीति । एकस्मिन्मनसि भेदे सति भिन्नयोः शकलयोः पूर्वावस्थातः सूक्ष्मतापत्त्या पूर्वमनसो ऽणुत्वभङ्गः स्यादित्यर्थः । द्वितीये ऽपि तद्ज्ञानं प्रमेति भ्रमः । नाद्यः । तत्र तद्भेदाभावे तत्प्रमासम्भवादित्याह । नापि द्वितीय इति । भेदज्ञानस्य भ्रमत्वे वस्तुतो भेदाभावात्प्रदेशभेदसापेक्षसंयोगानुपपत्तिरित्याह । आरोपितेति ॥

तव मते ऽनिर्वचनीयानङ्गीकारादुपाध्यधीनसम्बन्धः पारमार्थिको वक्तव्यः स च नोपपद्यते वस्तुनो द्वैरूप्यायोगादित्याह । न तृतीय इति ।

(वस्तुनो द्वैरूप्यायोगेन परमतनिरासः)

न तृतीयः तव मते तत्प्रतियोगिकभेदस्य तस्मिन्नसम्भवात् । अन्यथा तस्मिन्नतद्बुद्धेः प्रमात्वप्रसङ्गात् । नापि प्रथमद्वितीयौ अपरमार्थिकस्यानिर्वचनीयस्य त्वयानभ्युपगमात्। अत्यन्तासतश्च धर्माव्यवस्थापकत्वात्। अस्तु तर्हि संयोगो व्याप्यवृत्तिरिति चेन्न । तस्य स्वात्यन्ताभावसदेशत्वानुभवात् । अत्यन्ताभावप्रतियोगिनोश्च प्रदेशभेदनियमात् । अन्यथा विरोधो दत्तजलाञ्जलिः स्यात् ।

निमित्तसंयोगान्न्यूनानतिरिक्तप्रदेशविभुविशेषगुणानां सर्वत्रोपलम्भप्रसङ्गाच्च । न च संयोगातिरिक्तः सम्बन्ध आत्ममनसोः सम्भवति । न चानुपलब्ध्या ज्ञानाभावग्रहः । प्रतियोगिग्राहकेन्द्रियेणाधिकरणस्य संयोगलक्षणसहकारिविरहात् । अन्यथा त्वक्संयुक्ते घटे ऽन्धस्याप्यनुपलब्ध्या रूपाभावग्रहप्रसङ्गात् । अतो ज्ञानाभावसाध्यहमर्थधर्मातिरिक्तो नित्यानुभव एषितव्यः । श्रुतिरपि न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति वृत्तिमदन्तःकरणसाक्षिणां नित्यमनुभवं दर्शयति । तस्मादनुभवो नित्य इति ॥

तस्मिन्नपि तद्भेदे यत्किञ्चिदुपहिते रजते ऽप्यरजत बुद्धिः प्रमा स्यादित्याह । अन्यथेति । पारमार्थिक उत नेति विकल्पे ऽपारमार्थिकत्वं किमनिर्वचनीयत्वं उतासत्त्वं उभयथाप्यनुपपत्तिरित्याह । नापि प्रथमेति । संयोगस्य रूपादिवद्व्याप्यवृत्तित्वान्न प्रदेशभेदापेक्षेति चोदयति । अस्तु तर्हीति । एकस्मिन् भूतले घटसंयोगतदभावानुभवान्न व्याप्यवृत्तितेत्याह । न तस्येति । तर्हि निरवयवे ऽपि संयोगतदभावौ स्तामित्यत आह । अत्यन्ताभावेति । किञ्च संयोगस्य व्याप्यवृत्तित्वे परमते निमित्तसंयोगावच्छिन्नदेशसमवायिनां शब्दसुखादीनां व्याप्यवृत्तित्वं स्यादित्याह । निमित्तेति । षष्ठप्रमाणाङ्गी-

कारेऽपि न तेन ज्ञानाभावग्रहः सम्भवति ज्ञानस्य स्वप्रकाशत्वेनेन्द्रियायोग्यत्वात्प्रतियोगिग्राहकेणेन्द्रियेणाधिकरणग्रहणरूपकारणाभावादित्याह । न चानुपलब्ध्येति । नन्वधिकरणप्रत्यक्षमात्रमनुपलब्धिसहकारि न तु प्रतियोगिग्राहकेणेन्द्रियेणापीत्यत आह । अन्यथेति । ज्ञानाभावस्य प्रमाणतोऽनुभवितुमशक्यत्वात्तदभावो नित्य एवाङ्गीकर्तव्य इत्युपसंहरति । अत इति । अनुभवनित्यत्वे श्रुतिमपि प्रमाणयति । श्रुतिरपीति । न चेयं श्रुतिरीश्वरज्ञानस्यैव विनाशं निषेधतीति वाच्यम् । न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यत इत्युत्तरवाक्यासामञ्जस्यप्रसङ्गात् जीवप्रकरणविरोधाच्चेति भावः ॥

अनुभवनित्यत्वस्य प्रामाणिकत्वादेव चोद्यान्तरमपि निरस्तमिति वक्तुं चोद्यमनुवदति । एतेनेति ।

(अनुभवनित्यत्वेन तन्निरासाय स्वरूपानुवादस्तस्य ।) एतेन कथं तर्हि घटज्ञानं नष्टमुत्पन्नमिति चानुभवः । न च वृत्तिविषयोऽयमनुभवइति वाच्यम् । तस्य ज्ञानत्वविशिष्टप्रतियोगिकोत्पत्तिविनाशविषयत्वात् । वृत्तेश्चाज्ञानत्वात् । ज्ञानत्वे वा तस्या अपि स्वयम्प्रकाशत्वेन ज्ञानविषयत्वविरोधात् । अन्यथानुभवत्वहेतोस्तत्र व्यभिचारात् । न चौपचारिकं ज्ञानत्वं वृत्तेरस्तीति वाच्यम् । शब्दे ह्यौपचारिकत्वकल्पना न त्वनुभवे, अनुभूयते च

**प्रतियोगिनि ज्ञानत्ववैशिष्ट्यम् । न च भ्रान्त्या ज्ञानत्ववैशिष्ट्यं प्रतियोगिन्यवगत्य तदवच्छिन्नप्रतियोगिकोत्पत्त्यादिरनुभूयत इति वाच्यम् । प्रतियोगिनि ज्ञानत्वांशे बाधकाभावात् । तमन्तरेणापि तत्कल्पने ऽतिप्रसङ्गादिति निरस्तम् ॥**

एतेनेत्यस्य निरस्तमित्युत्तरेणान्वयः । नाशाद्यनुभवो वृत्तिविषय इत्युक्तमित्याशङ्क्य वृत्तेर्ज्ञानत्वमस्ति उत न । अन्त्ये तद्विषयत्वमनुपपन्नमित्याह । न च वृत्तीति । ज्ञानत्वपक्षे अभावप्रतियोगितया वेद्यत्वमपि न स्यादित्याह । ज्ञानत्वे वेति । ज्ञानत्वे ऽपि स्वप्रकाशत्वं वृत्तेर्नास्तीत्याशङ्क्य तर्हि स्वप्रकाशत्वानुमाने ऽनुभवत्वहेतोस्तत्र व्यभिचारः स्यादित्याह । अन्यथेति । ननु वृत्तेरौपचारिकज्ञानत्वमादाय नाशानुभवस्तद्विषयो भविष्यति, अनुभवत्वहेतोर्व्यभिचारश्च न स्यादित्याशङ्क्याह । न चौपचारिकमिति । औपचारिकत्वं हि गुणयोगादन्यत्र वृत्तिः शब्दधर्मः तच्चानुभवे न सम्भवतीत्याह । शब्दे हीति । तर्हि शुक्तौ भ्रान्त्या रजतत्वमवगत्य तन्नाशे रजतं नष्टमित्यनुभवाद्वृत्तौ ज्ञानत्वमारोप्य तन्नाशे ज्ञानं नष्टमित्याद्यनुभवो भवत्वित्याशङ्क्याह । न च भ्रान्त्येति । तमन्तरेणेति । बाधकमन्तरेणापि भ्रान्तित्वकल्पने प्रमापि भ्रमः स्यादित्यर्थः ॥

ज्ञानशब्दार्थप्रतियोगिकनाशानुभवस्य वृत्तिविषयत्वं दर्शयितुं ज्ञानशब्दार्थौ मतभेदेन द्विविध इत्याह । अत्र हीति ।

(मतभेदेन ज्ञान शब्दार्थद्वैविध्यम्) अत्र ह्युभयं सिद्धान्तवित्संमतं वृत्त्युपहितचैतन्यं ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या ज्ञानपदाभिधेयं वृद्धानां तत्रैव प्रयोगप्रत्यययोर्दर्शनात् केवले चैतन्ये ऽन्यायां च वृत्तौ तदभावात्। केवलं चैतन्यं श्रुतौ ज्ञानपदेन लक्ष्यते तत्र वृत्त्यन्तरकल्पनागौरवात् । वाक्यार्थे तदयोगाच्च । अस्मिन्मते यद्यपि वृत्तेरेव विनाशः सा च न ज्ञानं तथापि ज्ञानपदार्थोपाधितया तत्सन्निकर्षात् ज्ञानमुत्पन्नं विनष्टमिति वृत्तिरेवानुभूयते। यथा गुरुमते श्यामं नष्टं रक्तमुत्पन्नमिति तत्समवायः, भट्टमते च ककारो नष्टो गकार उत्पन्न इति तद्व्यञ्जकध्वनिः नैयायिकादिमते ऽपि गवि शशशृङ्गं नास्तीति शशीयत्वमनुभूयते । न च गुरुमते रूपस्य भट्टमते वर्णस्य नित्यत्वात् न्यायादिमते शशशृङ्गाभावाप्रतियोगित्वात्तदनुभवानामन्यथात्वमिति वाच्यम् । प्रकृते ऽप्यनुभवस्य श्रुत्यनुमानाभ्यां नित्यत्वसिद्धेस्तुल्यत्वात् । वृत्त्यन्तरज्ञानत्वे ऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावाभ्युप-

गमाच्च । अन्यथा गवि शाशशृङ्गं नास्तीति शाशी-यत्वावच्छिन्नशृङ्गप्रतियोगिकाभावानुभवविरोधात् न ज्ञानं नष्टमित्यनुभवानुपपत्तिः । एवं तदुत्पत्त्यनुभवो ऽपि ॥

यथा श्रोत्रशब्दार्थो नभ एव कर्णावच्छिन्नं तथा हृदयवच्छिन्नं चैतन्यमेव ज्ञानशब्दार्थो न वृत्तिरित्येकं मतमाह । हृद्युपहितेति । तत्र व्यवहर्तॄणां ज्ञानशब्दप्रयोगदर्शनादिति हेतुमाह । वृद्धानामिति । अन्धायामिति । चैतन्यसम्बन्धरहितवृत्तावित्यर्थः । तर्हि सत्यं ज्ञानमिति कथं ब्रह्मणि ज्ञानशब्दप्रयोग इत्यत्राह । केवलं चैतन्यमिति । तत्रापि शक्त्यन्तरमेव किं न स्यादित्यत आह । तत्रेति । किञ्च ज्ञानादिपदसमुदायात्मकवाक्यार्थस्य ब्रह्मणस्तदेकदेशज्ञानपदवाच्यत्वे तदितरपदवैयर्थ्यप्रसङ्गात् वृत्तिनिमित्तस्यापि निर्विशेषब्रह्मण्यभावाच्च न शक्तिरित्याह । वाक्यार्थ इति । अस्मिन्मते ज्ञानमुत्पन्नं विनष्टमित्याद्यनुभवः श्रोत्रं छिन्नमित्याद्यनुभववदुपाध्येकविषय इत्याह । अस्मिन्मत इति । अन्याकारनाशानुभवस्यान्यविषयत्वे पराभ्युपेतं दृष्टान्तमाह । यथा गुरुमत इत्यादिना । गुरुमते श्यामत्वादेर्नित्यत्वेन श्यामं नष्टमित्यनुभवस्य यथा-नित्यसमवाय एव तन्निरूपितो विषयः, यथा वा भट्टमते । वर्णानां नित्यत्वेन तन्नाशाद्यनुभवस्य तद्व्यञ्जकध्वनिरेवतन्नाशादिप्रतियोगितया विषयः, यथा वा वैशेषिकादिमते शशशृङ्गस्यासत्त्वेनाभावाप्रतियोगित्वात् शशशृङ्गं नास्तीत्यनुभवे शशीयत्वमेवाभावाप्रतियोगितयानु-

भूयते, तथा ज्ञानं नष्टमित्याद्यनुभवे ऽपि ज्ञानशब्दार्थोपाधिवृत्तिरेव नाशादिप्रतियोगितयाऽनुभूयत इत्यर्थः । उदाहृतानुभवेषु तथाप्रतीतेस्तन्मते बाधकसत्त्वादन्यविषयत्वमित्याशङ्क्येहापि तर्हि ज्ञाननित्यतायाः प्रमाणसिद्धत्वान्नाशाद्यनुभवस्यान्यविषयत्वं तुल्यमित्याह । न च गुरुमत इत्यादिना । किञ्च सिद्धान्ते व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावाङ्गीकाराद्वृत्तेरज्ञानत्वे ऽपि व्यधिकरणज्ञानत्वावच्छिन्नतत्प्रतियोगिकनाशाद्यनुभव उपपद्यत इत्याह । वृत्तेरज्ञानत्वे ऽपीति । अभ्युपगमाच्च न ज्ञानं नष्टमित्यनुभवानुपपत्तिरित्युत्तरेणान्वयः । व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावानङ्गीकारे बाधकमाह । अन्यथेति । ननु प्रतियोगिनि प्रतियोगितावच्छेदकविशिष्टज्ञानस्याभावधीकरणस्यात्राभावान्नैतादृशो ऽनुभवः सम्भवतीति चेत् । प्रतियोगिप्रतियोगितावच्छेदकज्ञानमात्रस्याभावधीकारणत्वात्तद्विशिष्टज्ञानत्वेन तस्य कारणत्व गौरवात् । न चैवं प्रतियोगिनिर्विकल्पकादप्यभावधीः स्यादिति वाच्यम् । धर्मधर्मिमात्रगोचरनिर्विकल्पके मानाभावादिति भावः । तर्ह्युत्पत्त्यनुभवः कथमित्याशङ्क्य सो ऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिकोत्पत्तिविषय इत्याह । एवमिति ॥

यथा सस्यविशिष्टा भूरुर्वराशब्दवाच्या एवं वृत्तिशबलं चैतन्यं ज्ञानसमुदायशक्त्याभिधीयत इति मतान्तरमाह । अथवेति ।

( ज्ञान शब्दस्यार्थान्तरत्वम् )

अथवा वृत्तिशबलं चैतन्यं ज्ञानप-

देनाखण्डशक्त्याभिधीयते जन्यस्य घटादिव्यवहारानुकूलस्य प्रमातृधर्मस्य ज्ञानपदात्प्रतीतेः । तत्र च ज्ञानं नष्टमुत्पन्नमित्याद्यनुभवो मुख्य एव । पदार्थैकदेशनाशादिविषयस्याप्यनुभवस्य रूपं नष्टमित्यादेर्मुख्यत्वात् । एतेन स्फुरणोत्पादविनाशानुभवात्स्फुरणमुत्पद्यते विनश्यतीत्यपि नवीनोक्तं प्रत्युक्तम् । वृत्त्यतिरिक्तत्वेन स्फुरणावगमेतदनुभस्य बाधितत्वात्। वृत्तावेव स्फुरणाभेदारोपेण स्फुरणं नष्टमित्याद्यनुभवात् ।

यस्मादुत्पत्तिविध्वंसविज्ञानं वृत्तिगोचरम् ।
तस्मादनुभवोऽनादिर्नित्यो वेदान्तमानतः ॥

स चानुभव एक एव भेदे प्रमाणाभावात् । अभेदे च प्रत्यक्षानुमितानुभवेऽप्यनुभवानुगतबुद्धेर्मानत्वात् ॥

वृत्तेरप्यभिधेयत्वे हेतुमाह । जन्यस्येति । परमते रूपत्वविशिष्टरूपस्य रूपशब्दवाच्यत्वेऽपि यथा रूपं नष्टमित्याद्यनुभवस्तदेकदेशव्यक्तिविषयो मुख्य एव एवं ज्ञानं नष्टमित्याद्यनुभवो ज्ञानशब्दवाच्यैकदेशवृत्तिविनाशादिविषयोऽपि मुख्य एवास्मिन्मत इत्याह । तत्र च ज्ञानमिति । उत्पत्तिनाशानुभवस्य चैतन्योपाधिविषयत्वाभिधानादेव नवीनचोद्यमपि निरस्तमित्याह । एतेनेति। किञ्च वृत्तिभिन्नत्वेन स्फुरणावगमदशायां स्फुरणं नष्ट-

मित्याद्यनुभव उत तद्भेदावगमदशायाम् । आद्ये व्यतिरिक्तस्फुरणस्य धर्मिग्राहकेण नित्यत्वेनैव सिद्धत्वान्नाशाद्यनुभवो भ्रम इत्याह । वृत्त्यतिरिक्तत्वेनेति । द्वितीये वृत्तिमेव स्फुरणतयावगत्य तन्नाशादिकमेवानुभूयत इत्याह । वृत्तावेवेति । अनुभवानित्यत्वे बाधकसद्भावाच्च तन्नित्यत्वं सिद्धमित्युपसंहरति श्लोकेन । यस्मादिति । वृत्त्यतिरिक्तस्फुरणसाधकेन मानेन लाघवानुगृहीतेन सिद्धमप्यनुभवैकत्वं परोक्तदोषनिरासेन दूषयितुमाह । स चेति । उत्पत्त्याद्यनुभववद्भेदानुभवोऽपि वृत्तिविषय इत्याह । भेद इति । प्रत्यक्षस्वकीयानुभवेषु अनुमितपरकीयानुभवेषु चानुभवानुभव इत्येकाकारबुद्धेरेक एवानुभवो विषय इति तदैक्यसिद्धिरित्याह । अभेदे चेति ॥

अनुगतबुद्धेरनुगतधर्मविषयत्वनियमाद्व्यक्तिभेदो वक्तव्य इति चोदयति । स्यादेतदिति ।

(अनुगतबुद्धौ पूर्वपक्षः) **स्यादेतदनुगतबुद्धिर्जातिविषया न व्यक्तिविषया, अनुगतप्रमात्वात्, घटानुगतप्रमावत् । अत एव जलभाजनादिप्रतिबिम्बितचन्द्रानुगतबुद्धौ न व्यभिचारः । घटानुभवो न भवति पटानुभव इति स्वरूपतो भेदप्रतीतेः । देवदत्तोऽनुभवति न यज्ञदत्त इत्याद्याश्रयभेदप्रतीतेश्च । न चानुभवो न स्वसमानधर्मवत्प्रतियोगिकपारमार्थिकभेदवान् उपाधिपरामर्श-**

मन्तरेणाविभाव्यमानभेदत्वादाकाशवदितिवाच्यम् । वृत्तिज्ञानस्य पक्षत्वे बाधात्तदन्यस्य चाप्रसिद्धेः हेतोरिच्छादौ व्यभिचाराच्चेति चेत् ।

साध्यान्तराभिप्रायेण व्यक्तिमात्रविषयत्वं निराकरोति । न व्यक्तिविषयेति । हेतुगतप्रमापदव्यावर्त्यमाह । अत एवेति । एकचन्द्रव्यक्तेरेवानेकचन्द्रत्वेन प्रतीतेस्तदनुगतानुभवस्याप्रमात्वान्न तत्र व्यभिचार इत्यर्थः । घटानुगतबुद्धौ प्रामाणिकभेदवद्व्यक्तिविषयत्वमुपाधिरित्याशङ्क्य साधनव्यापकत्वमाह । घटानुभव इति । सर्वानुभवस्यैकत्वे युगपदाश्रयभेदेन विधिनिषेधानुपपत्तिरित्यभिप्रेत्याह । देवदत्तो ऽनुभवतीति । प्रतिपक्षपराहतिमाशङ्क्य निराकरोति । न चानुभव इति । घटतद्रूपवृत्तिस्ववाचकाखण्डशब्दप्रवृत्तिनिमित्तवत् प्रतियोगिकस्वसमानसत्ताकतादात्म्यविरोधिभेदरहित इति साध्यार्थः । आकाशानुभवयोः स्ववाचकद्रव्यगुणशब्दप्रवृत्तिनिमित्तद्रव्यत्वगुणत्ववत् । घटतद्रूपप्रतियोगिकतादात्म्यविरोधितद्भेदवत्त्वेन साध्यवैकल्यबाधपरिहाराय घटतद्रूपवृत्तीत्युक्तम् । कर्मशब्दप्रवृत्तिनिमित्तकर्मत्ववत् प्रतियोगिकभेदवत्त्वेनोक्तदोष[illegible]र्थं स्ववाचकेत्युक्तम् । एतदनुभवशब्दप्रवृ[illegible]नदनुभवत्ववदेतत्प्रतियोगिकभेदाभा[illegible]स्येन[illegible]प्यङ्गीकारात्सिद्धसाधनतापरिहारायाखण्डप[illegible]। सिद्धान्ते ऽनुभवशब्दप्रवृत्तिनिमित्तानुभवत्वाधिक[illegible]ानु[illegible]वप्रतियोगिककल्पितभेदस्य पक्षेङ्गीकाराद्बाधपरिहारायोक्तधर्मवत्प्रतियोगिकतादात्म्यवि-

रोधेत्युक्तम् । स्वसिद्धान्ते ऽनुभवस्यानुभवान्तरतादात्म्यविरोधिभेदानङ्गीकारान्न वा बाधः । तर्हि परमते ऽप्यनुभवान्तरप्रतियोगिककल्पिततादात्म्यविरोधिभेदाभावात्सिद्धसाधनं स्यात्तन्निवृत्तये स्वसमानसत्ताकेत्युक्तम् । परमते ऽनुभवस्यानुभवत्ववदनुभवान्तरप्रतियोगिकसमानसत्ताकतादात्म्यविरोधितद्भेदवत्त्वाङ्गीकारान्न सिद्धसाधनमित्यर्थः । उपाधिपरामर्शमन्तरेण तद्भेदवत्त्वेनाप्रमीयमाणत्वादिति हेत्वर्थः । तथा च परमते कथमपि स्वप्रतियोगिकभेदस्याकाशे ऽभावेन साधनवैकल्यशङ्का निरस्ता । परमते पक्ष ऽसिद्धिपरिहारार्थमुपाधिपरामर्शमन्तरेणेत्युक्तम् । एतदनुमाने वृत्तिज्ञानं पक्षः तदतिरिक्तानुभवो वा, उभयथाप्यनुपपत्तिरित्याह पूर्ववादी । वृत्तीति । घटेच्छा न भवति पटेच्छेत्युपाधिपरामर्शपूर्वकभेदस्य प्रमीयमाणत्वात्तत्र व्यभिचार इत्याह । हेतोरिति ॥

सिद्धान्ती तावदनुभवानुगतबुद्धिर्जातिविषया अनुगतप्रमात्वादिति परानुमाने पक्षं विकल्पयति । किं वृत्तीति ।

(तदुत्तरं विकल्पनेन) **किं वृत्तिविषयानुगतबुद्धिं पक्षीकृत्य जातिविषयत्वं साधयसि किं वा तदतिरिक्तानुभवविषयां यस्या अनुगतबुद्धेर्व्यक्तिविषयत्वमस्माभिरिष्यते तां वा सामान्येन । नाद्यः सिद्धसाधनत्वात् । न द्वितीयः सिद्धासिद्धिव्याघातात् । तत्साधकस्य लाघवतर्कसहकृतानुमान-**

स्यानुगतबुद्धेश्च तदेकत्वगोचरत्वात् । न तृतीयः आकाशानुगतबुद्धौ व्यभिचारात् । औपाधिकधर्मविषयानुगतबुद्धौ व्यभिचाराच्च । न चानुगतविषयत्वमात्रं साध्यं विवक्षितम् । अनेकान्तःकरणवृत्त्यनुगतानुभवविषयत्वेन सिद्धसाधनात् । न चानुगतधर्मविषयत्वं साध्यम् । अप्रयोजकत्वात् । तत एव यद्विशेष्यकानुगतबुद्धिः सा तदनुगतविषयेति निरस्तम् । घटत्वमित्याद्यनुगतबुद्धौ व्यभिचारश्च । नानाविशेष्यकानुगतबुद्धित्वं हेतुरिति चेन्न । असिद्धेः । जातिविषयत्वादेव तत्साधने परस्पराश्रयात् ॥

वृत्तावनुगतजात्यङ्गीकारादाद्ये सिद्धसाधनमाह । नाद्य इति । द्वितीये तस्यासिद्धावाश्रयासिद्धिः सिद्धौ वा वृत्तिव्यतिरिक्तानुभवसाधकमानेन तदेकत्वादेरपि सिद्धेर्धर्मिग्राहकमानविरोध इत्यभिप्रेत्याह । न द्वितीय इति । तृतीये किं यथाश्रुतमेव साध्यमुतानुगतविषयकत्वं किं वानुगतधर्मविषयकत्वम् । नाद्यः घटकरकाद्यवच्छिन्नाकाशानुगतबुद्धौ व्यभिचारादित्याह । न तृतीय इति । मृत्तन्त्वादिकारणेषु कारणत्वानुगतबुद्धौ व्यभिचारश्चेत्याह । औपाधिकेति । द्वितीयं सिद्धसाधनेन दूषयति । न चानुगतेति । अप्रयोजकत्वादेव नियमान्तरमप्यनुपपन्नमित्याह । तत एवेति । किञ्च यद्विशे-

दिष्टं प्रायश्चित्तं कुर्यात् । तच्चैवम् । समुद्रगामिन्योर्नद्योः सङ्गमे त्रिषवणस्नानपूर्वकं त्रिरात्रमुपोष्य चतुर्थेऽन्हि गां दत्वा दश ब्राह्मणान् भोजयेत् । क्रुद्ध इति विशेषणाद्वैराग्येण प्रतिज्ञाने प्रायश्चित्तेनापि न गम्येति सिध्यति । अतएव वसिष्ठः ।

यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिरिति ॥

पुमानिति सामान्यनिर्देशादुक्तव्रतस्य सार्ववर्णिकत्वमुक्तम् । यमस्तु प्रतिवर्णं व्रतभेदमाह ।

स्वभार्यां तु यदा क्रोधादगम्येति नरो वदेत् ।
प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ।
षड्रात्रन्तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेदिति ।

दानाद्यकरणप्रायश्चित्तं तु धर्मार्थं मतिपूर्वकसंकल्प एव नत्वार्त्यादिनिमित्तकेऽपि

अदत्तन्तु भयक्रोधशोकवेगरुजान्वितैः ।
तथोत्क्या च परीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् ।
कर्त्ताममेदङ्कर्मेति प्रतिलाभेच्छया तु यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
यद्दत्तं स्यादविज्ञाय तददत्तमिति स्मृतम् ।
इति नारदस्मरणात् । एव मन्यत्राप्यूहनीयम् ॥
योगाधमनविक्रीतं योगाद्दानं प्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेद् ॥

इति साधारणस्मरणात् । बधसंयुक्ते शपथे तु प्रायश्चित्तमाह यमः ।

विप्रस्य बधसंयुक्तं कृत्वा तु शपथं नरः ।
ब्रह्महा यावकान्नेन व्रतं चान्द्रायणं चरेत् ॥

क्षत्रियस्य पराकन्तु प्राजापत्यं चरेद्विशः ।
वृषलस्य त्रिरात्रन्तु व्रतं शूद्रहणश्चरेत् ॥
केचिदाहुरपापं तु वृषलस्य वधं मृषा ।
नैतन्मम मतं यस्माद् हतस्तेन भवत्यसाविति ॥

दुर्ब्राह्मणान्नभोजने प्रायश्चित्तमाह ।

**दुराचारस्य विप्रस्य निषिद्धाचरणस्य वा ।**
**अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥ ५६ ॥**

विहिताऽननुष्ठातुर्निषिद्धानुष्ठातुश्च विप्रस्य गृहे भुक्त्वा द्विजोऽहोरात्रमुपवसेत् ॥

तदशक्तौ प्रायश्चित्तान्तरमाह ।

**सदाचारस्य विप्रस्य तथावेदान्तवेदिनः ।**
**भुक्त्वान्नं मुच्यते पापादहोरात्रान्तरान्नरः ॥६०॥**

यदि दुर्ब्राह्मणान्नं भुक्तं तदा सदाचारस्य वेदान्तनिष्ठस्यान्नं दिनान्तरे भुक्त्वा तस्मात्पापान्मुच्यते ।

यद्वाऽहोरात्रान्तरादहोरात्रमध्ये उत्पन्नात्पिपीलिकावधादिजन्यक्षुद्रपापाद्विशिष्टविप्रान्नभोजनेन मुच्यत इति । अतएव क्षुद्रपापान्युपक्रम्याह बौधायनः ।

भैक्षाहारोऽग्निहोत्रिभ्यो मासेनैकेन शुध्यति ।
यायावरवनस्थेभ्यो दशभिः पञ्चभिर्दिनैः ॥
एकाहधनिनोऽन्नेन दिनेनैकेन शुध्यति ।
कपोतव्रतनिष्ठस्य पीत्वापः शुध्यते द्विज इति ॥

मरणकालीनाशुद्धौ प्रायश्चित्तमाह ।

**ऊर्ध्वोच्छिष्टाधरोच्छिष्ट अन्तरिक्षे मृतौ तथा ।**
**कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा ॥ ६१ ॥**

वान्तादिकमूर्ध्वोच्छिष्टं विण्मूत्रोत्सर्गादधरोच्छिष्टं तत्र शौचमकृत्वा मरणे अन्तरिक्षे खट्वाट्टालिकादौ आशौचे जननमरणाशौचे च मरणे

पुत्रादिः संस्कर्त्ता गवादिप्रत्याम्नायेन कृच्छ्रत्रयं तदैव कुर्यादन्यथा शवशुध्यनुत्पत्तौ संस्कारानुपपत्तेः। यत्त्वाशौचमरणं नाम रजस्वलासूतिकामरणमिति तत्र तत्र प्रायश्चित्तान्तरस्य सप्तमाध्याये ऽभिहितत्वात्॥

इदानीं कृच्छ्रप्रत्याम्नायानाह।

**कृच्छ्रो देऽप्ययुतं चैव प्राणायामशतद्वयम्।**
**पुण्यतीर्थे ऽनार्द्रशिरः स्नानं द्वादशसंख्यया॥ ६२॥**
**द्वियोजनं तीर्थयात्रा कृच्छ्रमेकं प्रकल्पितम्।**

अयुतसंख्यया गायत्रीजपः शतद्वयं प्राणायामाः द्वादशवारमनार्द्रशिरसः पुण्यतीर्थे स्नानं योजनद्वयं तीर्थयात्रायां गमनमित्येवं कृच्छ्रसमानि। अनार्द्रशिरस्त्वविशेषणात्स्नानानन्तरं तदङ्गमनुष्ठाय शिरः शोषयित्वा द्वितीयवारं स्नायादित्युक्तं भवति योजनद्वयमिति मूलोक्तषोडशाहसाध्यप्राजापत्यप्रत्याम्नायत्वमभिप्रेत्य तस्य प्राजापत्यद्वयस्थानीयत्वादितरत्सर्वं द्वादशाहसाध्यप्राजापत्यप्रत्याम्नायत्वाभिप्रायेणेति। न केवलमेतावदेव किन्त्वन्यदपि मुनिभिः प्रकल्पितमुदवासाद्येककृच्छ्रसमं भवति। तथा च चतुर्विंशतिमतादिपुराणयोः।

कृच्छ्रो ऽयुतन्तु गायत्र्या प्राणायामशतद्वयम्।
शिरःसंशोषणे स्नानं साङ्गं द्वादशसंख्यया।
तिलहोमसहस्रं तु घृतहोमशतद्वयम्।
रुद्रैकादशिनी वापि वेदपारायणं तथा।
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च।
अन्या वा पावमानेष्टिरुदवासस्तथैव च।
धेनुप्रदानं विप्राय निष्कदानमथापि वा॥
निष्कार्द्धं निष्कपादं वा द्वादशांशो निवर्तनात्।
योजनं सिंधुगातीरे समाम्नायाहुर्मनीषिण इति।

स्मृत्यन्तरेपि ।

प्राजापत्यक्रियाशक्तौ धेनुं दद्यात्पयस्विनीम् ।
धेनोरभावे निष्कं स्यात्तदर्द्धार्द्धमथापिवेति ।

द्वात्रिंशन्मतेपि ।

धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तितेति ।
यत्तु, द्वात्रिंशत्पणिका गावो वृषभः षट्पुराणिकः ।
त्रिपुराणोवत्सतरोवत्सः पौराणिको मतः ॥

इतिकात्यायनीयं मूल्याध्यायस्मरणम् । तदन्नप्रकरणगतत्वाचात्रोपतिष्ठते ।

प्रायश्चित्तप्रकरणान्तस्य प्राबल्यात् । यच्च योजने वर्द्धमाने तु पादकृच्छ्रो विवर्द्धत इति स्मृत्यर्थसारीयं स्मरणं तत्तीर्थतारतम्यमभिप्रेत्य न सामान्यत इति ज्ञेयम् ॥

अथ रेतस्खलनप्रायश्चितमाह ।

**गृहस्थः कामतः कुर्याद्रेतसस्खलनं यदि ।**
**सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह ॥ ६३ ॥**

यदि गृहस्थो बुद्धिपूर्वं रेतस्खलनं कुर्यात्तदा प्राणायामत्रयपूर्वकं सहस्रसंख्यया गायत्रीं जपेत् । अकामकृते याज्ञवल्क्य आह ।

यन्मेरेतइत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।
स्तनान्तरे भ्रुवोर्मध्ये तेनानामिकया स्पृशेदिति ॥
यन्मेरेतः पुनर्मामैत्विन्द्रियमित्येताभ्याम् ।

वनियत्योस्तु कण्व आह ।

रेतोत्सर्गं गृही कृत्वा वारुणीभिरुपस्पृशेत् ।
वानप्रस्थोयतिश्चैव चरेच्चान्द्रायणत्रयम् ॥

स्वप्नेतु कश्यप आह ।

सूर्यस्य त्रिर्नमस्कारं स्वप्ने सित्वा गृही चरेत् ।
वानप्रस्थो यतिश्चैव त्रिः कुर्यादघमर्षणमिति ॥

ब्रह्मचारिणस्तु मनुराह ।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।

स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेदिति ।

भयादौ प्रजापतिराह ।

भये रोगे तथा स्वप्ने सिक्त्वा शुक्रमकामतः ।

आदित्यमर्चयित्वा तु पुनर्मामित्यृचंज्जपेदिति ॥

नैष्ठिकस्य हारीत आह ।

उपकुर्वाणकः कुर्यात्कामतोऽकामतोपि वा ।

तदेव द्विगुणं कुर्याद् ब्रह्मचारी तु नैष्ठिक इति ॥

एवमशेषं प्रायश्चित्तविशेषं प्रकीर्णकादिष्वभिधायेदानीमध्यायार्धे ब्रह्मवधे महापातके प्रायश्चित्तमाह ।

**चतुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके ।**

**समुद्रसेतुगमनं प्रायश्चित्तं समादिशेत् ॥ ६४ ॥**

ऋगादयश्चतस्रो विद्याश्चतुर्विद्यास्ताभिरुपपन्नस्तदध्ययनानुष्ठानवानेतेन चातुर्विद्यो विकल्पी चेत्यादिपूर्वोक्तावयवा पर्षदुपलक्ष्यते'स ब्राह्मणघातके पुरुषे समुद्रसेतुगमनं समुद्रे लवणोदे सेतुर्वक्ष्यमाणलक्षणस्तद्गमनं तद्यात्रां प्रायश्चित्तं विधिवद्वक्ष्यमाणविधिना सम्यगादेशप्रकारेण आदिशेत् । सामान्यप्राप्ताया अपि पर्षदः पुनरनुमर्शः पूर्वोक्तेषु पर्षत्पक्षेष्वस्यैवात्र नियमार्थः ।

तत्र ब्रह्मघातकलक्षणमाह विष्णुः ।

रागाद्द्वेषात्प्रमादाद्वा स्वतः परत एव वा ॥

ब्राह्मणं घातयेद्यस्तु स भवेद् ब्रह्मघातक इति ।

घातो नाम प्राणवियोगफलको व्यापारस्तस्य स्वयमनुष्ठाता साक्षाद्धन्ता परप्रयुक्त्यादिनानुष्ठाता परतो घातकः

तथा च मनुः ।

बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् ।
यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृता इति ॥

सचानेकविधा । अनुग्राहकप्रयोजकानुमन्तृनिमित्तिभेदात् । तत्र यः पलायमानबध्यमुपरुध्य हन्तारमन्येभ्यो वारणेन हन्तुर्दृढिमानमुपजनयति सोऽनुग्राहकः । अप्रवृत्तप्रवर्त्तकः प्रयोजकः सोऽपि त्रिविधः । आज्ञापकोऽभ्यर्थक उपदेष्टा चेति तत्र स्वशत्रु दिव्यापादनाय भृत्यादिप्रवर्तकस्स्वाम्याज्ञपकः तदर्थमेव प्रार्थनादिना स्वाम्यादिप्रवर्त्तको भृत्यादिरभ्यर्थकः मरणप्रकाराख्यापक उपदेष्टेति । स्वतः प्रवृत्तस्य हन्तुः राजदण्डादिभयनिवर्त्तकोनुमन्ता । आक्रोशादिना मरणहेतुमन्यूत्पादकोनिमित्तीति ।

तथा च विष्णुः ।

आक्रुष्टस्ताडितो वापि धनै र्वा विप्रयोजितः ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

तथा ।

ज्ञाति मित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेवच ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥
अन्यायेन गृहीतस्तु न्यायमर्थयते यदि ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकमिति ॥
तानेतान्सर्वान्सञ्जग्राह पैठीनसिः ।
हन्ता मन्त्रोपदेष्टाच तथा संप्रतिपादकः ॥
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥
उपेक्षकः शक्तिमांश्चेद्दोषवक्तानुमोदकः ।
अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेदिति ॥

तच्चाविवक्ष्यामः । अनाकृष्टादेरुन्मादादिना तदुद्देशेनापि मरणे न तस्य निमित्तत्वम् ।

अकारणस्तु यः कश्चिद्द्विजः प्राणान्परित्यजेत् ।
तस्यैव तद्भवेत्पापं न तु यं परिकीर्त्तयेदिति स्मरणात् ।

अन्यत्रापि तदपवादमाह विष्णुः ।
उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः ।
तस्मिन्मृते न दोषोऽस्ति द्वयोरुक्त्वाश्रावणे कृत इति ।

तथा शिक्षार्थे शास्त्रीयताडनेन मरणेपि न दोषस्तथाच भविष्यपुराणे ।

पुत्रः शिष्यस्तथा भार्या शासतश्चेद्विनश्यति ।
न शास्ता तत्र दोषेण लिप्यति देवसत्तमेति ।

शास्त्रीयंच ताडनमाहुर्गौतमः । शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यामन्येन घ्नन् राज्ञा शास्यइति । तथाततायिवधे न दोषः ।

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥

इतिविष्णुस्मरणात् । दोषएव नास्तीति प्राच्याः । संपूर्णो दोषो नास्ति किन्तु स्वल्प इतिदाक्षिणात्याः । नाततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्य इतिसुमन्तुस्मरणात् । तथोपकारार्थप्रवृत्तौ तन्मरणेपि न दोषः । तथा च याज्ञवल्क्यः । क्रियमाणोपकारे तु मृते विप्रे न पातकमिति ।

एवमन्यत्रापि बन्धने गोश्चिकित्सार्थमित्यादिना नवमाध्यायेपि दोषाभाव उपपादितः । यदुक्तं यथोक्तविधिनेति तमेव विधिमाह ।

**सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाचरेत् ।**
**वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ॥ ६५ ॥**

यदा यथावदुपदिष्टव्रतो ब्रह्महा छत्रोपानद्भ्यां विशेषतस्तत्स्थानापन्नाभ्यामन्याभ्यामपि विवर्जितः सेतुबन्धयात्रार्थं प्रस्थितो मार्गे विकर्मस्थान्निषिद्धाननुष्ठातॄन्विहितानननुष्ठातॄंश्च गृहस्थान्वर्जयित्वा चातुर्वर्ण्यात् चतुर्भ्योऽपि वर्णेभ्यः पूर्वपूर्वाभावे उत्तरोत्तरेभ्यः ब्राह्मणानां मुख्यत्वात् भिक्षां ग्रासपरिमितां सम्यग्यथोक्तविधिना आचरेत् । सच विधिः

शेषं मुनिविभावितमिति परिभाषणात्स्मृत्यन्तरोक्तो ज्ञेयः। तत्र भिक्षापात्राद्याकाङ्क्षायामाह यमः।

मृन्मयेन कपालेन स्वकर्म श्रावयंस्तथा।
सप्तागाराण्यपूर्वाणि यान्यसङ्कल्पितानि वै॥
सञ्चरेत्तानि शनकैर्विधूमे भुक्तिवर्जिते।
एककालं चरेद्भैक्षमलब्ध्वोपवसेद्दिनमिति॥

यद्यप्येषां द्वादशवार्षिकव्रतप्रक्रमेऽभिधानात्कर्मान्तरे अस्मिन्नुपसंहारो न युक्तः प्रतिभाति तथापि भिक्षाविध्याकाङ्क्षितत्वेनावान्तरप्रकरणाच्च भिक्षाङ्गानामेषां यत्र भिक्षाविधिस्तत्रोपसंहारो युक्त एव छत्रोपानद्वर्जनेन बृहत्पराशरोक्ता अन्येऽपि धर्मा उपलक्षिताः। यथा।

मुण्डितस्तु शिखावर्जं सकौपीनो निराश्रयः।
चीरचीवरवासाद्यस्त्रिः स्नायी सन् शुचिः व्रती॥
सम्मितात्तश्चरेद्धान्तच्छत्रोपानद्विवर्जितः।
सेतुं दृष्ट्वा समुद्रस्य स्नात्वा वा लवणाम्भसि॥
ब्राह्मणेषु चरेद्भैक्षं स्वकर्म ख्यापयन् शुचिरिति।

सशिखं तु निपातन इत्यनेन प्राजापत्याधिके सशिखवपनप्राप्तौ शिखावर्जमित्युक्तम्।

भिक्षायाचनप्रकारमाह।

**अहन्दुष्कृतकर्मा वै महापातककारकः।**
**गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥ ६६॥**

अनेन स्वकर्मख्यापनपूर्वकमेव भैक्ष्यं चरेदितिविहितम्।

तथा च शङ्खः। स्वकर्मख्यापयन् चरेद्भैक्षमिति।

अप्रख्यापने "कृत्वा पापं न गूहेत गूहमानस्य वर्द्धते" इति दोषस्मरणात्। विशेषणत्रयं च सामान्यविशेषाभ्यां तस्यैव प्रख्यापनातिशयार्थम्। द्वारस्थित्यभिधानेन गृहमध्यगमनं निषिध्यते। ब्राह्मणावसथांश्चैव देवागाराणि वर्जयेदिति स्मरणात्। पयोपक्रामेत्सन्दर्शनादार्यस्येतिगौतमस्मरणाच्च।

अध्वश्रान्तस्य निवासस्थानमाह ।

**गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च ।**
**तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥ ६७ ॥**

ग्रामाद्बहिः कल्पितो गोनिवासो गोकुलं तस्मिन् वसेत् चौरव्याघ्रादिभयेन तन्निवासयोग्यं स्थानमाह शङ्खः । शून्यागारनदीपर्वतवृक्षमूलगुहानिकेतन इति । अन्यथा तपोवनादिषु वा तपोवनमुपवनं तीर्थं देवखातादि नदीप्रस्रवणौ प्रसिद्धौ तत्र च निवसेदिति प्रत्येकं सम्बधः ।

प्रतिनिवासमेनः ख्यापयन्नेव व्रजेदित्याह ।

**एतेषु ख्यापयन्नेनः पुण्यं गत्वातु सागरम् ।**
**दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ ६८ ॥**
**रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् ।**
**सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ॥ ६९ ॥**

पूर्वोक्तेषु गोकुलादिषु निवासस्थानेषु स्वकर्मख्यापयन्नेव यावत्सागरं गच्छेत् तत्र दशरथकुलनन्दनस्य श्रीमद्रामचन्द्रस्यादेशवर्तिना नलाभिधेन वानरराजेन विश्वकर्मावरावतारेण निबद्धं दशयोजनविस्तारं शतयोजनायामं समुद्रसेतुं दृष्ट्वा पूर्वोक्तां ब्रह्महत्यां व्यपोहतीति । सेतुदर्शनानन्तरकर्तव्यमाह ।

**सेतुं दृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम् ।**

पूर्वोक्तं सेतुं दृष्ट्वा विशुद्धात्मा पूतान्तःकरणः सन् सागरमवगाहेत ।

ननु विशुद्धात्मेत्यनेन सेतुदर्शनमात्रेणैव शुद्धिः, उत्तराङ्गानुष्ठानाभावादुत्तरविधिवैयर्थ्यापत्तेः ।

क्षत्रियस्य कामतो विप्रवधे प्रायश्चित्तमाह ।

**यजेत चाश्वमेधेन राजा तु पृथिवीपतिः ॥ ७० ॥**

पृथिवीपतिः सार्वभौमः नाऽसार्वभौमो यजेतेत्यसार्वभौमस्य प्रतिषेधदर्शनात् राजा क्षत्रियो ब्रह्महत्यापनोदायाश्वमेधेन यजेत ।

अद्यप्रभृति देवेन्द्रमजितेन्द्रियमस्थिरम् ।
क्षत्रिया वाजिमेधेन न यक्ष्यंतीति शौनकः ॥

इति जनमेजयेनेन्द्रे शप्ते विश्वावसुनाभिहितम् ॥

विभेत्यभिभवाच्छक्रस्तव क्रतुफलैर्नृप
तस्मान्निवर्त्तितश्चैव क्रतुरिन्द्रेण ते प्रभो ।

प्रंशितस्त्वं च विप्राश्च फलादिन्द्रसमादिहेत्यादि ।

तस्मात्सिद्धं निषेधस्य काम्याश्वमेधविषयत्वेन न कश्चिद्दोषो-
नैमित्तिकानुष्ठान इति । सेतोः प्रत्यागतस्य कर्त्तव्यमाह ।

**पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति ।**
**सपुत्रः सहभृत्यश्च कुर्याद्ब्राह्मणभोजनम् ॥ ७१ ॥**
**गाश्चैवैकशतं दद्याच्चातुर्विद्येषु दक्षिणाम् ।**
**ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते ॥ ७२ ॥**

सेतुं दृष्ट्वा प्रत्यागतो निमित्ती शतं चातुर्वैद्यान् ब्राह्मणान् भोजयित्वा तेभ्यश्चैकैकां गामित्येवं शतं गाश्च दक्षिणां दत्वा ब्राह्मणान-शुद्धस्त्वमभूरित्यादिवाक्यप्रसादेन शुद्धः सन् सपुत्रभृत्यो वासार्थं वेश्मोपसर्पेत् । यद्यपि क्रमेणैवास्यश्वमेधाङ्गता प्रतीयते तथाऽपि बलवता प्रकरणेन सेतुयात्राङ्गत्वमेवाध्यवसेयम् । नचास्यापि प्रकरणं यथोत्पन्नस्यैव विनियोगेनात्रोत्पत्त्यभावात् । यथा सौत्येऽहन्यूत्पन्नस्य सवनीयपशोः प्रचार-विप्रकर्षाख्यगुणविधानायौपवसथ्ये ऽहनि कीर्त्तितस्य सन्निहिता अपि यूपच्छेदनादयोधर्मा नाङ्गम् । तत्रोत्पत्त्यभावेन प्रकरणाभावात् । किंत्वा-ग्नीषोमीयस्यैव स्थानप्रमाणेन उक्तं च ।

कर्मणश्च विधिर्यत्र तत्र प्रकरणं भवेत् ।
तत्तु यत्र गुणार्थेन श्रवणं तत्र विद्यत इति ॥

यद्यपि पाठक्रमेण वेश्मोपसर्पणं पूर्वमनन्तरं विप्रभोजनादीति प्रतीयते तथाप्यार्थक्रमप्राबल्याद्वैपरीत्यमवसेयम् । अतएव बृहत्पराशरेण ।

ब्राह्मणानां प्रसादेन तीर्थाभिगमनेन च ।
गोशतस्य प्रदानेन शुध्यते नात्र संशयः ॥

इत्यन्त एव शुद्धिरभिहिता ॥

सोऽयं सर्वोऽपि विधिरुक्तोभविष्ये ।
यद्वा पराशरोक्तेन प्रायश्चित्तेन शुध्यति ।
चातुर्विद्यमनुज्ञाय ब्रह्महा गुरुतल्पगः ।
सेतुदर्शनसंयुक्तं प्रायश्चित्तं समाचरेत् ॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाचरेत् ।
वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ॥
विख्यापयन् स्वकं कर्म यथावच्छृणु मे वचः ।
अहो दुष्कृतकर्माहमहोसाहसकारकः ॥
वेश्मद्वारेषु तिष्ठामि भिक्षार्थी क्षुत्पिपासितः ।
पर्यटंश्चैव तीर्थानि पुण्यान्यायतनानि च ॥
सेतुबन्धं ततः पश्येल्लङ्कामार्गं महोदधौ ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥
रामचन्द्रसमादेशान्नलसञ्चयसञ्चितम् ।
सेतुं दृष्ट्वा महापुण्यं ब्रह्महत्याविनाशनम् ॥
ब्रह्महत्याविशुद्धात्मा ह्यवगाह्य महोदधिम् ।
गवां चैव शतं दद्याच्चातुर्विद्याय दक्षिणाम् ॥
एवं शुद्धिमवाप्नोति पराशरमतं यथेति ।
अस्य च नैमित्तिकः समाप्त्यवधिरुक्तस्तत्रैव ॥
सेतुबन्धमसम्प्राप्तौ राजानं पृथिवीपतिम् ।
यजन्तमश्वमेधेन दृष्ट्वा सद्यः शुचिर्भवेत् ॥
दर्शनेनात्रावभृथस्नानं लक्षयति ।
तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयादिति
योगिस्मरणात् । तथाष्टमेऽध्याये ।
ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् ॥
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य चेति ।

बृहत्पराशरीयेऽपि ।

रोगार्तां गां द्विजं वापि मार्गे वेदसमन्वितम् ।
दृष्ट्वा कृत्वा निरातङ्कं ब्रह्मघ्नः शुद्धिमाप्नुयादिति ॥

अयं च प्रक्रान्तप्रायश्चित्तस्य कथञ्चिद्ब्राह्मणत्राणादिकं कुर्वतो व्रतसमाप्त्यवधिरुच्यते। यथा सारस्वते सत्रे । स्यात्तप्रस्रवणं प्राप्योत्थनमृषभैकशतानां वा गवां सहस्राभावे सर्वस्वयाज्यानां गृहपतिमरणे चेति। न पुनः स्वतन्त्रं प्रायश्चित्तान्तरं सेतुदर्शनाय प्रस्थितस्य मार्गे गवादिविचिकित्साविधानात् । आष्टमिके वाक्ये स्वप्रमाणपरित्यागेन गवादिरक्षणमुक्तम् । बृहत्पराशरीये पुनरौषधादिदानेनेति विशेषः । प्रक्रान्तप्रायश्चित्तस्य मध्ये मरणेऽपि शुद्धिर्भवत्येव । यथाह हारीतः ।

प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ।
पूतस्तदहरेवासाविह लोके परत्र चेति ॥

ननु यात्रापादानावध्यनिरूपणे ऽनियतः शास्त्रार्थः स्यादित्यत आह ।

**विन्ध्यादुत्तरतो यस्य निवासः परिकीर्तितः ।**
**पराशरमतं तस्य सेतुबन्धस्य दर्शनम् ॥ ७३ ॥**

यदुक्तं ब्रह्महत्यायां समुद्रानुगमनं प्रायश्चित्तमिति तद्विन्ध्यपर्वतादुदग्देशवर्त्तिनो दक्षिणदेशवर्त्तिन इति वृद्धपराशरस्य मतम् । तथा च भविष्यपुराणे सेतुयात्रां प्रक्रम्योक्तम् ॥

यस्तूत्तरे वसेत्पार्श्वे विन्ध्यस्य पुरुषोत्तम ।
दक्षिणे वसतश्चेदं न भवेदितितच्छृणु ॥ वति ॥

विन्ध्याद्दक्षिणदेशवर्त्तिनस्तु तत्समाना काशीयात्रा प्रायश्चित्तमिति ज्ञेयम् । तथाच ब्रह्मपुराणे ।

आगमिष्यन्ति ये द्रष्टुं सज्जना योजनेन तु ।
ते ब्रह्महत्यामोक्षात्तु भविष्यन्ति ममानुमगा इति ॥

योजनेनेति विन्ध्यादुत्तरतोयावद्योजनदूरमा आसेतोस्तावत्संख्याकेन योजनेनेत्यर्थः । अयमभिसन्धिः

ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ।

इत्यादिस्मृत्यन्तरोक्ते द्वादशाब्दे व्रते द्वादश द्वादश दिनान्येकैकं

प्राजापत्यमिति गणनया षष्ट्यधिकं शतत्रयं प्राजापत्यानि भवन्ति । सेतुयात्रायां तु

विन्ध्यादुत्तरतः सेतुर्योजनानां शतत्रयं ।
दशत्रिंशच्च विंशच्चेत्येवमाहुर्मनीषिण इति ।

स्मरणात् षष्ट्यधिकं शतत्रयं योजनानि सम्पद्यन्ते । तथाच योजनं तीर्थयात्रायां प्राजापत्यसमं स्मृतमिति प्रत्याम्नायकल्पनया सेतुदर्शनं द्वादशाब्दसममेवापद्यते । अतएव द्वादशाब्दं व्रतं कुर्याद्ब्रह्महात्मविशुद्धय इत्यभिधाय यद्वा पराशरोक्तेन प्रायश्चित्तेन शुध्यतीति भविष्ये द्वादशाब्दव्रतसेतुदर्शनयोस्तुल्यकक्षत्वमाविष्कृतम् । तथा बृहत्पराशरीयेऽपि द्वादशाब्दानि विचरेद्ब्रह्महस्तु कपालधृगित्यभिधाय सेतुं दृष्ट्वा समुद्रस्य स्नात्वा वा लवणाम्भसीति द्वादशाब्दतुल्यकक्षतयैव सेतुदर्शनमुपन्यस्तम् । ततश्चानेनैव न्यायेन वाराणसीप्रयागायोध्यामथुराद्वारकागङ्गाद्वारवदरिकाश्रमपुरुषोत्तमगङ्गासागरसङ्गमसरस्वतीसागरसङ्गमादिषु यत्र यत्र महापातकनाशनं श्रूयते तत्र सर्वत्र षष्ट्यधिकशतत्रययोजनागतस्येति बोद्धव्यम् । अन्यथा तत्तद्वाक्यानां स्मृतिविरोधेनार्थवादत्वापत्तेः । वाक्यानि तु तत्तन्माहात्म्येषु स्पष्टानि विस्तरभियान्नोदाहृतानि । ननु स्यादेवं यदि मूलेऽपि द्वादशरात्रः प्राजापत्यो योजनञ्च तत्प्रत्याम्नायः स्यात् । अस्तितु षोडशरात्रस्तद्गणनया तु द्वादशाब्दे सप्तत्युत्तरं शतद्वयं प्राजापत्या भवन्ति तत्प्रत्याम्नायश्च योजनद्वयं तद्गणनयाशीत्युत्तरं शतमेव प्राजापत्याः सेतुयात्रायामिति कथमविरोधइति चेत् । सत्यमेवं तथापि मूलोक्तस्य प्राजापत्यस्य प्राजापत्यद्वयस्थानीयत्वमवगम्यते । योजनद्वयस्य तत्प्रत्याम्नायत्वविधानबलादिति सर्वं सुस्थम् । तदेतत्सेतुगमनमकामतो ब्राह्मणवधे द्रष्टव्यं कामतस्तुमरणान्तिकमेव । तथाच सर्वशेषतया वक्ष्यति । कामतस्तु कृतं यत्स्यान्नान्यथा वधमर्हतीति । तथाचाङ्गिराः ।

यः कामतो महापापं नरः कुर्यात्कथं चन ।
न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृत इति ॥

अग्निपातप्रकारस्तु मनुनोक्तः । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा इति । अथवा यत्र कामकृते मरणमेवादिष्टम् तत्राप्यकामकृतप्रायश्चित्तस्य सेतुदर्शनद्वादशवार्षिकादेर्द्वैगुण्यं मरणवैकल्पिकं कर्तव्यम् । यथा ब्रह्महत्याव्रतमभिधायाह व्यासः ।

गत्वैतदेव कुर्वीत गुरुतल्पमकामतः ।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यत इति ॥

यदेतद्ब्रह्महत्याव्रतमुक्तं तदकामतो गुरुतल्पगमनेऽपि ज्ञेयम् । कामतो गमने तु तदेव द्विगुणं कार्यं न केवलमिदमत्रैवोच्यते । किन्तु पूर्वत्रापि ब्रह्महत्यादिष्वकामकृतेषु यद्यत्सेतुयात्राद्वादशाब्दादिव्रतमुपदिष्टं तदपि द्विगुणं कार्यमित्यर्थः । अनेन चास्य मरणेन सह तुल्यबलत्वाद्विकल्पोऽभिहितः । सवनस्थब्राह्मणवधे तु याज्ञवल्क्य आह । द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति । द्वैगुण्यप्रकार उक्तो भविष्ये ।

बालं वृद्धं गुरुं चैव स्त्रियं वा च रजस्वलाम् ।
ब्राह्मणं यजमानं च हत्वा निष्कृतिमाचरेत् ॥
चरित्वा द्वादशाब्दानि सेतुबन्धं च पश्यतीति ।
मात्रादिहनने तु विशेषस्तत्रैव ॥
मातरं पितरं हत्वा सोदर्यं भ्रातरं तथा ।
गुरुं हत्वा श्रोत्रियञ्च आहिताग्निमथापि वा ।
आन्तिमाद्यावदुच्छ्वासाद् तं कृत्वा विशुध्यतीति ॥

आपस्तम्बीयेऽपि गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिन्लोके प्रत्यापत्तिर्विद्यत इति । उत्तमादुच्छ्वासादामरणात् । प्रत्यापत्तिर्व्यवहारः । इदं च कामतः, अकामतस्तु ब्रह्मपुराणे

यज्ञसंस्थौ तु पितरौ राजानं वाप्यनागसम् ।
हत्वा चरेद्व्रतं सम्यक् चतुर्विंशतिवत्सरानिति ॥

यज्ञसंस्थौ दम्पतीति ज्ञेयं । न पितृविशेषणमविशेषापातात् जातिमात्रब्राह्मणहनने भविष्यपुराण उक्तम् ।

जातिमात्रं यदा हन्याद् ब्राह्मणो ब्रह्माणं गुह ।
वेदाभ्यासविहीनो वै धनवानग्निवर्जितः ॥
प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये ।
धनं वा जीवनायालं गृहं वा सपरिच्छदमिति ॥

विकर्मस्थब्राह्मणहनने तु षष्ठाध्यायोक्तं विकर्मस्थन्द्विजोत्तमम् हत्वा चान्द्रायणं कुर्यात्रिंशद्गाश्चैव दक्षिणामिति । षण्ढविप्रहनने तु षट्त्रिंशन्मतोक्तम् ।

षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
चान्द्रायणं च कुर्वीत पराकद्वयमेव चेति ॥
क्रमिकानेकब्राह्मणवधे तु विशेषमाहतुः सुमन्तुदेवलौ ।
विधेः प्राथमिकादस्माद्द्विगुणं व्रतमाचरेत् ॥
तृतीये त्रिगुणं चोक्तं चतुर्थे नास्ति निष्कृतिरिति ।

अत्र कश्चित् । क्रमिकानेकब्राह्मणवधे व्रतकालदेशकालकर्त्रैक्येण विज्ञातविशेषतया तन्त्रेणैकस्मिन् द्वादशाब्दव्रते प्राप्ते प्रतिनिमित्तं नैमित्तिकविधानार्थमिदं व्रतमित्याह । तच्च आवृत्तेरपि न्यायतएव प्राप्तत्वेन वाक्यानर्थक्यप्रसङ्गात् । न च नैयायिकावृत्त्यनुवादेन चतुर्थे तदभावविधायकमावृत्तिविधानेऽपि वाक्यभेदादिति वाच्यम् । अनुवादकत्वे नैरर्थक्याच्चतुर्थादिपर्युदासेनेतरत्रावृत्तिविधानेनैकवाक्यत्वाच्च । तस्मादेवं व्याख्येयम् । द्वितीयादि ब्रह्मवधे द्वादशवार्षिकाद्यावृत्तिर्न विधेया । किन्तु द्वैगुण्यादिविधेयं शब्दसामर्थ्यात् । तथाच द्वयोः क्रमिकयोर्ब्रह्मवधयोर्युगपत्प्रायश्चित्तानुष्ठाने षड्विंशदाब्दिकव्रतं कार्यमेवं त्रयाणां द्विसप्तत्यब्दमिति । एवं च चतुर्थे नास्ति निष्कृतिरिति घटते विंशोत्तरशताब्दकालाभावात् ।

यदि क्रियन्ते तदा भगणादिको ग्रहो भवतीत्युपायो दृष्टः । अथ च यो भगणाद्यो रविरागतः सोऽहर्गणतुल्यैर्भगणैर्युतो यावत् क्रियते तावद्गत-भभ्रमा भवन्ति । यतः कुदिनानां रविभगणानां च योगे भभ्रमाः । अत्र भगणानां प्रयोजनाभावाद्राश्यादिरेव रविर्भभ्रमावयवीभूतो गृहीतः । एवं ग्रहगतसावनानयनेऽपि । तत्र ग्रहकल्पसावनैरहर्गणे गुणिते कुदिनैर्हृते भगणादिकं किल फलं भवति । तद्द्वादशगुणितं राश्यादिकं स्यात् । अतः कुदिनानि द्वादशभिरपवर्त्तितानि भागहारः कृतः । लब्धराशिषु द्वादशतष्टेषु ये भगणा लभ्यन्ते ते प्रयोजनाभावात् त्याज्याः । अत उक्तम् । आप्तराशिभिर्विवर्जितो विकर्त्तन इत्यादि जातं सर्वमुपपन्नम् ॥ ८-९ ॥

**वा.वा.**—अथ रव्यहर्गणाभ्यां ग्रहानयनमाह अर्कसावनदिवागणो-हत इति । रविभगणसावनयोगे भभ्रमा इत्युक्तम् । 'भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा' इति कल्पे ग्रहसावनान्यपि वेद्यानि । तत इष्टग्रहेष्टसावनज्ञानं त्रैराशिकेन । कल्परविसावनैः कल्पग्रहसावनास्तदेष्टा-र्कसावनगणेन किमिति । एतानि ग्रहेष्टसावनानीष्टभभ्रमेभ्यः शोध्यानि तत्रेष्टभभ्रमो नामेष्टभगणाद्यरवेरिष्टरविसावनस्य च योगः । इष्टराश्याद्यो रविस्तु भभ्रमावयवः । तस्मादिष्टभभ्रमाणां पश्चावयवाः । तत्र पूर्वो-क्तानुपातेन ग्रहेष्टसावनेषु यच्छेषं तद्द्वादशगुणं रविकल्पसावनहृतं लब्धे राशयस्ते रविराशिभ्य एव शोध्याः । अत्र राश्यादिग्रहाणामेव प्रयोजना-दनुपातेन सिद्धो यो ग्रहकल्पसावनरवीष्टसावनघातः स एव द्वादशगुणः कार्यः । रविकल्पसावनैर्भाज्यः । तत्र गुणहरौ गुणेनापवर्त्त्य हर एव खाभ्रबाणेति पठितः । लब्धं राश्यादि चतुर्धा । तद्राश्याद्यरवेः शोधितं जाता राश्यादिका ग्रहाः ॥ ८-९ ॥

**मरीचिः**—अथ प्रकारान्तरेण सूर्याद्ग्रहानयनं रथोद्धताप्रमाणिकाभ्या-माह अर्कसावनदिवागणो हत इति । प्रागानीतोऽहर्गणः कल्पीयैः स्वस्व-

सावनदिनैः 'भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य' इति ज्ञातैर्गुणिताः अस्मात् । इन्द्राणां चतुर्दशसङ्ख्यात्वात् तत्पर्यायपदेन चतुर्दशेत्येतदङ्क-१३१४९३०३७५०० भक्तादाप्तफलराश्यादिभिः । अत्रोपरि द्वादशतष्टमित्यर्थसिद्धम् । अर्कसावनदिवागणाद्धृतादिति पाठे त्वनतिः । ध्रुवादिको राश्यादिको विकर्त्तनः सूर्यः । "विकर्त्तनार्कमार्त्तण्ड—"इत्यभिधानात् । विवर्जितो हीनः । ध्रुवादिका राश्यादिका ग्रहा भवन्ति । ग्रहा इत्युपलक्षणं कल्पभगणसम्बन्धिनः । तेन यत्सावनेन फलमानीतं तेनोनोऽर्कः स इष्टकाले भवतीत्यर्थः । वा प्रकारान्तरेण । उपसंहारार्थमाह बुधैरिति । अतोऽस्माद्धृताः सूर्याद्ग्रहाः प्रकारान्तरेण । अर्कचन्द्रौ साधितौ यद्युक्तिभिस्तत्सदृशयुक्त्या अन्यदपि प्रकारान्तरेण ग्रहानयनमुक्तमिव बुधैर्गणिततत्त्वज्ञैर्विचिन्त्यम् । तथा च प्रकाराणामनेकत्वसम्भवात् सर्वेऽपि प्रकारा वक्तुं न शक्यन्ते ते स्वबुद्ध्या ज्ञेया इति यथा सूर्याद्ग्रहाः साधितास्तथेष्टग्रहज्ञानादितरग्रहाः साध्याः । तथा हि यद्ग्रहज्ञानमस्ति तस्य सूर्याहर्गणेनानुपातादिष्टकाले सावनानि सावयवानि भगणाद्यात्मकानि साध्यानि एतानि तस्यैव तदात्मकस्य योज्यानि । ततः सिद्धेतरग्रहसावनानि तदात्मकान्यर्कदिनगणानुपातेनानीय हीनानि तत्र शेषं भगणात्मकं तदितरग्रहो भवति ।

अत्रोपपत्तिः । 'भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा' इत्यस्य वैपरीत्येन कल्पग्रहाः सावनोना भभ्रमग्रहभगणा भवन्तीति सिद्धम् । तथेष्टकालेऽपि भगणादिसूर्याहर्गणयोगो गतभभ्रमसङ्ख्या स्यात् । अत्र कल्परविसावनैः कल्पग्रहासावनानि तदाऽहर्गणेन कानीत्यनुपातेनेष्टकाले यद्ग्रहगतसावनानि स एव भगणाद्यो ग्रहो भवति तत्रेष्टकाले राश्यादिग्रहस्यैव सर्वत्रावश्यकत्वेन लाघवाच्च गतभभ्रमग्रहसावनाधोऽवयवयोरुक्तरीत्याऽन्तरस्य राश्यादिग्रहसंभवेन गतसावनाधोऽवयवो राश्यादिक आनेय इति द्वादशगुणो गतसावनानाम् ।

तेन गुणहरौ द्वादशकुदिनरूपौ गुणेनापवर्त्य कुदिनस्थाने १३१४९३०३७५०० तथा चाहर्गणः स्वस्वकल्पसावनगुण उक्तहरभक्तः फलं सावनावयवराश्याद्यम् । साजात्येनान्तरस्योक्तत्वाद्घट्याद्यकरणेऽपि न क्षतिः । राश्यादिसूर्यस्यैव भभ्रमाधोऽवयवत्वात् फलोनरविः शेषस्य राश्यादिग्रहत्वप्रतिपादनात् । राशीनां द्वादशाधिकत्वाभावात् । फलं द्वादशतष्टमुपरीति राशिपदेनार्थसिद्धम् । एतद्रीत्याऽन्यप्रकाराणां सम्भवादन्यदपि विचिन्त्यं बुधैर्वैचित्र्यात् । अत उपपन्नमर्कसावनेत्यादि विचिन्त्यमन्यदप्यत इत्यन्तम् ॥ ८-९ ॥

इदानीमानयनप्रकारान्तराणामुपपत्तिमाह ।

**यथायथाऽधिमासकाऽवमेन्दुमासपूर्वकाः ।**
**परस्परं युतोनिता भवन्ति खेटपर्ययाः ॥ १० ॥**
**त एव सूर्यसावनद्युपिण्डतोऽनुपातजाः ।**
**तथातथा युतोनिता भवन्ति तेऽथ वा ग्रहाः ॥ ११ ॥**

**वा. भा.**—अत्राधिमासावमेन्दुमासपूर्वका इति पूर्वशब्दोपादानादन्येऽप्यभीष्टा राशयो यथायथा परस्परं युतोनिताः सन्त इष्टग्रहभगणसमा भवन्तीति पूर्वं संप्रधार्य तानेव राशीन् भगणान् प्रकल्प्याहर्गणादनुपातेन फलानि साध्यानि । तेषां फलानां तथातथा योगे वियोगे च कृते ग्रहः स्यादिति । तद्यथा ।

'इन्दुमण्डलगुणेन्दुसंगुणब्रध्नचक्रविवरेऽधिमासकाः ।'

इति चन्द्रभगणानां त्रयोदशगुणार्कभगणानां चान्तरे यद्यधिमासा भवन्ति तदा त्रयोदशगुणार्कभगणाधिमासयोगे चन्द्रभगणाः स्युरित्यर्थाज्जातम् । अतोऽहर्गणादधिमासमानीय त्रयोदशगुणोऽर्कस्तेनाधिकश्चन्द्रः स्यादित्येवमादीनि प्रकारान्तरशतान्युत्पद्यन्ते ॥ १०–११ ॥

**वा. वा.**—अत्राध्यायान्तमेकादशवृत्तानि भाष्ये स्पष्टानीति ॥ १०-२० ॥

इति श्रीकृष्णदैवज्ञात्मजनृसिंहकृतौ ग्रहानयनाध्यायः ।

मरीचिः—अथ विचिन्त्यमित्युक्तं कल्पे उक्ताधिमासावमचन्द्रमासंख्यादयः। आदिपदात् तत्र कथं विचिन्त्यमिति चिन्तनरीतिं प्रमाणिकाभ्यामाह। यथायथेति। त एव सूर्यसावनदिनादयः कल्पोक्तपदार्थसंख्याः परस्परं युतोनिता युता ऊनिता वा इदमुपलक्षणम्। परस्परं गुणिता भक्ता इत्यादि यथायथा यद्रीत्या खेटपर्यया ग्रहभगणसंख्याः कल्पोक्ता भवन्ति इति प्रकारं निश्चित्येष्टकालेऽपि त एवाधिमासादयः प्रकारोपयुक्ताः सूर्यसावनद्युपिण्डतः प्रागनीताहर्गणात् कल्पकुदिनैः कल्पोक्ताधिमासादयस्तदाऽहर्गणेन के इत्यनुपातजाः कार्याः। अतः फलितमाह तथेति। तथातथा तद्रीत्या आनीतास्तेऽधिमासादयो युतोनिता इत्युपलक्षणात्। सङ्कलनादिपरिकर्मप्रकारविषयाः कार्याः। अथ वा प्रकारान्तरेण ग्रहभवन्ति। यथा इन्दुमण्डलगुणेन्दुसंगुणेत्युक्तवैपरीत्येन त्रयोदशगुणार्कभगणाधिमासयोगे चन्द्रभगणाः कल्पे चन्द्रभगणाधिमासान्तरं त्रयोदशभक्तमर्कभगणश्च भवतीतीष्टकालेऽहर्गणानुपातेनाधिमासा भगणाद्या आनेयाः। तद्युक्तस्त्रयोदशगुणार्कश्चन्द्रः स्यात्। तद्धीनश्चन्द्रस्त्रयोदशभक्तोऽर्कः स्यात्। एवमन्तरं तरणिचन्द्रचक्रजमित्युक्तवैपरीत्येनेष्टकाले चन्द्रमासा भगणाद्याः साध्यास्तदूनश्चन्द्रोऽर्कः। तद्युतोऽर्कश्चन्द्रः। एवं चन्द्रचक्रदिवसैक्यमूनितमित्युक्तवैपरीत्येनेष्टकालेऽहर्गणाद्भगणाद्या अवमचन्द्रमासचन्द्रदिनभभ्रमाः साध्यास्ततोऽवमे चन्द्रमासोनचन्द्रदिनैरूना भभ्रमा युताश्चन्द्रः स्यादित्यादि। तथा च यस्य कल्पभगणा येन प्रकारेणोत्पन्ना भवन्ति तत्प्रकारेणेष्टकाले स भवतीत्यर्थः।

अत्रोपपत्तिः। "प्रमाणमिच्छा च समानजाती" इत्युक्तेन या माणकाले गतिः सैवेच्छाकाले अन्यथा समानजातिविरोधापत्तेरिति सुगमा॥ १०–११॥

इदानीमस्योदाहरणभूतानि प्रकारान्तराणि दर्शयन्नाह।

**द्विचक्रयोगजो ग्रहो वियोगजेन युग्वियुक्।**

दलीकृतौ च तौ क्रमादमन्दमन्दगामिनौ ॥ १२ ॥
द्विपर्ययान्तरोद्भवग्रहेण वर्जितो द्रुतः ।
स मन्दगोऽथ मन्दगो युतो भवेदमन्दगः ॥ १३ ॥

वा० भा.—अत्राद्यानयनस्योपपत्तिः संक्रमणगणितेन । द्वितीयस्यातिसुगमा ॥ १२–१३ ॥

मरीचिः—अथैतद्रीत्याऽनेकप्रकारा उत्पद्यन्ते तत्रैतस्योदाहरणभूतप्रकारान् विवक्षुः प्रथमं संक्रमसूत्रोपनिबद्धकर्मणा ग्रहानयनं प्रमाणिकयाऽऽह द्विचक्रयोगजो 'ध्रुवरचक्रहतो दिनसंचयः'-इत्यादिना इष्टाहद्वयभगणयोगमितभगणसंख्याया इष्टकाले भगणाद्यो ग्रहः । तद्भगणान्तरमितभगणानीतग्रहेण स्थानद्वये क्रमेण युगयुक्तो वियुक् हीनः कार्यः । तौ स्थानद्वयस्थावर्धितौ । चः समुच्चये । क्रमात् योगान्तरक्रमात् अमन्दमन्दगामिनौ । द्वयोर्मध्ये यस्य भगणा अधिका यस्य च न्यूनास्तौ शीघ्रमन्दगतिग्रहौ भवतः । ग्रहोपलक्षणादुच्चपातकेन्द्राण्यपि भवन्ति ।

अत्रोपपत्तिः । लघुबृहद्राश्योर्यदन्तरं तल्लघुराशौ क्षिप्यते तदा बृहद्राशिः । अस्मिन् तदूने लघुराशिरिति प्रत्यक्षसिद्धम् । अतो लघुबृहद्राश्योर्योगे ज्ञाते ज्ञाततदन्तरयुक्तेर्द्विगुणो बृहद्राशिः । अन्तरे हीने च लघुराशिर्द्विगुणः । योगे बृहल्लघुराश्योरेव सत्त्वात् । तत एतौ द्विभक्तौ क्रमेण बृहल्लघुराशी स्तः । एवं ग्रहयोरिति सुगमा । अत उपपन्नं द्विचक्रयोगज इत्यादि ॥ १२ ॥

अथ प्रकारान्तरेण शीघ्रमन्दान्यतरज्ञाने तदन्यतरज्ञानं संक्रमोपपत्तिरूपं प्रमाणिकयाऽऽह द्विपर्ययान्तरोद्भवग्रहेणेति । ग्रहयोर्द्वयोर्भगणान्तरतुल्यभगणात् ध्रुवरचक्रेत्यादिनाऽऽनीतो ग्रहस्तेन तद्द्वयान्यतरशीघ्रगो वर्जितो हीनः सः शेषमितो मन्दगतिस्तदितरो भवेत् । अथ ज्ञातो मन्दगतिर्युतोऽमन्दगः शीघ्रगतिस्तदितरः स्यात् ।

अत्रोपपत्तिः । भगणान्तरोत्पन्नस्येष्टकाले तदन्तरत्वादन्तरेण बृहद्राशिरूनो लघुराशिरयं युतो बृहद्राशिरिति पूर्वोक्तेन मन्दशीघ्रग्रहज्ञानं सुगममित्युपपन्नं द्विपर्ययेत्यादि ॥ १३ ॥

पुनः प्रकारान्तरेणाह ।

**केन्द्रोच्चयोश्चञ्चलयोर्वियोगे**
**योगेऽथ वा स्यान्मृदुनोः प्रसाध्यः ।**
*** साध्यस्य चक्रैर्गुणितः प्रसिद्धो**
**भक्तो निजैः स्यादथ वा प्रसाध्यः ॥ १४ ॥**

**वा.भा.**—अत्रोपपत्तिः । शीघ्रोच्चाद् ग्रहे शोधिते शीघ्रकेन्द्रं भवति । शीघ्रकेन्द्रे शोधिते ग्रहो भवतीति किमाश्चर्यम् । मन्दोच्चोनो ग्रहो मन्दकेन्द्रम् । तत् केन्द्रं मन्दोच्चेन युतं ग्रहो भवतीति किं चित्रम् । यदि सिद्धग्रहस्य युगभगणैः सिद्धग्रहो लभ्यते तदा साध्यभगणैः किमिति फलं साध्यग्रहः स्यादित्युपपन्नम् ॥ १४ ॥

**मरीचिः**—अथ केन्द्रोच्चज्ञाने ग्रहज्ञानमिष्टग्रहे ज्ञाते तदाऽन्येष्टग्रहज्ञानं च प्रकारान्तरेणेन्द्रवज्रयाऽऽह केन्द्रोच्चयोश्चञ्चलयोरिति। खेचरोच्चभगणान्तरोन्मिता इत्यादिना ज्ञातमन्दशीघ्रकेन्द्रभगणेभ्यो मन्दशीघ्रोच्चभगणेभ्यश्चोक्तप्रकारेणोच्चकेन्द्राणि साध्यानि । तत्र चञ्चलयोः केन्द्रोच्चयोः शीघ्रोच्चकेन्द्रयोर्वियोगेऽन्तरे प्रसाध्यः । यत्केन्द्रोच्चे स दृष्टो ग्रहः स्यात् । अथ मृदुनोः केन्द्रोच्चयोर्मन्दोच्चकेन्द्रयोर्योगे यस्य मन्दोच्चकेन्द्रे स दृष्टो ग्रहः स्यात्। द्वितीयमाह साध्यस्येति । प्रसिद्धभागणाद्यो ज्ञातो

---

* अस्य नवीनोपपत्तिः । $\frac{\text{सि· यु· भ} \times \text{अह}}{\text{युकु}} = \text{सिग्र} \therefore \frac{\text{अह}}{\text{युकु}} = \frac{\text{सिग्र}}{\text{सि· यु· भ}}$

एवम् $\frac{\text{अह}}{\text{युकु}} = \frac{\text{साग्र}}{\text{सा· यु· भ}} \therefore \frac{\text{सिग्र}}{\text{सि· यु· भ}} = \frac{\text{साग्र}}{\text{सा· यु· भ}} \therefore \frac{\text{सा, यु, भ} \times \text{सिग्र}}{\text{सि· यु· भ}} = \text{साग्र}$

अत उपपन्नम् ।

ग्रह इष्टः साध्यस्य इष्टस्य भगणैर्गुणिता निजैर्ज्ञातस्य ग्रहस्य भगणैर्भक्तः फलं प्रसाध्य इष्टग्रहः स्यात् ।

अत्रोपपत्तिः । खेचरोच्चभगणान्तरोन्मिता इत्यादिनेष्टकाले केन्द्रस्य ग्रहोच्चान्तरत्व सिद्धम् । तत्र ग्रहभगणेभ्यः शीघ्रोच्चभगणानामधिकत्वा-द्ग्रहोनं शीघ्रोच्चं शीघ्रकेन्द्रं सिद्धमत्र वैपरीत्याद्ग्रहे योजिते उच्चं भवति केन्द्रोनोच्चं ग्रह इति । अत उक्त केन्द्रोच्चयोश्चलयोर्वियोग इति । एवं ग्रहभगणेभ्यो मन्दोच्चभगणानां न्यूनत्वान्मन्दोच्चोनो ग्रहः केन्द्रमिति सिद्धम् । अत्र वैपरीत्यान्मन्दोच्चयोगे ग्रहः । अत उक्त योगेऽथ वा स्यान्मृदुनेः प्रसाध्य इति । सिद्धग्रहभगणैः सिद्धग्रहो लभ्यते तदा तदितरेष्ट-भगणैः क इत्यनुपातेनोपपन्नं साध्यस्य चक्रैरित्यादि ॥ १४ ॥

अहर्गणान्मध्यमग्रहमानीयेदानीं मध्यग्रहादहर्गणमाह ।

**साग्रात् सचक्राच्च खगात् कहघ्नात्**
**तत्कल्पचक्राप्तमहर्गणः स्यात् ।**
**निरग्रचक्रादपि कुट्टकेन**
**वक्ष्येऽग्रतोऽग्राच्च तथाऽग्रयोगात् ॥ १५ ॥**

**वा.भा.**—भगणराशिकलाविकला अन्ते विकलाशेषं च कुदिनैः संगुण्य स्वच्छेदेन विभज्योपर्युपरि निक्षिपेत् । तद्यथा—भगणादिविकलाशेषा-वधि कल्पकुदिनगुणे विकलाशेषस्थाने कुदिनैर्विभज्य विकलास्थाने फलं प्रक्षिप्य तत्र षष्ट्या विभज्य कलास्थाने निक्षिप्यैवं भगणान्तं यावत् । तत्र कल्पभगणैर्हृतेऽहर्गणः स्यात् । अत्रोपपत्तिर्विलोमगणितेन । तथा निरग्रचक्रादपि ग्रहात् तथा केवलादग्रादपि तथा शेषयोः शेषाणां वा योगादहर्गणानयनमग्रत इति प्रश्नाध्याये कुट्टकविधिना वक्ष्ये ॥ १५ ॥

**मरीचिः**—अथानीतग्रहाणां शुद्धत्वज्ञानार्थं ग्रहेभ्योऽहर्गणानयनमुपजाति-कयाऽऽह साग्रात् सचक्रादिति । खगात् राश्यादिविकलान्तावयवात्मक-ग्रहात् । तदात्मके ग्रहपदस्य शक्तत्वात् । भगणाद्यात्मकार्थमाह ।

सचक्रादिति गतभगणसहितात् । तथा च भगणादिविकलान्तावयवात्मकाद्ग्रहात् । कहघ्नात् कल्पकुदिनगुणितात् । ननु पूर्वोक्तग्रहसाधनप्रकारेण विकलावयवान्तग्रहज्ञानेऽपि विकलाशेषादधोऽवयवाद्ग्रहात् स्थूलग्रहग्रहणेनाहर्गणः कथं सिद्ध्येदत आह साग्रादिति । अग्रेण विकलाप्राप्तौ भाज्यशेषं तेन सहितः साग्रस्तस्मात् । तथा च ग्रहविकलागुणितकल्पसावनेषु विकलाशेषं योज्यं तच्छेषत्वात् षष्ट्या भक्ते फलं कलास्थाने तत्र षष्ट्या भक्ते फलं भागस्थाने ततस्तत्र त्रिंशद्भक्ते फलं राशिस्थाने ततस्तत्र द्वादशभक्ते भलं भगणस्थाने योज्यमिति परिभाषया गुणनफलं निरवयवं भगणस्थाने कार्यम् । एतादृशात् । तत्कल्पचक्राप्तं यो गुणितस्तस्य कल्पभगणैर्भक्ताद्यल्लब्धमहर्गणः पूर्वसाधितः स्यात् । तथा च ग्रहादहर्गणश्चेत् सिद्धस्तथाऽसौ शुद्धोऽन्यथा त्वशुद्ध इति भावः । ननु 'द्युचरचक्रहतो दिनसञ्चय' इत्यादिनाऽऽनीतस्य ग्रहस्य राश्यादिविकलावयवान्तज्ञानप्रयोजनाद्भगणविकलाशेषयोः परिमार्जनेन तदज्ञानाद्राश्यादिविकलान्तावयवात्मकग्रहज्ञानेऽहर्गणः कथं सिद्ध्येदत आह निरग्रचक्रादिति निर्गतेऽग्रचक्रे यस्मात् तादृशग्रहात् राश्यादिविकलान्तावयवात्मकात् । अग्रतो 'राश्यादेर्विकला दृढभगणगुणाश्चक्रविकलकाभक्ताः' इत्याद्युक्तप्रकारेणानीतभगणशेषात् कुट्टकेन 'दृढभगणा येन गुणाः' इत्यादिप्रश्नाध्यायोक्तप्रकारेण वक्ष्येऽहर्गणमिति शेषः । अपिः समुच्चये । अथैतत्प्रसंगेन वक्ष्यमाणप्रकारौ स्मारयति केवलविकलाशेषात् 'कल्प्याऽथ शुद्धिर्विकलावशेषम्'-इत्यादिनोक्तकुट्टकप्रकारेण कुट्टकाध्याये वक्ष्ये । एतेन पाटीबीजे ग्रहगणितोत्तरं कृते इति सूचितम् । अग्रयोगात् भगणशेषाद्ग्रहयोगात् । 'उद्दिष्टं कहतष्टमम्बुधिहृतम्'-इत्यादिना प्रश्नाध्याये तथाऽहर्गणं वक्ष्ये इत्यर्थः ।

अत्रोपपत्तिः । कल्पग्रहभगणैः कल्पसूर्यसावनतुल्याहर्गणास्तदा गतभगणाद्यवयवरूपग्रहेण क इत्यनुपातेनाहर्गणज्ञानम् । तत्र विकला-

शेषादप्यवयवसम्भवान्निरवधित्वाल्लाघवाच्च विकलाशेषे कुदिनहररूप-गुणहरयोस्तुल्यत्वाच्चाशक्करणेन गुणनोत्तरं विकलास्थाने विकलाशेषं केवलं योज्यमत उपपन्नं साग्रात् सचक्रादित्याद्युक्तम् ॥ १५ ॥

इदानीमहर्गणादपि कल्पगतमाह ।

**अभिमतद्युगणादवमैर्हतात्**
**क्षितिदिनाप्तगतावमसंयुतः ।**
**दिनगणः स भवेत् तिथिसञ्चयः**
**पृथगतोऽधिकमाससमाहतात् ॥ १६ ॥**
**विधुदिनाप्तगताधिकमासकैः**
**कृतदिनै रहितोऽर्कदिनोच्चयः ।**
**भवति मासगणः खगुणोद्धृतो**
**रविहृतः स च कल्पगताः समाः ॥ १७ ॥**

**वा.भा.**–स्पष्टार्थमिदम् ।

अत्रोपपत्तिस्त्रैराशिकाभ्याम् । अहर्गणानयनाद्विलोमप्रकारेण कलिगतानयनं सुगमम् ।

**मरीचिः**–नन्वहर्गणस्याशुद्धत्वे ग्रहशुद्धिः कथमतोऽहर्गणस्य शुद्धत्वज्ञानाय कल्पगतवर्षाद्यानयनं तत एव द्रुतविलम्बिताभ्यामाह अभिमतद्युगणादिति । अहर्गणानयनश्लोकानुरोधेन स्पष्टार्थम् । अवमशेषाद्घट्याद्यवयवो न ग्राह्यः । अधिशेषाच्च चान्द्रगतमासशुक्लादिगततिथिज्ञानार्थं दिनाद्यवयवो न ग्राह्यः । तदप्रयोजने ग्राह्य इति ध्येयम् ।

अत्रोपपत्तिः । कल्पसावनैः कल्पावमानि तदाऽहर्गणेन कानीत्यनुपातेनावमानि निरग्राणि योज्यान्यहर्गणे तिथ्यन्तकाले च न्द्राहर्गणमिद्धर्थं पूर्वं तथैव सिद्धत्वात् । निरवयवेन लाघवाच्च कल्पचान्द्रदिनैः कल्पाधिमासास्तदेष्टचान्द्रैः क इत्यनुपातेनाधिदिनान्येव कुतो नानीतानि लाघवादिति वाच्यम् । कल्पेऽधिदिननिबन्धनाभावात् सौरा-

हर्गणस्त्रिंशद्भक्तः सौरमासाः फलम् । शेषं सौरदिनानि । द्वादशभक्तास्ते गतसौरवर्षाणि मध्यममेषसङ्क्रमकाले शेषम् । ततः सङ्क्रान्त्यवधिसौरमासाः । एत एव "कोट्याहतैर्यद्युवै" रित्यादिना सूर्यचन्द्रसाधने ऽधिशेषाच्छशिमासलब्ध्या' इत्यनेन चैत्रादिचान्द्रदिनानां सौरदिवसाः प्रतिपादिताः । अत एव तत्स्थाने चैत्रादिचान्द्रमासशुक्लादिगततिथिज्ञानार्थं निरवयवाधिमासा हीनाः कार्याः । शेषं सौरचान्द्रदिनयोगस्तादृशो भवति । सौरदिनानां बहुत्वादर्कदिनोच्चय इत्युक्तमिति तथाऽपि न क्षतिरित्यभिमतद्युगणादित्यादि श्लोकद्वयं पूर्ववैपरीत्येनोपपन्नम् ॥ १७ ॥

इदानीं कलिगताद्प्यहर्गणमाह ।

कलिगतादथ वा दिनसञ्चयो
दिनपतिर्भृगुजप्रभृतिस्तदा ।
कलिमुखध्रुवकेण समन्विता
भवति तद्द्युगणोद्भवखेचरः ॥ १८ ॥

**वा. भा**—अत्र कलिगताहर्गणेऽयं विशेषः । शुक्राद्यो वारो गणनीयः । यतः कल्पगतादहर्गणात् कलिमुखे शुक्रवारो भवति । तत्र च ये ग्रहास्ते ध्रुवसंज्ञाः कल्पिताः । तद्द्युगणभवः खेचरश्च । कलिमुखध्रुवकेण समन्वितः कार्य इत्यत्र वासनाऽपि सुगमा ।

**मरीचिः**—अथ गणितलाघवार्थमुक्तप्रकारेण कलिगतवर्षेभ्योऽहर्गणादिकं साध्यमिति तद्द्रुतविलम्बितेनाह कलिगतादथ वा दिनसञ्चय इति । अथ वा गणितसौकर्यार्थं कलिगतात् कलियुगचरणप्रारम्भाद्गतसौरवर्षगणाच्चन्द्राद्रीन्दुगुणाः शकयुता इति ज्ञानात् 'कथितकल्पगतोऽर्कसमागणाः'-इति प्रागुक्तप्रकारेणाहर्गणः साध्यः । वारादिवादाद्विशेषमाह दिनपतिरिति । तदा तस्मिन्नहर्गणे दिनपतिर्वारो भृगुजप्रभृतिः शुक्रपूर्वगणनयोक्तक्रमेण गण्य इति । अस्माद्ग्रहसाधने विसंवादाद्विशेषमाह कलिमुखेति । तद्द्युगणोद्भवखेचरः कलिगतसाधिताहर्गणात् द्युचरचक्रन्यानीतग्रहः

कलिमुखध्रुवकेण कलिप्रारम्भकाले यः स्वस्वध्रुवस्तेन समन्वितो राश्यादिषु साजात्येन युक्तो ग्रहो राश्यादिको भवति भगणानामप्रयोजनात् ।

अत्रोपपत्तिः । वारप्रवृत्तिरूपकल्पादितो ग्रहसाधने लाघवादिष्टकालादहर्गणे साधिते तदुत्पन्नग्रहस्तत्कालादेव । कल्पादित इति । अहर्गणादिकाले कल्पादितो यो ग्रहो भवेत् स योज्यस्तत्र कल्पादावधिशेषावमशेषाभावादहर्गणसाधने कल्पादिरीतिरेव भवतीति कलिगतादहर्गणः साधितः । अत एव करणादौ तदानयने तच्छेषं योजितमस्ति । कल्यादौ कल्पादहर्गणे साधिते सप्ततष्टे शुक्रवारो भवतीति तदादिगणना । कल्यहर्गणानीतवारे यथा कल्पवर्षैः कल्पकुदिनानि तदा कल्यादितः कल्पादिवर्षैरेभिः १९७२९४४००० कानीत्यनुपातेन परस्परमपवर्त्तने एतेऽङ्काः १५७७९१९४५ । ४५६७ अनेनाङ्केन गुणनीया अहर्गणो भवति । वारापेक्षायाः सत्त्वात् पूर्वमेव सप्ततष्टौ तौ प्रथमे चत्वारो द्वितीये त्रयः । अनयोर्घातः सप्ततष्टः शेषं पञ्च सूर्यादिगणनया शुक्रवार इति । कल्याद्यहर्गणानीतग्रहे कल्यादिजातग्रहो योज्य इति तद्ग्रहस्य योजने स्थिरत्वाद्ध्रुवक इति संज्ञा । अतः कलिमुखध्रुवकेण समन्वित इति ॥ १९ ॥

इदानीं कलिमुखग्रहानयनमाह ।

**खाद्रिरामाग्नयः कृग्निरामाङ्कका**
**वेदवेदाङ्कचन्द्रा विलिप्ताः क्रमात् ।**
**षड्रसाङ्गाब्धयोऽङ्गाभ्रवेदाब्धयो**
**वेदषट्काभ्रभूपाभ्रभूसम्मिताः ॥ १९ ॥**
**वेदचन्द्राद्रिवेदाब्धिनागाः कर-**
**द्व्यब्धिवेदाब्धिशैला भवेयुः कुजात् ।**
**द्वापरान्तध्रुवाश्चक्रशुद्धास्तथा**
**सूर्यतुङ्गेन्दुतुङ्गेन्दुपातोद्भवाः ॥ २० ॥**

**वा. भा.**—स्पष्टार्थमिदम् ।

कुजादीनां सर्वेषां ध्रुवाश्चक्रशुद्धाः पठिता लाघवार्थम् ।

| मं | बु | बृ | शु | श | र० तुं० | चं० तुं० | चं० पा० |
|---|---|---|---|---|---|---|---|
| ११ | ११ | ११ | ११ | ११ | २ | ४ | ५ |
| २९ | २७ | २९ | २८ | २८ | १७ | ५ | ३ |
| ३ | २४ | २० | ४२ | ४६ | ४५ | २९ | १२ |
| ५० | २९ | ३६ | १४ | ३४ | ३६ | ४६ | ५८ |

इति ग्रहानयनाध्यायः ।

---

**मरीचिः**—यथात्रोपयुक्तग्रहध्रुवाकान् सग्विणीभ्यामाह । खाद्रिरामाग्नय इतः कुजादिति ल्यब्लोपे पञ्चमी । तेन भौममारभ्य पञ्चग्रहणां शन्यन्तानामेताः क्रमात् खाद्रिरामाग्नय इत्याद्यङ्कस्थापनेन विकला भौमस्य ३३७०। बुधशीघ्रोच्चस्य ९३३१। गुरोः १९४४। शुक्रशीघ्रोच्चस्य ४६६६। शनेः ४४०६। चक्रशुद्धा द्वादशराशिविकलाभ्यो १२९६००० हीना द्वापरान्तध्रुवाः कलिप्रारम्भध्रुवा विकलात्मका भवन्ति । तद्यथा-भौमस्य १२९२६३० । बुधशीघ्रोच्चस्य १२८६६६९ । गुरोः १२९४०५६ । शुक्रशीघ्रोच्चस्य १२९१३३४। शनेः १२९१५९४ । एता विलिप्ताः १०१६०६४, ८४७२१४,७४४४२२ । तथा तदुच्चकशुद्धाः क्रमेण सूर्यमन्दोच्चचन्द्रमन्दोच्चपातोद्भवा द्वापरान्तध्रुवाः। तेषां त्रयाणां ध्रुवका भवन्ति । तद्यथा सूर्यमन्दोच्चस्य २७९९३६,चन्द्रमन्दोच्चस्य ४५१७८६, चन्द्रपातस्य ५५५५७८ विकलानां परिभाषाया जातराश्यादिका ध्रुवास्तेषाम् । तद्यथा सूर्यमन्दोच्चस्य २। १७ । ४५। ३६। चन्द्रमन्दोच्चस्य ४ । ५ । २९ । ४६ । चन्द्रपातस्य ५ । ३ । १२ । ५८ । भौमस्य ११ । २९ । ३ । ५० । बुधशीघ्रोच्चस्य ११ । २७ । २४ । १९ । गुरोः ११ । २९ । २० । ३६ । शुक्रशीघ्रोच्चस्य ११ । २८ । ४२ । १४ । शनेः ११ । १८ । ४६ । ३४ ।

अत्रोपपत्तिः । कल्पादितः कल्यादिवर्षैः सप्तसप्तवेदाब्ध्यङ्कद्विगाङ्केन्दुमितैः १९७२९४४००० कल्पसौरवर्षैः कल्पाधिमासावमे तदिष्टवर्षैः के इत्यनुपातेनाधिमासावमयोर्निरग्रतादर्शनाद्दर्शान्तसूर्योदयमेषसंक्रमकालानामभेद इति सिद्धम् । तत्र सप्ताङ्कपञ्चवेद—४५९७ गुणितशरवेदभूपगोसप्तसप्ततिथिमितानाम् १५७७९१६४५ अहर्गणत्वप्रतिपादनादयमहर्गणः ७२०३३४४४२७१५ पञ्चेन्दुभक्ताब्ध्यब्धिव्यङ्कखद्विनगैर्मितः । अस्माद्द्युगणप्रयोजनाभावेनार्कसावनदिवागण इत्यादिना ग्रहाणां राश्यादिध्रुवाः समानीताः । तत्र सूर्यचन्द्रयोः पूर्णत्वेन स्वतः सिद्धत्वानात् भौमादीनां राश्यादिफलानयनेऽहर्गणोक्तगुणहरौ तिथिद्विगाङ्कतत्त्वेषुमितैः ५२५९७२१५ अपवर्तितौ जातौ कल्पे सावनानां गुणहरौ १३७० । २५० । अत्र फलस्य राश्यात्मकत्वात् स्वस्वसावनैः फलमुपरि द्वादशतष्टं जातं सर्वेषां राश्यादि तद्यथोक्तग्रहाणाम् । मं ०।०। ५६ । १० । बु॰ शी॰ उ० । २। ३५ । ३१ । बृ० । ० । ३२ । २४ । शु॰ शी॰ उ॰० । १ । १७ । ४६ । श॰०। १ । १३ । २६ । सू॰ उ॰ ९ । १२ । १४ । २४ । चं॰ उ॰ ७ । २४ । ३० । १४ । चं० पा॰ ६ । २६ । ४७ । २ । एते सूर्याद्राश्यादिशून्यमिताच्छोध्या ग्रहा भवन्ति । एते निबन्धनीया इत्यङ्कबाहुल्याद्भौमादिपञ्चानां तत्साहचर्येण सूर्योच्चादीनां च सावनस्थानापन्नराश्यादिफलमेव निबन्धनार्थं गृहीतम् । अङ्कस्वल्पत्वेन लाघवात् । अत्रापि राश्यंशादिविभागेनैव तदुक्तश्लोकबहुत्वसंभवात् लाघवार्थं विकला एव निबद्धाः । अत एव सूर्याच्छोधनार्थं चक्रशुद्धा इति । अत उपपन्नं स्वाद्रिरामाग्नय इत्यादिश्लोकद्वयम् ॥ १९—२० ॥

अध्यायस्य समाप्तिं सूचयति इति ग्रहानयनाध्याय इति स्पष्टम् । अन्यथाऽग्रिमयन्योक्तावसङ्गततापत्तेः । उक्तविषयाभावादिति भावः ।

इदानीं कक्षाप्रकारेण ग्रहानयनं विवक्षुः खकक्षां तावदाह ।

कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभि-
ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः ।

तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं
केचित् प्रोचुरदृश्यकगिरिं पौराणिकाः सूरयः ॥ १ ॥
करतलकलितामलकवदमलं
सकलं विदन्ति ये गोलम् ।
दिनकरकरनिकरनिहततमसो
नभसः स परिधिरुदितस्तैः ॥ १२ ॥

वा. भा.—एभिर्योजनैस्तुल्यां गणकाः खकक्षामाकाशपरिधिं वदन्ति । तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यत इत्याशङ्क्याऽहर्पतिद्युतियुक्तो नभसः परिधेरिदं मानं वदन्ति । अत एव पौराणिकास्ते ब्रह्माण्डपरिधिं वदन्ति । केचिल्लोकालोकं वदन्ति । यतस्तदन्तर्वर्तिन एवार्करश्मयः । एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः । प्रमाणशून्यत्वात् । करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति ॥ १—२ ॥

वा.वा.—अथ कक्षाध्यायस्तत्र ग्रहकक्षाखकक्षयोर्ज्ञानोपायो भगणोपपत्तौ चिन्तितः । नक्षत्रकक्षाज्ञानं भूगर्भभूपृष्ठस्थक्षितिजान्तराले दृङ्मण्डले स्वस्वक्षितिजोर्ध्वशङ्कुद्वयान्तरकलाभ्यः सुगमम् ।

"पश्येज्जलादौ प्रतिबिम्बितं भं खेटं दृगौच्च्यं गणयेच्च लम्बम् ।
तल्लम्बपातप्रतिबिम्बमध्यं दृगौच्च्यहृत् सूर्यहतं प्रभा स्यात्" ॥

छायातः शङ्कुर्यः स तु भूपृष्ठस्थक्षितिजात् । त्रिप्रश्नविधिना भौमादिवन्नक्षत्रशङ्कुः साध्यः । स तु भूगर्भस्थक्षितिजादूर्ध्वो भवति । आभिः शङ्क्वन्तरकलाभिर्भूव्यासार्धयोजनानि तदा चक्रकलाभिः किमिति भकक्षा भवति । सा च रविकक्षातः षष्टिगुणोत्पद्यते । कक्षासाधनस्य मनुष्यैरेवं कर्तुमशक्यत्वादागम एव कक्षामाने प्रमाणमित्युक्तम् । स्वकक्षातो वा शङ्क्वन्तरसाधनं वैपरीत्येन रवीन्द्वोरेव कक्षातः शङ्क्वन्तरसाधनम् । भौमादीनां तु ।

"ग्रहस्य कक्षा चलकर्णनिघ्नी स्फुटा भवेद्व्यासदलेन भक्ता" ।

इति स्फुटकक्षातः शङ्क्वन्तरं साध्यम् । अथ ग्रहकक्षोपरि चलोच्च-कक्षाऽस्ति तदधो वा । नाद्यः । ग्रहापेक्षया चलोच्चगतेरल्पत्वं प्रसज्येत तच्चायुक्तं प्रत्यक्षविरोधात् । न द्वितीयः । भूगर्भाद्दूरतरप्रदेशावस्थिति-निबन्धनोऽयमुच्चव्यपदेशो बाध्येत । दूरप्रदेशावस्थितत्वं नाम स्वीयग्र-हादनधःस्थितत्वम् । तस्माद्ग्रहकक्षैव तुङ्गपातयोः कक्षेत्याह—

"ग्रहस्य कक्षैव हि तुङ्गपातयोः पृथक् च कल्प्याऽत्र तदीयसिद्धये"-

ग्रहकक्षा या तूच्चप्रदेशस्यैवोच्चत्वव्यपदेशः । ग्रहकक्षाया यत्र विमण्डलेन संयोगस्तत्प्रदेशस्य पात इति संज्ञा । कुजगुरुशनिचलोच्चानां प्रत्यक्षोपलब्धगतेर्मध्यरविगतितुल्यत्वदर्शनान्मध्यरविश्चलोच्चमिति कल्प-ना । वस्तुतस्तु स्वीयग्रहकक्षास्थानामेव चलोच्चानां नन्दाक्षाः कला भुजगा-श्च विकला गतिरिति । अत्र 'ग्रहस्य चक्रैर्विहृता खकक्षा भवेत् स्वकक्षा'-इति या तुङ्गपातानां पृथक् कक्षा समायाति सा तु

"स्वया स्वया तानि पृथक् च कक्षया
हृतानि वा स्युर्भगणादिका ग्रहाः" ।

इति प्रकारेण तेषां साधनार्थमेवोपयुज्यते । न तेषामवस्थित्यर्थ-मत्यर्थः । सममण्डलमप्राप्तस्य रवेः समशङ्कूत्पत्तिवत् । नन्वेवं विसदृश-गतीनां तुङ्गपातग्रहाणामेककक्षास्थित्यङ्गीकारे रव्यादीनां ग्रहाणां सर्वे-षामप्येककक्षास्थितत्वं कुतो न स्यात् । स्यादेतद्यदि ग्रहभेदयोगकाले-ग्रहबिम्बयोरूर्ध्वाधरत्वानुभवो न भवेत् । शीघ्रफलाभावे भूमेर्दूरतरप्रतिम-ण्डलप्रदेशावस्थितो ग्रह एवोच्चपदेनोच्यते । प्रतिमण्डले विलोमं भ्रम-तो मेषादेर्या गतिः सैवोच्चगतिरित्युच्यते । कक्षास्थप्रदेशविशेषत्वेन सिद्धस्योच्चस्य को नामभिन्नकक्षास्थितत्वं वदेत् । तथैव प्रतिमण्डलेन-गच्छतो ग्रहस्य यत्र प्रदेशे शराभावः स एव प्रदेशः पात इति । तस्मा-दस्ति मिथो ग्रहाणां वैषम्यं ग्रहतुङ्गपातेभ्य इति सिद्धम् । एवं विसदृ-शगतीनां तुङ्गपातग्राहणामेककक्षास्थितत्वमुक्तम् । अधुना तुल्यगतीना-

मपि रविबुधशुक्राणां कक्षाभेदमाह अर्कस्य कक्षैवेति कक्षासाधनप्रकारेण साधिते कक्षे ज्ञशुक्रयोश्चलोच्चकक्षे एव भवतः । ज्ञशुक्रमध्यकक्षाभ्यां खकक्षातो भागे गृहीते ज्ञशुक्रचलोच्चभगणा भवन्ति । ज्ञशुक्रयोर्मध्यगतौ साध्यमानायां रविमध्यगतितुल्यैव तयोर्गतिरुत्पद्यते । अत उक्तं चलतुङ्गकक्षायामेव ज्ञशुक्रयोरर्कमध्यगत्या भ्रमणमिति । किन्तु ज्ञशुक्रयोर्योजनात्मिका गतिः पादोनगोऽक्षधृतिभूमितयोजनेभ्यो भिन्ना । कक्षाभिन्नत्वे योजनात्मककलात्मकगत्योरभेदासम्भवात् । लघुवृत्ते लघ्व्यः कला महति वृत्ते महत्य इति कलात्मकगतेरैक्यत्वस्वीकारे योजनगतिरवश्यं भिद्यत इति भावः । तयोर्गतेरानयनं त्रैराशिकेन । मध्यचलोच्चकक्षायोजनानि चक्रकलाभिस्तदा रविमध्यगतितुल्यकलाभिः किमिति ज्ञशुक्रयोर्योजनात्मिके गती भवतः । अतः सर्वं निरवद्यम् ।

इति कृष्णदैवज्ञात्मजनृसिंहकृतौ कक्षाध्यायः ।

---

**मरीचिः**—अथ यन्मार्गेणैते ग्रहा गच्छन्ति तन्मार्गानुमिताकाशस्थं वृत्तानां योजनात्मकमध्यममानं तदाश्रयत्वेनोपजीव्यत्वाद्विवक्षुः प्रकारान्तरेण ग्रहानयनार्थं च खकक्षां प्रथमं शार्दूलविक्रीडितेनाह कोटिघ्नैरिति । १८७१२०६९२०००००००० योजनैः ।

"यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् ॥" इति

"स्याद्योजनं क्रोशचतुष्टयेन" इति प्रागुक्तप्रदेशैरिमां प्रसिद्धां नभसः कक्षां खपरिधिं ज्योतिःशास्त्रविदो गणका वदन्ति एतत्तुल्यां खकक्षामूचुः । एवं च

"खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः"*

इति सूर्यसिद्धान्तोक्तखकक्षामानेन १८७१२०८०८६४०००००० विसंवादेऽपि भगणोपजीवकत्वान्न क्षतिः ।

* नेदं प्रचरितसूर्यसिद्धान्ते उपलभ्यते ।

भावो निपातनात् । न चरतीति नचचम् । चीयतेः चरतेर्वा चच-मिति निपात्यते । न क्रामतीति नक्रः । क्रमेर्डः । नाकमस्मिन्निति नाकः ॥

## एकादिश्चैकस्य चादुक् । ६ । ३ । ७६ ॥

एकादिर्नञ् प्रकृत्या स्यादेकस्यादुगागमश्च ॥ नञो विंशत्या समासे कृते एकशब्देन सह तृतीयेति योगविभागात् समासः । अनुनासिकविकल्पः । एकेन न विंशतिः एकान्नविंशतिः । एकाद्नविं-शतिः । एकोनविंशतिरित्यर्थः ॥

## नगो ऽप्राणिष्वन्यतरस्याम् । ६ । ३ । ७७ ॥

नग इत्यत्र नञ् प्रकृत्या वा । नगा अगाः पर्वताः । अप्रा-णिषु किम् । अगो वृषलः शीतेन ।

## सहस्य सः संज्ञायाम् । ६ । ३ । ७८ ।

उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा । निपाता आद्युदात्ता इति सहशब्द आद्युदात्तस्तस्य स्थाने जायमानः सादेश उदात्तः स्याद्वाऽनुदात्त इति विचारे स्वरितः स्यादित्युपदेशे एव उदा-त्तो निपात्यते तेन सपुत्र इत्यादौ बहुव्रीहिप्रयुक्तपूर्वपदप्रकृतिस्वरेणो-दात्तः । सेष्टिसपशुबन्धमित्याद्यव्ययीभावे तु समासान्तोदात्तत्वमेव ।

## ग्रन्थान्ताधिके च । ६ । ३ । ७९ ॥

अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिष-मधीते । कालोत्तरपदत्वादव्ययीभावे चाकाले इत्यनेन न सिद्धिः । सद्रोणा खारी ॥

## द्वितीये चानुपाख्ये । ६ । ३ । ८० ॥

उपाख्यं प्रत्यक्षं तद्भिन्ने ऽनुमेये द्वितीये सहस्य सः स्यात् ॥ सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ॥

## अव्ययीभावे चाकाले । ६ । ३ । ८१ ॥

सहस्य सः स्यादव्ययीभावे न तु काले । चक्रेण युगपत् सचक्रम् । काले तु सहपूर्वाह्णम् ।

## वोपसर्जनस्य । ६ । ३ । ८२ ॥

अत्रोपसर्जनस्येति मत्वर्थीयाच्प्रत्ययान्तमुत्तरपदेन सन्निधापितस्य समासस्यावयवद्वारकं विशेषणम् । सहशब्दस्य तावदसत्ववाचित्वाद्द्वन्द्वाभावोऽनभिधानाच्च । अन्यस्मिंस्तु समासे सर्वत्र क्वचिदवयव उपसर्जनमेवेत्युपसर्जनग्रहणसामर्थ्यात् सर्वोपसर्जनावयवः समास उपसर्जनशब्देनोच्यते । व्यधिकरणा च षष्ठी उपसर्जनस्य सर्वोपसर्जनावयवस्यार्थाद्बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा उत्तरपदे । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । अत्रोपसर्जनसर्वावयवकत्वमुपसर्जनपदेन शास्त्रीयलौकिकोभयोरपि ग्रहणाद्बोध्यम् । उक्तव्याख्यानान्नेह । सहकृत्वा । राजनि युधि कृञः । सहे चेति क्वनिप् । उपपदसमासः । सहकृत्वप्रिय इत्यत्रापि यदुत्तरपदं प्रियशब्दस्तत्परः सहशब्दो न भवतीति सादेशो न भवति ॥

## प्रकृत्या ऽशिषि । ६ । ३ । ८३ ॥

सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय ॥ अगोवत्सहलेष्विति वाच्यम् ॥ * ॥ सगवे । सवत्साय । सहलाय ॥

**समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु । ६ । ३ । ८० ॥**

समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु ॥ अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यन् । अमूर्द्धादिषु किम् । समानमूर्द्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः सधर्मा । सजातीय इत्यादि सिद्धमिति काशिका । अथवा सहशब्दो वृत्तिविषये सदृशवचनोऽस्ति । सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्येत्यादि ॥

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८१ ॥**

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् ॥ सज्योतिः सजनपद इत्यादि ।

**चरणे ब्रह्मचारिणि । ६ । ३ । ८२ ॥**

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । समानः स सब्रह्मचारी ॥

**तीर्थे ये । ६ । ३ । ८३ ॥**

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् ॥ सतीर्थ्यः । एकगुरुकः । समानतीर्थे वासीति यत्प्रत्ययः । पूर्वमेव सादेशेऽप्येकदेशविकृतन्यायेन समानतीर्थशब्दत्वम् । एवञ्च सतिशिष्टत्वाद्यत्स्वर एवोदाहरणे । एतदर्थमेव विवक्षिते इति व्याख्यातम् ।

**विभाषोदरे । ६ । ३ । ८४ ॥**

यादौ प्रत्यये विवक्षिते इत्येव ॥ सोदर्यः । समानोदर्यः । समानोदरे शयित ओ चोदात्त इति यत् । सादेशपक्षे तु सोदराद्यः ।

**दृग्दृशवतुषु । ६ । ३ । ८५ ॥**

सदृक् । सदृशः ॥ दृक्षे चेति वक्तव्यम् ॥ * ॥ सदृक्षः । त्यदादिषु दृशोऽनालोचने कञ् च । समानान्ययोश्च क्सो वक्तव्य इति कञ्क्विन्क्साः । वतुरुत्तरार्थः ॥

**इदङ्किमोरीश्की । ६ । ३ । ८६ ॥**

दृग्दृशवतुषु दृक्षे च इदम ईश् किमः की स्यात् ॥ ईदृक् । ईदृशः । ईयान् । ईदृक्षः । कीदृक् । कीदृशः । कियान् । कीदृक्षः ॥

**आ सर्वनाम्नः । ६ । ३ । ८७ ॥**

सर्वनाम्न आकारान्तादेशः स्यात् दृग्दृशवतुषु दृक्षे च ॥ तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः । मत्वोत्वे । अमूदृक् । अमूदृशः । अमूदृक्षः ॥

**विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । ६ । ३ । ८८**

अनयोः सर्वनाम्नश्च टेरद्र्यादेशो वप्रत्ययान्तेऽञ्चतौ परे । विश्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् । विश्वग्देवयोः किम् । अश्वाची । अञ्चतौ किम् । विश्वग्युक् । वप्रत्यये किम् । विष्वगञ्चनम् । वप्रत्ययग्रहणं ज्ञापयति अन्यत्र धातुग्रहणे तदादिविधिरिति । तेनायस्कारः ॥ छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ॥ * ॥ देवद्रीची नयत देवयन्तः । कद्रीची । न च भवति । विश्वाची घृताची ॥

**समः समि । ६ । ३ । ८९ ॥**

वप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात् ॥ सम्यङ् । सम्यञ्चौ । सम्यञ्चः ॥

## तिरसस्तिर्यलोपे । ६ । ३ । ९० ॥

अलोप इत्यत्र शकन्ध्वादित्वात् पररूपेणाकारः प्रश्लिष्यते ॥ अस्य अलोपो लोपाभावो यस्मिन्नञ्चतौ तस्मिन् वप्रत्ययान्ते परे तरसस्तिर्यादेशः स्यात् ॥ तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । अलोपे किम् । तिरश्चः । तिरश्चा ।

## सहस्य सध्रिः । ६ । ३ । ९१ ॥

वप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् । सध्र्यञ्चौ । सध्रीचः । सध्रीचा । अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् ॥ * ॥ कृत्स्वरनिवृत्त्यर्थम् । विष्वद्र्यङ् । उदात्तस्वरितेति स्वरितोऽञ्चत्यकारो भवति ॥

## सधमादस्थयोश्छन्दसि । ६ । ३ । ९२

सहस्य सधादेशः स्यात् । इन्द्र त्वास्मिन्सधमादे । सोमः सधस्थम् ॥

## द्व्यन्तरुपसर्गेभ्योऽप ईत् । ६ । ३ । ९३ ॥

अप इति कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्योऽपस्य ईत्स्यात् । द्विर्गता आपो यस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम् । कृतसमासान्तग्रहणान्नेह । स्वप् । स्वपी । अवर्णान्ताद्वा ॥ प्रेपम् । परेपम् । प्रापम् । परापम् । उपसर्गग्रहणं प्रादुपलक्षणम् ।

**ऊदनोर्देशे । ६ । ३ । ९४ ।**

अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः । देशे किम् अन्वीपम् । दीर्घोच्चारणमवग्रहार्थम् ।

**अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६ । ३ । ९५ ॥**

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यः कारकोऽन्यत्कारकः । अन्यद्रागः । अन्यस्मिन्भवोऽन्यदीयः । अन्यदुत्सुकः । अषष्ठीत्यादि किम् । अन्यस्यान्येन वाशीरन्याशीः । कारके छे च नायं निषेधः । अन्यस्य कारकोन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः । द्विर्नञ्ग्रहणं स्पष्टार्थम् ॥

**अर्थे विभाषा । ६ । ३ । ९६ ॥**

अन्यदर्थः । अन्यार्थः ।

**कोः कत्तत्पुरुषेऽचि । ६ । ३ । ९७ ॥**

अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ॥ त्रौ च ॥ * ॥ कुत्सितास्त्रयः कत्त्रयः ।

**रथवदयोश्च । ६ । ३ । ९८ ॥**

कद्रथः । कद्वदः ॥

**तृणे च जातौ । ६ । ३ । ९९ ॥**

कत्तृणं नाम तृणजातिः । जातौ किम् । कुतृणानि ॥

## का पथ्यक्षयोः । ६ । ३ । १००

कापथः । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ।

## ईषदर्थे । ६ । ३ । १०१ ॥

ईषज्जलं काजलम् । अजादावपि परत्वात् कादेशः । काम्लः ।

## विभाषा पुरुषे । ६ । ३ । १०२ ॥

कापुरुषः कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव ।

## कवञ्चोष्णे । ६ । ३ । १०३ ॥

उत्तरपदे कोः कवं का च वा स्यात् ॥ कवोष्णम् । कोष्णम् । कदुष्णम् ॥

## पथि च छन्दसि । ६ । ३ । १०४ ॥

पथिशब्दे उत्तरपदे कोः कवं का च वा स्यात् ॥ कवोष्णम् । कोष्णम् । कदुष्णम् । पथि । कवपथः । कापथः । कुपथः ॥

## पृषोदरादीनि यथोपदिष्टम् । ६ । ३ । १०५ ॥

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि । पृषत् उदरं पृषोदरम् । तलोपः । वारिवाहकः बलाहकः । पूर्वपदस्य बः उत्तरपदादेश्च लत्वम् ।

भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।

गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ।

जीवनस्य मूतो जीमूतः । वलोपः । शवानां शमनं श्मशानम् । शवस्य श्मः शमनस्य शानः । ऊर्ध्वंमुखमस्येत्युलूखलः । ऊर्ध्वमुखयोरुलूखलौ । पिशिताशः पिशाचः । पिशितस्य आशः । आशस्य अचः । ब्रुवन्तोऽस्यां सीदन्ति बृसी । ब्रुवच्छब्दस्य बृ आदेशः । सदेरधिकरणे डट् मह्यां रौति मयूरः । रौतेरचि टिलोपो मह्या मयूः ॥ एवमश्वत्थमहित्थकपित्थप्रभृतयोऽवगन्तव्याः ॥ दिक्शब्देभ्यस्तीरस्य तारभावो वा ॥ * ॥ दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् । वा । वादे डत्वं वलभावश्चोत्तरपदस्येञि ॥ * ॥ वाचं वदति वाग्वादः तस्यापत्यं वाडूलिः । षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च धासु वेति वाच्यम् ॥ * ॥ षोडन् । षोडश । षोढा । षड्धा कुरु । धास्विति बहुवचनं नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थम् । इह मा भूत् । षड् दधातीति षड्धा । आतोऽनुपसर्गे कः स्त्रियां टाप् ॥ दुरो दूभावो दाशनाशदभध्येषूत्तरपदादेः ष्टुत्वञ्च ॥ * ॥ दुःखेन दाश्यते नाश्यते दभ्यते दूडाशः । दूणाशः । दूडभः । खल्वत्रोदम्भेर्नलोपो निपात्यते । दुष्टं ध्यायतीति दूढ्यः । आतश्चोपसर्गे कः ॥ स्वरो रोहतौ छन्दस्युत्वम् ॥ * ॥ एहि त्वं जाये स्वो रोहाव । लोडुत्तमद्विवचनम् ॥ पीवोपवसनादीनां छन्दसि लोपः ॥ * ॥ पीवोपवसनानाम् । पयोपवसनानाम् । श्रियेदम् । पीवस्पयस् इत्यनयोः सलोपः । श्रिये इदमिति स्थिते इकारलोपः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।

आकृतिगणोऽयम् ॥

**संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ । ६ । ३ १०९ ॥**

संख्यादिपूर्वस्यान्हस्याहनादेशो वा स्यान्डौ । द्वयोरन्होर्भवो द्व्यन्हः । द्व्यन्हि । द्व्यहनि । द्व्यन्हे । विगतमहर्व्यन्हः । व्यन्हि । व्यहनि । व्यन्हे । अन्हः साय: सायान्हः । अतएव ज्ञापकात् समास इति द्वितीये प्रतिपादितम् । सायान्हि । सायाहनि । सायान्हे । संख्येत्यादि किम् । पूर्वान्हे ।

## ढ्लोपे पूर्वस्य दीर्घोऽणः । ६ । ३ । १०७ ॥

ढ्लोप इति न तत्पुरुषोऽनीयरि चचारेत्यादौ च दोषात् । नापि बहुव्रीहिर्व्यधिकरणत्वात् । किन्तु णिजन्तात् कर्मण्युपपदसमासः । ढरेफौ लोपयतीति तथा तस्मिन् वर्णे अर्थाड्ढकारे रेफात्मके परे पूर्वस्याणो दीर्घः स्यात् ॥ लीढम् । मीढम् । पुना रमते । हरीरम्यः । शम्भू राजते । अणः किम् । तृढः । वृढः । तृहू हिंसायाम् । वृहू उद्यमने । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । लीढः ॥

## सहिवहोरोदवर्णस्य । ६ । ३ । १०८ ॥

अनयोरवर्णस्यौत् स्यात् ढलोपे । सोढा । वोढा । अवर्णस्य किम् । ऊढः । वर्णग्रहणं किम् । परत्वाद्वृद्धौ कृतायामपि यथा स्यात् । उदवोढाम् । अन्यथा तात्परत्वान्न स्यात् ॥

## साढ्यै साढ्वा साढेति निगमे । ६ । ३ । १०९ ॥

सहेः क्त्वाप्रत्ययेऽस्य आद्यं द्वयं तृतीयं तृन ओत्वाभावः पक्षे त्वाप्रत्ययस्य ध्यैभावश्च निपात्यते ॥ मरुद्भिरुग्रः पृतनासु साह्ला । अचोर्मध्यस्थस्य डस्य लः ढस्य ल्हश्च प्रातिशाख्ये विहितः । आह हि द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो लकारः

ल्हकारतामेति । स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्त इति अम्याचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य स डकारः प्रातिशाख्ये पूर्वोक्तरूपो लकारः सम्पद्यते इति अम्याचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य स एव प्रातिशाख्ये पूर्वोक्तरूप एव ढकारः ऊष्मणा सम्प्रयुक्तः सन् ल्हकारतामेतीति चान्वयः ॥

**संहितायाम् । ६ । ३ । ११० ॥**

अधिकारोऽयम् । वक्ष्यति । द्व्यचोऽतस्तिङः । विद्मा हि त्वा सत्पतिं शूरगोनाम् । संहितायां किम् । पदपाठे मा भूत् ।

**कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य । ६ । ३ । १११ ॥**

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । दात्राकर्णः । यत्पशूनां स्वामिविशेषसम्बन्धे ज्ञानार्थं दात्राकारादि क्रियते तदिह लक्षणम् । तेन लम्बकर्णो न । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ । ११२ ॥**

क्विबन्तेष्वेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । सहेः पृतनाभ्याञ्चेत्यच सहेरिति योगविभागादनुक्तसमुच्चयार्थाच्चकाराद्वा षत्वमिति न्यासकारः। पूर्वपदादिति षत्वमिति हरदत्तः । परीतत् । क्वाविति किम् । परिणहनम् । विभाषा पुरुष इत्यतो मण्डूकप्लुत्या विभाषाऽनुवर्तते । सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह । पटुरुक् । तिग्मरुक् ॥

## वनगिर्योः संज्ञायां कोटरकिंशुलका-
## दीनाम् । ६ । ३ । ११३ ॥

कोटरादीनां वने परे किंशुलकादीनां गिरौ परे दीर्घः स्यात् सञ्ज्ञायाम् । कोटरावणम् । सारिकावणम् । सिध्रकावणम् । मिश्रकावणम् । पुरगावणम् । वनं पुरगेति णत्वविधौ कोटरान्ताः पञ्चाच कोटरादयो बोध्याः । किंशुलकागिरिः । अञ्जनागिरिः । किंशुलक अञ्जन भञ्जन लोहित कुक्कुट किंशुलकादिः । कोटेति किम् । असिपत्रवनम् । कृष्णागिरिः ।

## वले । ६ । ३ । ११४ ॥

वलप्रत्यये परे दीर्घः स्यात् संज्ञायाम् । कृषीवलः । दन्तावलः । सञ्ज्ञायां किम् । भ्रातृवलः । पुत्रवलः । शत्रुवलः । रजः कृषीत्यत्रान्येभ्योऽपि दृश्यत इति वलच् ॥

## मतौ बह्वचोऽनजिरादीनाम् । ६ । ३ । ११५ ॥

अमरावती । वारणावती । अनजिरादीनां किम् अजिरवती । राजहंसवती । बह्वचः किम् । व्रीहिमती । संज्ञायामित्येव । नेह । वलयवती ।

## शरादीनां च । ६ । ३ । ११६ ॥

संज्ञायामित्येव । शरावती । पद्मावती । शर पद्म धूम वंश अहि कपि मणि मुनि शुचि शरादयः ।

## इको वहे ऽपीलोः । ६ । ३ । ११७ ॥

इगन्तस्य दीर्घः स्यात् वहे ॥ ऋषीवहम् । कपीवहम् । इकः

किम् । पिण्डवहम् । अपीलोः किम् । पीलुवहम् ॥ अपील्वादीनामिति वक्तव्यम् ॥ * ॥ दारुवहम् ।

**उपसर्गस्य घञ्यमनुष्ये बहुलम् । ६ । ३ । ११८ ॥**

उपसर्गस्य बहुलं दीर्घः स्यात् घञन्ते परे न तु मनुष्ये ॥ परिपाकः । परीपाकः । अपामार्गः । न च भवति । प्रसवः । प्रसरः । प्रवादः । सादकारयोः कृत्रिमे । प्रासादः । प्राकारः । नेह प्रसादः । प्रकारः ॥ प्रतिवेशादीनां वा ॥ * ॥ प्रतिवेशः । प्रतीवेशः । प्रतिकारः । प्रतीकारः । अमनुष्ये किम् । निषादः ॥

**इकः काशे । ६ । ३ । ११९ ॥**

इगन्तस्योपसर्गस्य दीर्घः । वीकाशः । नीकाशः । इकः किम् । प्रकाशः । पचाद्यजन्तः काशशब्दोऽयम् । यद्वाऽत्र घञीत्यनुवृत्त्या इगन्तस्यैव काशे इति नियमार्थमिदम् ॥

**दस्ति । ६ । ३ । १२० ॥**

इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे । खरि चेति चर्त्वमाश्रयात् सिद्धम् । नीतम् । वीतम् । दः किम् । वितीर्णम् । ति किम् । सुदत्तम् । इकः किम् । प्रत्तम् ॥

**अष्टनः संज्ञायाम् । ६ । ३ । १२१ ॥**

अष्टापदम् । अष्टावक्रः । संज्ञायां किम् । अष्टपुत्रः ॥

**छन्दसि च । ६ । ३ । १२२ ॥**

अष्टनो दीर्घः स्यादुत्तरपदे । अष्टापदी ।

**चितेः कपि । ६ । ३ । १२३ ॥**

एकचितीकः । द्विचितीकः ।

**विश्वस्य वसुराटोः । ६ । ३ । १२४ ॥**

विश्वशब्दस्य दीर्घः स्याद्वसौ राट्शब्दे च परे ॥ विश्वं वसु यस्य स विश्वावसुः । राडिति पदान्तोपलक्षणार्थम् । चर्त्व-मविवक्षितम् । विश्वाराट् । विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वाराड्भ्यामित्यादि ॥

**नरे संज्ञायाम् । ६ । ३ । १२५ ॥**

विश्वस्य दीर्घः । विश्वा नरा यस्य वैश्वानरिः पुत्रः । संज्ञायां किम् । विश्वे नरा अस्य विश्वनरो राजा ।

**मित्रे चर्षौ । ६ । ३ । १२६ ॥**

विश्वामित्रो नाम ऋषिः । ऋषौ किम् । विश्वमित्रो माणवकः ॥

**मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । ६ । ३ । १२७॥**

दीर्घः स्यात् ॥ सोमावतीम् । अश्वावतीम् । इन्द्रियावान् मदिन्तमः । विश्वकर्मणा विश्वदेव्यावता ॥

**ओषधेश्च विभक्तावप्रथमायाम् । ६ । ३ । १२८ ॥**

दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः। अदधात्योषधीषु । विभक्तौ किम् । ओषधिपते । अप्रथमायां किम् । स्थिरे यमस्योषधिः ॥

**ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् । ६ । ३ । १२९ ॥**

दीर्घः स्यात् । आतून इन्द्र । नूमर्तः । उतवा घा स्यात् । मक्षू गोमन्तमीमहे । भरता जातवेदसम् । तङिति थादेशस्य ङित्वपक्षे ग्रहणम् । तेनेह न । शृणोत ग्रावाणः । तप्तनप्तनथना-श्चेति तबादेशः । कूमनाः । अत्राते भद्रा । यत्रा नश्चक्रा । उरुष्या णः ।

उरुष्येति कण्ड्वादियगन्तो रक्षणार्थकः । लोटः सेर्हिस्तस्य लुक् । न इत्यस्य नश्च धातुस्थोरुषुभ्य इति णत्वम् ।

**इकः सुञि । ६ । ३ । १३० ॥**

सुञिति निपातो गृह्यते । इगन्तस्य सुञि दीर्घः स्यादृचि ॥ अभीषुणः सखीनाम् । सुञ इति षः ।

**द्व्यचोऽतस्तिङः । ६ । ३ । १३१ ॥**

द्व्यचस्तिङन्तस्याकारान्तस्य दीर्घो मन्त्रे । विद्मा हि चक्रा जरसम् । द्व्यचः किम् । अश्वा भवथ वाजिनः । अतः किम् । आदेवान् वक्षि यक्षि च ।

**निपातस्य च । ६ । ३ । १३२ ॥**

दीर्घो मन्त्रे । एवा हि ते ।

**अन्येषामपि दृश्यते । ६ । ३ । १३३ ॥**

दीर्घः । स शिष्टप्रयोगादनुगन्तव्यः । केशाकेशि । दण्डादण्डि । मुष्टीमुष्टि । बाहूबाहवि । तुराषाट् ॥ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ॥ * ॥ श्वादन्त इत्यादि । यत्र न विहितं दीर्घत्वं दृश्यते च प्रयोगे तदनेन कर्तव्यम् । पुरुषः । पूरुषः । नरकः । नारक इति ॥

**चौ । ६ । ३ । १३४ ॥**

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । अच इत्यल्लोपस्य विषये अन्तरङ्गावप्येकादेशयणादेशौ न प्रवर्तेते । अकृतव्यूहा इति परिभाषया । प्राचः । प्राचा । प्रतीचः । प्रतीचा ।

**सम्प्रसारणस्य । ६ । ३ । १३५ ॥**

दीर्घः स्यादुत्तरपदे । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । कुमुदगन्धेरपत्यं स्त्रीत्यर्थेऽणोऽणिञोरिति ष्यङि यङश्चाप् । पूर्वान्तवत्त्वेन ष्यङन्तत्वात् सम्प्रसारणे पूर्वत्वे चाल्विधावपि दीर्घविधिसामर्थ्यात् स्थानिवत्त्वेन संप्रसारणत्वाद्दीर्घः । व्यवस्थितविभाषया इको ह्रस्व इति ह्रस्वो न । हल इत्यनेन तु नात्र दीर्घः संप्रसारणपूर्वस्य हलः संप्रसारणनिमित्तनिरूपिताङ्गावयवत्वाभावात् । प्रत्यासत्त्या तादृशाङ्गावयवस्यैव तत्र ग्रहणात् । अत एव निरुतमित्यादौ न दीर्घः ॥

इत्योरम्भट्टेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य तृतीयः पादः समाप्तः ॥



# षष्ठाध्यायस्य चतुर्थः पादः ।

## अङ्गस्य । ६ । ४ । १ ॥

आ सप्तमाध्यायपरिसमाप्तेरयमधिकारो यदित ऊर्ध्वं वक्ष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम् । वक्ष्यति । हलः । हूनः । जीनः । अङ्गस्य किम् । निरुतम् । दुरुतम् । नामि । अग्नीनाम् । अङ्गस्य किम् । पामनां पश्य । लुङ्लङ्लृङ्क्ष्वडुदात्तः । अकार्षीत् । अङ्गस्य किम् । प्राकरोत् । अङ्गस्येति सम्बन्धसामान्ये षष्ठी यथायोगं विशेष्येऽवतिष्ठते । अथवा प्रातिपदिकार्थमात्रमविवक्षितविभक्त्यर्थमधिक्रियते । तदुत्तरत्र यथायोगं विपरिणम्यतेऽतोऽकारान्तादङ्गाद्भिस ऐसित्यादि सङ्गच्छते ॥

## हलः । ६ । ४ । २ ॥

अङ्गावयवाद्धलः परं यत् संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । हूनः । जीनः । अङ्गावयवात् किम् । निरुतम् । तदन्ताङ्गस्य किम् । विद्धः । तृतीये द्वितीयतृतीयेति निपातनाददीर्घः । अङ्गस्येति द्विरावर्तनीयम् । तत्रैकं हलो विशेषणमपरं संप्रसारणस्य विशेष्यम् ॥

## नामि । ६ । ४ । ३ ॥

नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् । अग्नीनाम् । रामाणाम् । सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते । सन्निपातपरिभाषाविरोधात् । नामीत्यनेन त्वारम्भसामर्थ्यात् परिभाषा बाध्यते ॥

दूरादनुवर्तते तेन गम्यमाने सुजर्थे न भवति। शेष इत्येव। द्विरह्रयधीते॥

## कर्तृकर्मणोः कृति॥ ६८॥

कृति प्रयुक्ते कर्तरि कर्मणि च ता विभक्ती भवति। अनुक्त इति वर्तते। भवत आसिका। भवतः शायिका। स्त्रीलिङ्गे भावे पर्यायार्हर्णोत्पत्तौ वुणिति वुण्। यवानां लावकः। ओदनस्य भोजकः। विश्वस्य ज्ञाता। तीर्थस्यकर्ता। कृतीति किम्। ओदनं पचति। ननु नभ्कितेत्यादिनाऽत्र प्रतिषेधो भविष्यति एवं तर्हि हृति मा भूत्। कृतपूर्वी कटम्। कृतं पूर्वमनेन इन् पूर्वात् सपूर्वादितीन्। पुनः कर्मग्रहणादिह शेषस्य ग्रहणं नाभिसम्बध्यते॥

## द्विप्राप्तौ परे॥ ६९॥

पूर्वसूत्रविन्यासापेक्षया परशब्देन कर्माभिप्रेतम्। द्विप्राप्तौ कृति पर एव कर्मणि ता विभक्ती भवति न कर्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं जिनदत्तेन। द्वयोः प्राप्तिर्यस्मिन् कृतीति व्यधिकरणस्य वसस्याश्रयणाद् भिन्ने कृति नियमो न भवति। आश्चर्यमिदमतिथीनां प्रादुर्भावः ओदनस्य च नाम पाकः। अकाकारयोः प्रयोगे नेति वक्तव्यम्। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा जिनदत्तस्य काव्यानाम्। अकारग्रहणेन निरनुबन्धकस्य अस्त्यादित्यस्यैव ग्रहणम्। शेषे विभाषा। अकाकारापेक्षया शेषस्य स्त्रीत्यस्य ग्रहणम्। विचित्रा सूत्रस्य कृतिराचार्यस्य

आचार्येण वा । केचिदविशेषेणेच्छन्ति । विचित्रं शब्दानुशासनमाचार्यस्य आचार्येण वा ॥

## क्तस्याधिकरणे ॥ ७० ॥

अधिकरणे यः क्तस्तस्य प्रयोगे ता विभक्ती भवति । अधिकरणे नाद्यर्थाच्चेति अद्यर्थेभ्यो धिभ्यो गत्यर्थेभ्यश्च क्तो वक्ष्यति तस्य प्रयोगे कर्तृकर्मणोः कृतीति ता प्राप्ता नञ्क्तेत्यादिना प्रतिषिद्धा पुनः प्रसूयते । इदमेषामाशितम् । इदमेषां भुक्तम् । इदमेषामासितम् । इदमेषां शयितम् । इदमेषां सृतम् । इदमेषां पराक्रान्तम् । एषामिति कर्त्तरि ता । अधिकरणस्य क्तेनोक्तत्वादिदंशब्दादीप्न भवति । अधिकरणे चेत्यत्र चकारेण यथा प्राप्तः समुच्चीयते । कर्त्तरि इहेमे आसिताः । भावे इह एभिरासितम् । शेषविवक्षायमिह एषामासितम् । एवं सर्वत्र योज्यम् ॥

## भवति ॥ ७१ ॥

भवति काले विहितस्य क्तस्य प्रयोगे ता विभक्ती भवति । अयमपि प्रतिषेधापवादः । राज्ञां मतः । राज्ञां बुद्धः । सतां पूजितः । मतिबुद्धिपूजार्थाच्चेति सम्प्रतिकाले क्तः । शेषविवक्षायां यद्यपि ता सिद्धा तथापि कर्तृविवक्षायां भावाधनार्थमिदम् । सम्प्रतिकाले चकारेण लब्धेषु शीलितादिषु प्रयुक्तेषु ता नेष्यते । देवदत्तेन शीलितः । कथं मयूरस्य नृत्तं छात्रस्य हसितमिति शेषविवक्षयेदम् । कर्तरि तु मयूरेण नृत्तम् । छात्रेण हसितम् ॥

## न ञ्कितलोकखार्थतृनाम् ॥ ७२ ॥

ञ्कि त ल उ उक खार्थं तृन इत्येतेषां प्रयोगे ता विभक्ती

न भवति। कर्तृकर्मणोः कृतीति तायाः प्राप्तायाः प्रतिषेधोऽयम्। क्त्वि । कटं कृत्वा । कटं कर्तुम् । तसंज्ञा । देवदत्तेन कृतम् । देवदत्तः कटं कृतवान् । ल । कटं कुर्वन् । कटं कुर्वाणः। अनूषिवान् श्रीदत्तं धान्यसिंहः । करं कारयामास धर्मं दधि श्वित्तम्। सहिवहिवलियतीनामिर्यङ इत्यधिकृत्य धास्कसृजनितनिरूपो लिड्वदित्युपसंख्यानेन शीलादिष्वर्थेषु इषित्यर्थं त्यो भवति। कटं चिकीर्षुः। ओदनं बुभुक्षुः। कन्यामलङ्करिष्णुः । उक । आगामुको वाराणसीम् । उकप्रतिषेधे कमेरप्रतिषेधः । दास्याः कामुकः । खार्थः । सुकरः कटो भवता । सुपीतं पयो भवता । तृन्निति प्रत्याहारः शतृशानावित्यत आरभ्य तृनो नकारेण। धान्यं पवमानः। अधीयन् जैनेन्द्रम् । पूङ्यजोः शान इति शानः । धारीङः शत्रकृच्छिणीति शतृत्यः । कर्त्ता कटान् । वदिता जनापवादान् । शीलाद्यर्थे तृन्निति तृन् । द्विषः शतुर्वा वचनम् । चोरं द्विषन् । चोरस्य द्विषन् । द्विषोऽरावित शतृत्यः ॥

## वर्त्स्यत्यकस्य ॥ ७३ ॥

वर्त्स्यति काले विहितस्याकस्य योगे ता विभक्तो न भवति। कटं कारको व्रजति। ओदनं भोजको गच्छति। वुरातुमौ क्रियायामिति वुण्। वर्त्स्यतीति किम्। ओदनस्य भोजकः । वर्त्स्यतीति विहितस्याकस्य ग्रहणं भवति । वर्षशतस्य पूरकः। पुत्रपौत्राणां दर्शकः ॥

## आधमर्ण्ये चेनः ७४ ॥

आधमर्ण्ये वर्त्स्यति च काले विहितस्येनः प्रयोगे ता विभक्ती न भवति। शतं दायी । सहस्रं दायी । आवश्य-

काधमर्ण्ययोर्णिनिति णिन् । वत्स्यति । गमी ग्रामम् । आगामी नगरम् । गम्यादिर्वत्स्र्यतीति वत्स्यतिकाले साधुत्वम् । आधमर्ण्ये चेन इति किम् । अवश्यं कारी कटस्य । आवश्यके ऽर्थे कालसामान्ये णिन् ॥

## व्यस्य वा कर्त्तरि ॥ ७५ ॥

व्यसंज्ञस्य प्रयोगे कर्तरि वा ता विभक्तो भवति । भवतः कटः कर्तव्यः । कर्तृकर्मणोः कृतीति ता प्राप्ता विभाष्यते । कर्त्तरीति किम् । गेयो माणवको गाथानाम् । भव्यगेयादिसूत्रे कर्त्तरि गेयशब्दो निपातितः । अत्र कर्मणि नित्यं ता भवति । इह कस्मात्ता न भवति कृष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेन । वेति व्यवस्थितविभाषा । तेन द्विप्राप्तौ पर इत्यस्यास्ताया व्यप्रयोगे प्रतिषेध एव ॥

## भा ऽतुलोपमाभ्यां तुल्यार्थैः ॥ ७६ ॥

वेति वर्तते । अतुलोपमाशब्दाभ्यां अन्यैस्तुल्यार्थैः शब्दैर्युक्ते वा भाविभक्ती भवति । तुल्यो देवदत्तेन । तुल्यो देवदत्तस्य । पक्षे शेषलक्षणा ता । अतुलोपमाभ्यामिति किम् । नास्ति तुला देवदत्तस्य । उपमा नास्ति सनत्कुमारस्य ॥

## अप् चाशिष्यायुष्यमद्रभद्रकुशलसुखहितार्थैः ॥ ७७ ॥

वेति वर्तते । वा अप्विभक्ती भवति आशिषि गम्यमानायाम् । आयुषो निमित्तं संयोगः । निमित्तं संयोगो-

त्पादौ यो संख्यापरिमाणत्वादेरिति यः। आयुष्य मद्र भद्र कुशल सुख हित इत्येवमर्थैर्युक्ते। आयुष्यमिदमस्तु देवदत्ताय देवदत्तस्य वा। चिरमस्तु जीवितं देवदत्ताय देवदत्तस्य वा। मद्रं भवतु जिनशासनाय जिनशासनस्य वा। भद्रं देवदत्ताय देवदत्तस्य वा। कुशलं साधुभ्यः कुशलं साधूनाम्। निरामयं साधुभ्यः। निरामयं साधूनाम्। सुखं साधुभ्यः। सुखं साधूनाम्। शमस्तु साधुभ्यः। शमस्तु साधूनाम्। हितं देवदत्ताय। हितं देवदत्तस्य। पथ्यं देवदत्तस्य। तापक्षे शेषलक्षणा ता। चकारः किमर्थः। अर्थार्थैरपि योगे यथा स्यात्। अर्थो देवदत्ताय। अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय। प्रयोजनं देवदत्तस्य। तापक्षे वृत्तिर्न भवति अगमकत्वात्। न हि वृत्त्याऽऽशीर्गम्यते। आशिषीति किम्। आयुष्यं देवदत्तस्य। अत्र नाप्॥

प्राणितूर्यसेनाङ्गानां द्वन्द्व एकवत्॥ ९८॥

प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकवद्भवति। एकार्थवद्भवतीति अर्थनिर्देशाद्विशेषणानामपि तद्वत्ता। पाणी च पादौ च पाणिपादम्। दन्तोष्ठम्। शिरोग्रीवम्। यदि प्राण्यङ्गं प्राणिग्रहणेन गृह्यते अप्राणिजातेरिति प्रतिषेधे प्राप्ते अथ न गृह्यते तदा अप्राणिजातेरित्येव सिद्धे व्यतिकरनिवृत्त्यर्थं वचनं प्राण्यङ्गानामन्येन द्वन्द्वो मा भूत्। तूर्यम्। मार्दङ्गिकाश्च पाणविकाश्च मार्दङ्गिकपाणविकम्। सेना। रथिकाश्च अश्वारोहाश्च रथिकाश्वारोहम्। रथिकपादातम्। सेनाङ्गेषु बहुत्वे इति तेन रथिकाश्वारोहौ। हस्त्यश्वादिषु परत्वात् पशु विभाषा। यद्यप्यभिधानवशादिह समाहारे द्वन्द्वः दधिपय-

आदिषु इतरेतरयोगे तरुमृगादिषु उभयत्र तथापि तद्विषयविभागज्ञापनार्थमिदं प्रकरणम् ॥

चरणानामनूक्तौ ॥ ७९ ॥

चरणं कठादिप्रोक्तोऽध्ययनविशेषः । तद्यदा पुरुषेष्वध्येतृषु वर्तते तदेह गृह्यते अनूक्तिरनुवादः । चरणानां द्वन्द्व एकवद्भवति अनूक्तौ । स्थेणोर्लुङन्तयोः प्रयोगे चेदमिष्यते। उदगात् कठकालापम् । प्रत्यष्ठात् कठकौथुमम् । अनूक्ताविति किम् । उदगुः कठकालापाः । प्रथमोपदेशोऽयम् । कठेन प्रोक्तमधीयते कठाः । प्रोक्तार्थे सौनकादिभ्यश्छन्दसि णिनिति णिन् । तस्य कठचरणादुबित्युप् अध्येतृविषयस्याणः उप् प्रोक्तादित्युप् । कलापिना प्रोक्तमधीयते कालापाः । प्रोक्तार्थे कलापिनोऽण् । टिखम् । परस्याण उप्प्रोक्तादित्युप् । छन्दो ब्राह्मणानि चात्रैवेति अध्येतृविषयता ॥

अध्वर्युक्रतुरनप् ॥ ८० ॥

अध्वरमिच्छन्ति अध्वर्यवो यजुर्वेदविदः । अत एव निपातनात् क्यच्यकारस्य खम् । क्यजन्तस्य उश्च त्यः । अध्वर्युक्रतुरनपुंसकलिङ्गो द्वन्द्वमेकवद्भवति । येषां क्रतूनां यजुर्वेदशाखासु लक्षणं प्रयोगश्च शिष्यते प्राधान्येन तेषामध्वर्युक्रतूनामनपुंसकलिङ्गानां द्वन्द्व एकवद्भवति इत्यर्थः । अर्कश्च अश्वमेधश्च अर्काश्वमेधम् । सायाह्नातिरात्रम् । पौण्डरीकातिरात्रम् । अध्वर्युक्रतुरिति किम् । पञ्चौदनदशौदनाः । इषुवज्रौ । उद्भिद्बलभिदौ । एते सामवेदविहिताः । अनपिति किम् । राजसूयं च वाजपेयं च राज-

सूयवाजपेये । इह कस्मान्न भवति दर्शपौर्णमासौ । दधिपय-आदिषु द्रष्टव्यः ॥

अधीत्या ऽदूराख्यानाम् ॥ ८१ ॥

आख्या नामधेयम् । अधीत्या निमित्तभूतया अदूराख्यानां द्वन्द्व एकवद्भवति । पदमधीते पदकः । क्रममधीते-क्रमकः । पदकक्रमकम् । क्रमकवार्त्तिकम् । पदाध्ययनस्यासन्नं क्रमाध्ययनम् । अधीत्येति किम् । आढ्यदरिद्रौ । अदूराख्यानामिति किम् । याज्ञिकवैयाकरणौ । यज्ञमधीते याज्ञिकः ॥

अप्राणिजातेः ॥ ८२ ॥

अप्राणिजातिवाचिनां द्वन्द्व एकवद्भवति । आराशस्त्रि । धानाशष्कुलि । युगवरत्रम् । अप्राणिग्रहणं किम् । गौपालिशालङ्कायनाः । गोत्रं चरणैः सहेति जातिः । जातेरिति किम् । हिमवद्विन्ध्यौ । नन्दकपाञ्चजन्यौ । संज्ञाशब्दा एते । नञ्सदृशसम्प्रत्ययहेतुः । तेन द्रव्यजातीनामेकवद्भावादिह न भवति । रूपरसगन्धस्पर्शाः । गमनागमने । जातेरविवक्षायां न भवति । बदरामलकानि तिष्ठन्ति ॥

भिन्नलिङ्गो नदीदेशोऽग्रामोऽपुरम् ॥ ८३ ॥

भिन्नलिङ्गानां नदीदेशवाचिनामग्रामाणामपुराणां द्वन्द्व एकवद्भवति । नदी । उद्ध्यश्चेरावती च उद्ध्यैरावति । विपाट्कभिदम् । गङ्गाशोणम् । देशाः । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । कुरुकुरुजाङ्गलम् । दर्वाश्च अभिसारं च दार्वाभिसारम् । काश्मीराभिसारम् । भिन्नलिङ्ग इति किम् । गङ्गायमुने । मद्रकेकयाः । नदीदेश

इति किम् । कुक्कुटमयूर्यौ । अग्राम इति किम् । जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ । ननु नद्यपि देश इति पृथग्ग्रहणं किमर्थम् । ज्ञापकार्थं जनपदो देशोऽभिप्रेतो न नदीपर्वतादिः । तेनेह नैकवद्भावः । कैलासश्च गन्धमादनं च कैलासगन्धमादने । अपुरमिति किम् । लोके ग्रामग्रहणेन पुरमपि गृह्यते ततोऽपुरमिति प्रतिषेधः । मथुरापाटलिपुत्त्रम् । अग्राम इति प्रसज्यप्रतिषेधः । तेन यत्र पुरग्रामयोर्द्वन्द्वस्तत्रापि नैकत्वम् । नासैर्यकैतवौ पुरग्रामौ ॥

क्षुद्रजीवाः ॥ ८४ ॥

इहाल्पशरीरः क्षुद्रः । क्षुद्रजीवानां द्वन्द्व एकवद्भवति । क्षुद्रजीवाश्रयो द्वन्द्व उपचारात् क्षुद्रजीवा इति निर्देशः । यूकालिक्षम् । शतस्वश्च उत्पादकाश्च शतशुत्पादकम् । दंशमशकम् । क्षुद्रजीवा अकङ्काला येषां स्वं नास्ति शोणितम् । नाङ्गलिर्यत्सहस्रेण केचिदानकुलादपि । केचित् शब्दः प्रत्येकमभिसम्बध्यते । क्षुद्रजीवा इति बहुवचननिर्देशात् द्वित्वविषये नेदमिति यूकालिक्षौ । दंशमशकौ ॥

येषाञ्च द्वेषः शाश्वतिकः ॥ ८५ ॥

द्वेषोऽप्रीतिः । येषां च द्वेषः शाश्वतिकस्तद्वाचिनां द्वन्द्व एकवद्भवति । शश्वद्भवः शाश्वतिकः । कालाट्ठञिति ठञ् निपातनादिकादेशः । ञ्भमात्रे टिखमिति खं च न भवति । अहिनकुलम् । श्वावराहम् । अन्यस्यापि दीत्वम् । शाश्वतिक इति किम् । गोपालशालङ्कायनाः केन चिन्निमित्तेन कलहायन्ते । चकारोऽवधारणार्थः । अयमेव

नित्य एकवद्भावो यथा स्यात् पश्वादिविभाषा मा भूत् । अश्वमहिषम् । काकोलूकम् ।

### वर्णेनार्हद्रूपायोग्यानाम् ॥ ८६ ॥

वर्णेनार्हद्रूपस्यायोग्यास्तेषां द्वन्द्व एकवद्भवति । येन रूपेणार्हन्त्यमवाप्यते । तदिह नैर्ग्रन्थ्यमर्हद्रूपमभिप्रेतम् । अतिशयोपेतस्यार्हद्रूपस्य प्रातिहार्यसमन्वितस्य बहुतरमयोग्यमिति नेह तद् गृह्यते । तक्षायस्कारम् । कुलालवरुडम् । रजकतन्तुवायम् । नन्वेतेष्वप्येकवद्भावः प्राप्नोति । चण्डालमृतपाः । न दधिपयआदिष्वन्तर्भूतौ द्वन्द्वौ द्रष्टव्यः । वर्णेनेति किम् । मूकबधिराः । एते करणदोषेणायोग्याः । अर्हद्रूपायोग्यानामिति किम् । ब्राह्मणक्षत्रियौ ।

### गवाश्वादीनि च ॥ ८७ ॥

गवाश्वादीनि च गणपाठे द्वन्द्वरूपाणि च एकवद्भवन्ति । गवाश्वम् । गवैडकम् । गवाविकम् । अजाविकम् । पशुविभाषा प्राप्ता । कुब्जवामनम् । कुब्जकैरातकम् । पुत्रपौत्रम् । श्वचाण्डालम् । अद्वेषे स्त्रीकुमारम् । दासीमाणवकम् । शाटीपिच्छिकम् । इदं जात्यविवक्षायाम् । उष्ट्रखरम् । उष्ट्रशशम् । पशु विभाषा प्राप्ता । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । इमानि जात्यविवक्षायाम् । दर्भशरम् । दर्भपूतिकम् । अर्जुनपुरुषम् । तृणोपलम् । एतेषां तृणविकल्पः प्राप्तः । दासीदासम् । कुटीकुटम् । भागवती भागवतम् । एषां सरूपाणां लिङ्गमात्रकृतविशेषाणां निपातद्वन्द्वः । चकारोऽवधारणार्थः । गवाश्वादीनि पठितान्येवैकवद्भवन्ति नान्यथा गोश्वौ गोऽश्वम् ॥

## वा तरुमृगतृणधान्यव्यञ्जनपशुवडवपूर्वापराधरोत्तरपक्षिणः ॥ ८८ ॥

तरु-मृग-तृण-धान्य-व्यञ्जन-पशुविशेषवाचिनामश्ववडव-पूर्वापर-अधरोत्तर इत्येषां पक्षिविशेषाणां च द्वन्द्वो वा एकवद्भवति। प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः। आरण्या मृगाः। रुरुपृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । ग्राम्याः पशवः। वृष्णिस्तभम्। वृष्णिस्तभाः। अश्ववडवम्। अश्ववडवौ । पर्यायनिवृत्त्यर्थं च अश्ववडवग्रहणम्। पूर्वापरम्। पूर्वापरे । अधरोत्तरम् । अधरोत्तरे। तित्तिरिकापिञ्जलम्। तत्तिरिकापिञ्जलाः। अत्रेष्टिः। सेनाङ्गफलक्षुद्रजीवतरुमृगतृणधान्यपक्षिणां प्रकृत्यर्थबहुले एकवद्भावः। तेन रथिकाश्वारोहौ बदरामलके। इदमेव ज्ञापकं अप्राणिजातेरित्यत्र न बहुवचनम्। अत एव विग्रहो ऽभिप्रेतः। यूकालिक्षे। प्लक्षन्यग्रोधौ। रुरुपृषतौ। कुशकासौ। व्रीहियवौ। हंसचक्रवाकौ। वेति योगविभागोऽयम्। द्वन्द्वमात्रे कृतो भवेत् पूर्वो विधिस्तु नित्यार्थः तुल्यजात्यर्थं उत्तरम्। इह मा भूत् प्लक्षयवाः। हंसपृषताः॥

## विरोधि चानाश्रये ॥ ८९ ॥

वेति वर्त्तते। आश्रयो द्रव्यं विरोधो येषामस्ति तद्वाचिनामनाश्रयाभिधायिनां द्वन्द्वो भवति । विरोधीत्याम: खे कृते सौत्रो निर्देशः। सुखदुःखम्। सुखदुःखे। जननमरणम्। जननमरणे। शीतोष्णम्। शीतोष्णे। विरोधीति किम्। कामक्रोधौ । अनाश्रय इति किम् । सुखदुःखौ ग्रामौ ।

शीतोष्णे उदके। चकारादविरोधेऽपि। वधूवरम्। वधूवरौ। स्थावरजङ्गमम् । स्थावरजङ्गमे ।

### न दधिपय आदीनि ॥ ९० ॥

दधिपय आदीनि द्वन्द्वरूपाणि नैकवद्भवन्ति । येन केनचित् प्राप्ते प्रतिषेधोऽयम्। दधिपयसी । सर्पिर्मधुनी। मधुसर्पिषी। व्यञ्जनत्वात् प्राप्तिः। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। परिव्राजककौशिकौ। प्रवर्ग्योपसदौ। वेतिप्राप्तिः। शुक्लकृष्णौ। इध्माबर्हिषी। निपातनात् पूर्वस्य दीत्वम् । योगानुवाके । दीक्षातपसी । श्रद्धातपसी। अध्ययनतपसी। उलूखलमूसले। आद्यावसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे। वेति योगविभागात् प्राप्तिः। चण्डालमृतपादयश्च ॥

### अर्थैतावत्त्वे च ॥ ९१ ॥

एतावत्त्वमियत्ता । वृत्त्यवयवार्थानामेतावत्त्वे च द्वन्द्वो नैकवद्भवति। द्वादश मे मार्दङ्गिकपाणविकाः। चकारः प्रतिषेधानुकर्षणार्थः ॥

### वा समीपे ॥ ९२ ॥

नेति निवृत्तम्। अर्थानामेतावत्त्वस्य समीपे वा द्वन्द्व एकवद्भवति। उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः। एकवद्भावपक्षे हसोऽनुप्रयुज्यते अन्यत्र वसः। हसे अन इति अः सान्तः। वसे तु डः ॥

### स नप् ॥ ९३ ॥

यस्यायमुक्त एकवद्भावः स नब्भवति। तथा चैवो-

दाहृतम् । समाहारे रसो नप् भवतीति वक्तव्यम् । पञ्चाग्नि । पञ्चवायु । अकारान्तप्रकरणे रादिति ङीविधानं ज्ञापकम् । अकारान्तोत्तरपदो रः स्त्रियां वर्तते इति । पञ्चपूली । षण्णगरी । वाबन्त इति वक्तव्यम् । पञ्चखट्वी । पञ्चखट्वम् । स्त्रीगोर्नीच इति प्रादेशः । अन्नन्तस्य नत्वं स्त्रियां वा वृत्तिः । पञ्चतक्षम् । पञ्चतक्षी । पात्रादिभ्यः प्रतिषेधः । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् । पञ्चगवम् । दशगवम् । गोरहृदुपीति टः सान्तः ॥

हश्च ॥ ९४ ॥

हसंज्ञश्च नप्भवति । अधिस्त्रि । उन्मत्तगङ्गम् । हिमुनीदम् । प्रोनपीति प्रादेशार्थमनुप्रयोगार्थं च वचनम् । पूर्वपदार्थप्रधानस्यालिङ्गत्वं प्राप्तम् । अन्यत्राभिधेयवल्लिङ्गं प्राप्तम् । चकारोऽनुक्तसमुच्चयार्थः । तेन क्रियाविशेषणानां नपुंसकत्वं सिद्धम् । शोभनं पचति ॥

षोऽनञ्यः ॥ ९५ ॥

नञ्सं यसञ्च वर्जयित्वा नप्भवतीत्येतदधिकृतं वेदितव्यम् । ष इति पुंल्लिङ्गेन निर्देशः सौत्रः । वाच्यप्रकरणादन्यत्र कामचारो वा वक्ष्यति । सेनासुराच्छायाशालानिशा वेति । क्षत्रियसेना । क्षत्रियसेनम् । ष इति किम् । महती सेनाऽस्य महासेनः । अनञिति किम् । असेना । अय इति किम् । परमसेना ॥

खौ कन्थोसीनरेषु ॥ ९६ ॥

खुविषये कन्थान्तः षसो नप्भवति उसीनरेषु चेद्या कन्था । सौसमीनां कन्था सौसमिकन्थम् । आह्वरक-

न्थम् । आसमिकन्थम् । चर्मकन्थम् । एते उसीनरेषु ग्रामाः । विग्रहवाक्यं सादृश्यमात्रेण । खाविति किम् । वीरणकन्था । उसीनरेष्विति किम् । दक्षिकन्था । अन्यत्र ग्रामसञ्ज्ञेयम् ॥

उपज्ञोपक्रमं तदाद्युक्तौ ॥ ९७ ॥

उपज्ञायत इति उपज्ञा उपदेशः । उपक्रम्यत इति उपक्रमः प्रारम्भः । उपज्ञोपक्रम इत्येवमन्तः षसो नभवति तयोरुपज्ञोपक्रमयोराद्युक्तौ गम्यमानायाम् । स्वायम्भुवस्योपज्ञा स्वायम्भुवोपज्ञमाकालिकाचाराध्ययनम् । देवोपज्ञमनेकशेषव्याकरणम् । कुरुराजस्योपक्रमः कुरुराजोपक्रमं दानम् । अकम्पनोपक्रमं स्वयंवरविधानम् । उपज्ञोपक्रममिति किम् । आदिदेवतपस्या तीव्रा । तदाद्युक्ताविति किम् । देवदत्तोपज्ञा । देवदत्तोपक्रमो गणितम् । उत्तरपदस्य प्राधान्यवल्लिङ्गं ष इत्येव । सम्यगुपज्ञो भगवान् । स्वायम्भुवो यस्येदमाकालिकाचाराध्ययनं वाक्येन तदाद्युक्तौ गम्यमानायामिदम्प्रत्युदाहरणम् ।

छाया बहूनाम् ॥ ९८ ॥

बहूनां या छाया तदन्तः षसो नभवति । इक्षूणां छाया इक्षुच्छायम् । सलभच्छायम् । बहूनामिति किम् । कुड्यस्य छाया कुड्यच्छायम् । कुड्यच्छाया । सेनासुरेत्यादिना विकल्पः । ष इत्येव । बहवः छाया अस्मिन्बहुच्छायो वनखण्डः ॥

सभा ऽराजामनुष्यात् ॥ ९९ ॥

अराज्ञः अमनुष्याच्च परा या सभा तदन्तः षो नव भवति । अराज्ञः । इनस्य सभा इनसभम् । ईश्वरस-

भम् । इन्द्रसभम् । पार्थिवसभम् । राजशब्दपर्युदासात् तत्पर्यायाणामत्र ग्रहणं न विशेषाणाम् । तेनेह न भवति । सातवाहनसभा । चन्द्रगुप्तसभा । अमनुष्यात् । रक्षसां सभा रक्षःसभम् । पिशाचसभम् । अमनुष्यशब्दस्य च रक्षःप्रभृतिष्वेव रूढत्वादिह न भवति । काष्ठसभा । पाषाणसभा । पक्वेष्टकासभा यद्येवं दृगमनुष्य इत्यत्र कथम् । जायाघ्नस्तिलकः । पित्तघ्नं घृतम् । युदुध्या बहुलमिति बहुलवचनात्तत्रान्यस्यापि ग्रहणम् । अराजा मनुष्यादिति किम् । राजसभा । देवदत्तसभा । ष इत्येव । ईश्वरा सभाऽस्य ईश्वरसभः ॥

अशाला ॥ १०० ॥

अशाला च या सभा तदन्तः षो नभवति । गोपालसभम् । स्त्रीसभम् । अत्र समुदाये सभाशब्दः । अशालेति किम् । देशिकसभा ॥

सेनासुराच्छायाशालानिशा वा ॥ १०१ ॥

सेना सुरा छाया शाला निशा इत्येवमन्तः षो वा नभवति । देवानां सेना देवसेनम् । देवसेना । पिष्टसुरम् । पिष्टसुरा । कुड्यच्छायम् । कुड्यच्छाया । गोशालम् । गोशाला । श्वनिशम् । श्वनिशा । चोरनिशम् । चोरनिशा । ष इत्येव । शूरसेनो राजा । अनञ्य इत्येव । असेना । परमसेना ॥

द्वन्द्वे युवल्लिङ्गम् ॥ १०२ ॥

द्वन्द्वे यद्योरिव लिङ्गं भवति । इतरेतरयोगद्वन्द्वस्येह ग्रहणम् । तत्र सर्वेषामवयवानां प्राधान्यात् पर्यायेण समु-

दायलिङ्गे प्राप्ते वचनम् । कुक्कुटमयूर्याविमे रमणीये । मयूरीकुक्कुटाविमौ । यथा हस्त्वेति नपुंसकलिङ्गातिदेशः संघातस्य भवति न चावयवस्य निवर्तकः । अधिस्त्रि । अधिकुमारीति एवमिहापि समुदाये लिङ्गातिदेशोऽनुप्रयोगार्थं क्रियमाणो नावयवस्य स्त्रीत्यस्य निवर्तकः । षसस्य द्युवल्लिङ्गातिदेशो न वक्तव्यः । विशेष्यवल्लिङ्गवचनानि भवन्ति विशेषणानामित्यनेनैव सिद्धत्वात् । ध्वर्थस्य तु विशेष्यत्वात् प्राधान्यम् । अर्द्धपिप्पली । अर्द्धकौशातकी शोभना । यत्र पूर्वपदार्थः प्रधानं तत्र पूर्ववल्लिङ्गमेव । यथा प्राप्तापन्नालम्पूर्वतिसलक्षणेषु । प्राप्ता जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं जीविकायै अलञ्जीविकः । निरादयः क्रान्ताद्यर्थे कया । निष्क्रान्ता कौशाम्ब्या निष्कौशाम्बिः । हृदर्थे रसस्य अन्यपदार्थप्राधान्यादभिधेयवल्लिङ्गम् । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडासः ॥

## अश्ववडवौ पूर्ववत् ॥ १०३ ॥

अश्ववडवयोरितरेतरयोगे पूर्ववल्लिङ्गं भवति । अश्वश्च वडवा च अश्ववडवौ । समुदाये लिङ्गातिदेशोऽनुप्रयोगार्थे पूर्ववल्लिङ्गनिवृत्तिर्नास्तीत्युक्तम् । कथं टापो निवृत्तिः । अश्ववडव इति निपातनात् । पूर्ववदिति किमर्थं अर्थातिशार्थम् । अश्ववडवावित्युच्यमाने वचनान्तरेन स्यात् अश्ववडवान् पश्य अश्ववडवै कृतः ।

## रात्रान्हौ पुंसि ॥ १०४ ॥

रात्रअन्हशब्दौ कृतसान्तौ निर्दिष्टौ एतौ पुंसि भवतः द्वयो रात्र्योः समाहारः द्विरात्रः । अहः सर्वैकदेशसंख्यात-

पुण्याच्च रात्रेरित्यः सान्तः। पूर्वमहः पूर्वाह्णः। अपराह्णः। पूर्वापरप्रथमेत्यादिना षसः। राजाहःसखिभ्यष्ट् इति टे कृते एभ्योऽन्होऽन्ह इत्यन्हादेश उत्तरपदप्राधान्यात् स्त्रीनपुंसके प्राप्ते ॥

अहः ॥ १०५ ॥

अह इत्ययं च शब्दः पुंसि भवति द्वयो रन्होः समाहारः द्व्यहः। त्र्यहः। न समाहार इत्यन्हादेशप्रतिषेधः। ठिखम्। अनुवाकादयश्चेति वक्तव्यम्। अनुवाकः सम्प्रवाकः सूक्तवाकः ॥

पुण्यसुदिनाभ्यां नप् ॥ १०६ ॥

पुण्यसुदिनाभ्यां परः अहशब्दो नब्भवति पुण्यमहः पुण्याहम्। पुण्यग्रहणं सूत्रोपलक्षणं एकाहमिति च भवति। विशेषणसविधिः। पुण्यैकाभ्यामिति अह्नादेशप्रतिषेधः। सुदिनमहः सुदिनाहम् ॥

अपथम् ॥ १०७ ॥

अपथंशब्दो नब्भवति। न पन्थाः अपथम्। पथो वा इति प्रतिषेधविकल्पः। ऋपूरब्धूःपथोऽनक्ष इति असान्तः ष इत्येव। न विद्यते पन्था अस्मिन् अपथो देशः। अपथा अटवी। द्विसंख्यादेरिति वक्तव्यम्। उत्पथम्। तिकुप्रादय इति षसः। त्रिपथञ्चतुःपथमिति तासः ॥

पुंसि चार्द्धर्चाः ॥ १०८ ॥

अर्द्धर्चादयः शब्दाः पुंसि नपि च वेदितव्याः। अर्द्धं च तत् ऋक् च सार्द्धर्चः। अर्द्धम्। गोमयकषायकार्षापणकुतपकवाटशङ्खादिपाठादवगमः कर्त्तव्यः शब्दरूपाश्रया चेयं प्रणीतोभयलिङ्गता क्वचिदप्यर्थभेदेन शब्देषु व्यवस्थिते पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ जलजे द्विलिङ्गौ

*as that which is material is non-eternal,* as action,' the citing of, 'action' constitutes an example of the 'Contrary Instance not precluded from the Indicative;' as *Ākṭion* is not *material* (2) In regard to the same argument, the citing of 'atom' would be an example of the 'Contrary Instance not precluded from the Subject;' as the 'subject' *eternality* is not precluded from the *Atom* (which is eternal). (3) The case of '*Ākāça*' would be a 'contrary instance not precluded from either the Indicative or the Subject;' as neither 'immateriality' nor 'eternality' is precluded from *Ākāça*. (4) The case of 'Darkness would be a 'contrary instance not applying to its own substratum;' as in reality there is no such thing as 'Darkness;' and as such wherein could the preclusion of the 'Subject' and 'Indicative' subsist? (5) The case of the 'jar' would be the 'non-precluded Contrary Instance;' though in the *jar* we have the preclusion of both the 'Subject' (*eternality*) and the 'Indicative' (*Immateriality*), yet, as long as the arguer does not accompany the citing of the instance with the general statement—'that which is non-eternal is material,'—the preclusion of the 'Subject' and the 'Indicative' can not be duly comprehended by the person to whom the argument is addressed; and as such the Instance is called 'non-precluded.' (6) The statement 'that which is immobile is not a substance' is an example of the 'Contrary Instance precluded from the contrary.' Just as the 'Subject' is the *pervader* and the 'Indicative' the *pervaded,* so in the same manner is the 'negation of the Subject' the *pervaded* and the 'negation of the Indicative' the *pervader*; so has been declared—'the relationship of the *pervader* and *pervaded* perceived in two positive things, will be found to be reversed in the case of their negations or contraries.' In accordance with this law, when we have the argument—'Air is a substance because it is mobile,' if we mean to show an instance of the 'concomitance of contraries,' we should put forward the statement—'that which is not a substance is immobile;' but the instance cited above is not in this form, but in the form—

'that which is immobile is not a substance;' but as a matter of fact, there is no such invariable concomitance (between 'absence of mobility' and 'unsubstantiality)' as is implied in this assertion; as we find in the case of *Ākāça* that, though it is *immobile*, yet it is a *substance*; hence the instance in question is the 'Contrary Instance precluded from Contraries.'

The compound '*lingānumēya &c.*,' means *those of whom the Indicative &c., are not precluded; 'āçrayāsiddha' is that of which the substratum is unknown*; and among the other members we have the *Dvandva* or the Copulative Compound.

*Text (118): The reiteration of the concomitance of the 'Indicative' in general with the 'Subject,' after the former has been perceived, in the 'Instance,' along with the 'Subject' in general,—constitutes the Ānusandhāna. That is to say, the 'Indicative' in general is put forward (in the Premiss) as a qualification of the 'Subject,' and not as having any potencies; and in the 'Instance,' it is pointed out as perceived along with the qualification of the Sādhya '(object of Inference) in general; and the statement that reiterates the fact of its existence in the 'Subject,' is what is called the 'Anūsandhāna' (the Minor Premiss.) E. g., in the same argument, the statement that 'Air is mobile'; and also the statement that 'the Air is not immobile' which follows from the recognition of the fact of the 'indicative' not being concomitant with the absence of the 'subject.*

## Commentary.

The *Nidarçana* literally is that statement wherein *is shown* ('nidarçyatē') the ascertained concomitance of the *sādhya* (the object of Inference) and the *sādhana* (the Inferential Indicative the *Hētu*); it is this 'Instance' that has been described above; and the statement that points out the existence, in the 'subject'

as qualified by the *sādhya*, of the *hētu* or (the indicative) in general, which latter has been found in the Instance to be concomitant with the 'subject' in general,—is called the '*Anusandhāna*,' in view of the fact that it *reiterates* or recalls (*anusandhīyatē*) the existence, in the *paksha* ('subject'), of the *hētu* ('Indicative') which has been shown in the Instance to be invariably concomitant with the *sādhya* (the 'object').

The author proceeds to explain his own meaning : *That is to say &c*, after the *Pratijñā* (Declaration of the Conclusion) we had the statement of the 'Indicative ;' and the latter statement served the purpose of showing that it existed in the 'Subject' as apart from all other things, and as such had the character of the 'hētu ;' and it said nothing as to its existence in the 'subject' *as its qualification.* The power of the 'Indicative' to prove the '*sādhya*' consists in its negative and positive invariable concomitance, as also in the fact of its qualifying the 'subject ;' and this latter fact is not expressed either by the *Pratijñā* (the Declaration of the Conclusion) or by the statement of the 'Reason ;' and thus the 'Reason' has not its necessary potency fully established ; so that in the Instance it is pointed out as concomitant with the general qualifications of the *sādhya* ; and after that it has to be shown again to exist in the 'Subject ;' and the statement that does this is called the '*Anusandhāna*.'

The sense of all this may be thus explained : Words are used by one person for the sake of another person ; and hence their use would follow the bent of the desires and wants of the person to whom they are addressed. And when this person has heard the *sādhya*, 'what has to be proved,' (put forward in the Declaration), he wants to learn the *sādhana*, the 'Reason'—'by what this is proved ;' and he can not yet want to know the potency or capability of the Reason ; as a desire for the knowledge of the capabilities of a thing can arise only after the thing itself has become known. When this desire

has been evinced, the other person mentions the 'Reason,' (in the 'apadēçā'); but this statement merely mentions the Reason, and does not say anything as to its subsisting as a qualification in the 'Subject;' for the simple reason that the same word could not signify two things (the mere form of the Reason, as also the fact of its subsisting in the Subject). When the person knows the Reason, there arises in his mind a desire to know its capabilities; and upon his evincing this desire,—in as much as a due cognition of the *sādhya* would not be possible without the recognition of its *invariable concomitance*, this concomitance is expressed by means of the *vyāptivacana* (the statement of invariable concomitance), between the *sādhya* and the *hētu*, put forward in the 'Instance': and the capability of the 'Reason' being thus known, the man next wishes to know if the Reason, endowed with this capability subsists in the 'subject.' After the 'Instance' has been cited, it becomes necessary to recognise the fact of the 'Reason' subsisting in and qualifying the 'Subject'; and it is in the *Upanaya* or *Anusandhāna*, the 'Minor Premiss,' that this fact is put forward.

*Objection*: "The fact of the Reason subsisting in the Subject is implied by its very capability of being put forward as a 'Reason'; as a Reason subsisting in another substratum (and not in the Subject) would not prove anything, and as such be no 'Reason' at all."

*Reply*: For the matter of that the mere capability of the Reason to be put forward as such also implies the 'invariable concomitance,' the 'major Premiss;' as anything not so concomitant cannot be a true 'Reason'; hence in accordance with your reasoning, it would not be necessary to put forward the 'Instance' either.

*Objection*: "It is quite possible for the *Asādhārana* Indicative to be put forward, through some misconception, as the 'Reason'; and hence the mere fact of an indicative having been put forward as such would not necessarily imply the necessary

'invariable concomitance'; and hence it is necessary for this latter to be put forward by means of the 'Instance.'"

*Reply:* We often find that even when the Indicative does not subsist in the 'Subject,' it is put forward, by mistake, as a 'Reason'; and hence the mere fact of the Reason being put forward does not necessarily imply its subsistence in the 'Subject;' consequently it becomes necessary to point out that the 'Indicative' cited in the 'Instance' does subsist in the 'Subject'; and to this end the statement of the '*Anusandhāna*' becomes necessary.

*Objection:* "We often find that the '*Asiddha*' or 'Unknown' Indicative is, through some misconception, put forward in the '*Anusandhāna*' also; and as such, how could this absolutely prove the fact of the Indicative subsisting in the 'Subject.'?"

*Reply:* So far as that is concerned, we find the 'Asiddha' Indicative often put forward, through some mistake, as being 'invariably concomitant'; and under the circumstances, how could the mere 'statement of invariable concomitance' absolutely prove that there is a real concomitance?

*Objection:* "The 'concomitance' is ascertained, in the 'Instance,' in accordance with the *means of knowledge* affording the cognition of the 'Major Premiss'; and it is not ascertained by the mere 'statement' (of this Premiss); as mere statement could be made with regard to any thing and every thing (and as such it could not prove anything."

*Reply:* In the case of the '*Anusandhāna*' also, the fact of the Reason subsisting in the 'Subject' would be ascertained in accordance with the *means of knowledge* affording the cognition of the 'Minor Premiss'; and not by the mere statement of the premiss.

*Objection:* "But the integrity of the *means of knowledge* affording the cognition of the Minor Premiss is duly kept up

by the mere fact of the putting forward of the 'Reason' not being otherwise explicable or possible."

*Reply*: In the same manner the integrity of the 'means of knowledge' affording the cognition of the Major Premiss' would be preserved by the same fact of the putting forward of the 'Reason' not being otherwise explicable.

*Objection*: "In as much as the Statement of the Reason is for a totally different purpose, it has not the capability of putting forward or indicating the 'invariable concomitance' (Major Premiss; and hence it is that this putting forward is done by means of the 'Instance.'"

*Reply*: If it be so, then in the case in question please apply the same course of reasoning; and there is no need for making unnecessary assumptions.

*Objection*: "All right; let there be the *Anusandhāna* but, in that case the putting forward of the Reason would be absolutely useless."

*Reply*: Not so; if there is no 'Statement of the Reason, there can be no idea of the 'Indicative' as proving the conclusion (and hence having the character of the true 'Reason') and as such there being no possibility of any desire on the part of the enquirer to learn of its capabilities, there would be no room for the putting forward of the 'Instance' &c. Says the *Nyāyabhāshya*: 'When the Reason does not exist Whose indicative character would be shown?'

The Author cites an instance of the '*Anusandāna*': '*E.g. in the same argument &c.*' Having cited the instance of the *positive* '*Anusandhāna*,' he cites one of the *negative* '*Anusandhāna*'—'*Also the statement &c.*'

---

*Text* (119): *The 'subject' having been mentioned as the object of Inference, and yet not being fully ascertained as such, we have a reiteration of the Conclusion (Pratijñā) for the purpose of bringing*

*about certainty in the mind of the other person; and this Reiteration is called the 'Pratyāmnāya.' That is to say, something is at first pointed out as to be proved; and when it is not known quite for a certainty to be such as is wanted to be proved, then—for the sake of such persons as have acquired the faculty of recognising the truth, by means of the 'Reason' and other aforesaid 'Factors' of the syllogism,—we have a reiteration of the conclusion; and this is what is called the 'Pratyāmnāya.' E. g. (in the same argument) the statement 'therefore Air is a substance.'*

*As long as this reassertion is not made, none of the other 'Factors' either individually or collectively has the power to express what is meant to be expressed by it.*

Objection: "*But what is expressed by it may certainly be implied by the other members.*"

Reply: *Not so; as if it were so, then we would have many undesirable irregularities. As, (if we were to depend upon implications), then after stating the conclusion (in the Pratijñā) it would be necessary to assert the 'Reason' only; as the learned are sure to remember the necessary 'invariable concomitance'* (*sought to be put forward in the 'Instance'*), *and thence to deduce the necessary premisses and conclusions.*

*For these reasons the argument must be regarded as ending with the 'Pratyāmnāya' (or 'Nigamana').*

Question: '*How so?*'

Answer: *For instance, in the first place we have the 'statement of the conclusion' in the form—'Sound*

*is evanescent,'—wherein we have only 'sound' mentioned as having the uncertain qualification of 'evanescence'; secondly we have the statement of the 'Reason' in the form—'because it always follows from effort,'—wherein we have the mere mention of a property calculated to prove the 'evanescence'; thirdly we have the 'statement of the Instance' in the form—'in the world all that is found to follow from effort is also found to be evanescent, as the jar'—wherein we have merely the mention of the concomitance of the 'Reason' ('following from effort') with the 'Object of Inference' ('evanescence') in general; and similarly we may have the 'statement of the negative Instance' in the form—'the eternal is never found to follow from any effort, as the Ākāça,'—wherein is pointed out the absence of the 'Reason' in the absence of the 'object'; fourthly we have the statement of the 'Anusandhāna' in the two forms of affirmation and negation—'sound is found to follow from effort' and 'sound is not found like Ākāça to be independent of effort,'—wherein we have the reiteration of the 'Reason' in general, whose powers have been ascertained by means of affirmation and negation, in 'sound'; and then alone fifthly and lastly have we the certain conclusion (the Pratyāmnāya') in the form—'therefore sound must be evanescent.' And thus we find that it is only in this way that we find the last 'member' affording the desired final conclusion; and hence we find that it is only by means of the 'five-membered' argament that something known for certain by the speaker can be proved to another person.*

*Such then, is the Inference 'for the sake of others.'* (IX-i-1, 2.)

## Commentary.

The author proceeds to describe the '*Pratyāmnāya.*' The statement of the '*Pratijnā*' having pointed out the 'property or character of the *Sādhya,*' as the thing whose existence in the Subject is to be proved by the members of the argument,—the presence of this Sādhya in the Subject remains uncertain, until it is reiterated as subsisting in the 'Subject;' and this reiteration is what is called *Pratyāmnāya,*—the word meaning literally *that statement whereby there is a repeated mention* (of the *sādhya*) And this 'reiteration' of something already mentioned before is for the purpose of *bringing about a certainty in the mind of the other person.* That is to say, in putting forward an argument we state merely the 'object of Inference' the '*sādhya,* as subsisting in the 'subject;' but there cannot yet be any certainty with regard to the subsistence; as the mere statement of the conclusion does not prove it; but when the 'Reason' has been stated, and the capabilities of the Reason duly pointed out (in the 'Instance,' the 'major premiss, a certainty as to the conclusion is broughtabout by means of the '*Pratyāmnāya;*' and herein lies its usefulness. That is what the author means by the explanation—'*that is to say &c.*' At the beginning of the argument the person to whom it is addressed is not convinced of the subsistence of the 'object' in the 'subject;' but when the threefold potentiality of the 'Reason' has been shown to him by means of the three 'members'—the 'Reason,' the 'Instance' or 'major premiss' and the '*Anusandhāna*' or the 'minor premiss'—and this is followed by the 'reiteration' of the 'object' now become real, along with its apprehension and potentialities,—the argument becomes complete in all its details, and thus brings about the desired conviction. It is for the purpose of bringing about this conviction that we have the reiteration of the conclusion. The example of this is—"therefore Air is a substance'

as closing the argument referred to in connection with the members.'

In answer to the question—"When the conclusion is proved by the 'Reason' and the other three 'members,' what is the use of the '*Pratyāmnāya*'?—the author says: '*as long as this reassertion is not made &c.* That is to say, everyone of the three 'members,' *Prātijnā* and the rest, is complete and rests within itself; and until the *Pratyāmnāya* is put forward, they do not combine towards the indicating of any single idea; for the simple reason that each of them has a distinct sphere of its own; when however, the *Pratyāmnāya* has been stated, there is in the mind of the listener a feeling of necessity of connection, whereby he tends to combine all the 'members,' which, thus coming into the relationship of mutual subserviency, are enabled to indicate the one conclusion wanted; and thus the *Pratyāmnāya* must be regarded as a necessary factor in every inferential argument.

Another objection is put forward: "*What is expressed by, the Pratyāmnāya might be implied by the other 'members.* That is to say, the accessory details in the 'Inference for the sake of another' are the same as those in that for one's own sake; and the only difference is that in the case of the latter the whole argument is recalled to the mind by the person himself. while in that of the former, it has to be made intelligible to the other person; and for ourselves we find the conclusion to be duly indicated and proved by the comprehension of the potentialities of the Reason; and for another person also this alone should be sufficient to indicate the conclusion; and the statement of the argument has its sole end in the pointing out of the 'Indicative' (as the Reason); and it has already been shown that the 'Indicative' as subsisting in, and being invariably concomitant with, the 'Subject,' is put forward by the 'Reason' and the other three 'members'; and this being enough for the due comprehension of the conclusion, there remains nothing to be done by the '*nigamana*' or *Pratyāmnāya*."

The author replies to the above objection: '*Not so &c.*' What the argument does is to point out merely the potentiality of the Indicative and not the Object: but its potentiality does not consist merely in 'invariable concomitance' and 'subsistence in the Subject'; as even when these two characters are present, we find—in the case of the '*Prakaraṇasama*' and '*Kālātyāyapadishṭa* Reason—that it does not prove the conclusion; the 'potentiality' in addition to the aforesaid two characters, must also consist in its 'being such as (1) has not its cognition set aside by a more valid means of knowledge, and (2) has no equally valid Reason to the contrary; and so long as the presence of these two characters is not duly proved, there always remains the suspicion of there being a Reason to the contrary; and so long as this suspicion remains, even though the Reason may be shown to subsist in the Subject, there would be no conviction with regard to the desired conclusion; and it is for this reason that the *Pratyāmnāya* is put forward by way of indicating the absence of any 'reasons to the contrary;' and when the absence thereof has been proved, it follows that the Reason is free from the fallacies of '*Prakaraṇasama*,' and *Kālātyayāpadishṭa*;' and then it is that the Reason, whose potentialities have been mentioned before, comes to establish the conclusion; and thus is the usefulness of the '*Pratyamnaya*' established.

As what the author means to controvert is the view that the 'potentiality of the reason,' even though not explicity mentioned, would be implied,—it becomes necessary for him to support his view by examples. And to this end he declares that, as soon as the 'Reason' will have been put forward after the *Pratijñā*, the learned would at once, without any further statements, remember the 'invariable concomitance,' and therefrom deduce the necessary conclusion. That is to say, the 'Inference for the sake of another person' is not put forward for the person who already knows what is to be proved; as for a such person the argument would be absolutely useless; then again, it is not possible for us to know how much of the matter is known, and how

much not known, to the person to whom we address the argument; as the state of the mind of one person can hardly be known to another. Nor too could each argument be framed in accordance with the capacity of each person to whom it may be addressed; as each person may be possessed of peculiar capacities. Consequently when a man should want to convince another person, it becomes necessary for him to put forward as many statements as would establish the indicative validity of the Reason in the natural course of things; and he should not mind the idiosyncracies of the person whom he may seek to convince. Thus has this been declared: 'A fact is to be put forward to be proved only in the form that it is known to exist in, and not in accordance with the ideas entertained about it by the persons to whom it may be addressed; as who could ever properly follow the bent of the mistaken ideas of the thing entertained by others?'

The author now sums up the whole subject: '*For these reasons &c.*' That is to say, as it is only when the *Pratyāmnāya* has been stated that the full significance of the 'Reason' in-comprehended, the argument must be regarded as fully comprehended only after that statement. Or, we may construe the sentence thus: In as much as without the statement of the *Pratyāmnāya* there is no recognition of the absence of reasons to the contrary, the thing— *i.e.* the full significance of the 'Reason'—must be regarded as ending with that statement.

Having described each of the 'members' separately, the author proceeds, by means of a question, to show their nature collectively: '*How &c.*' The question as to sound being evanescent or otherwise having arisen, there comes in the mere statement of the 'conclusion'—'sound is evanescent'—which speaks of sound as qualified by the as yet uncertain character of *evanescence.* Then there arises, on the part of the enquirer a desire to know the 'reason' for this conclusion; and to satisfy this want we have the statement of the 'reason'—'because it follows after effort,' i.e. 'not existing before the effort

to utter it, it comes into existence after this effort has been put forth ;' and in this what is pointed out is *only* a property that would prove the evanescence. What is meant by this 'only' is that this statement says nothing, either as to the fact of the 'Reason' subsisting in the 'subject' sound, or as to its 'invariable concomitance' with 'evanescence.' When the enquirer has learnt the 'reason,' he wishes to learn in what way that reason indicates the conclusion ; and in order to satisfy this wish we put forward the 'Instance' in this form—'in this world, everything that has been seen to follow after an effort has also been found to be evanescent,'—which points out the *mere* fact of a general concomitance between the 'thing to be proved' (*evanescence*) and the 'reason ;' here the word 'mere' is meant to indicate that the 'instance' says nothing beyond the general concomitance. Side by side with this we have the negative 'Instance,'—'all that is eternal is never found to be brought about by an effort,'—which shows that wherever the 'thing to be proved' is absent the 'Reason' is also absent. After this, the enquirer says—'well, I understand that anything following after an effort is evanescent, but I do not yet know whether or not the character put forward belongs to sound ;' and in a nswer to this, we have the statement of the *Anusandhāna*,'—'Sound is a thing that follows after an effort ;' that is to say, just as the jar follows after effort, so does Sound also ; and Sound is not like *Akāça* which is not the effect of any effort ; and this *Anusandhāna* serves the purpose of indicating the fact of the subsistence in *Sound*, of the *character of being produced from effort*' the negative and positive concomitances of which character have been pointed out before. Even after all this, the enquirer might reason thus : "In the case of the Instance, 'all that is produced is not hot, e. g. the jar,' we find that even though some sort of an external invariable concomitance is possible, yet a fiery substance, though *produced*, cannot be regarded as *not-hot*, because of such a conclusion being contrary to other means of right knowledge ; and in the same manner, it may be

that though there may be such an external invariable concomitance as that, 'whatever follows after an effort is evanescent, yet it may be that *Sound*, though *following after an effort*, may not be *evanescent*, in view of arguments to the contrary.' In answer to this suspicion of a contrary reasoning and conclusion,—a suspicion that would shake the indicative character of the 'reason,'—it becomes necessary to reiterate, by means of the Pratyāmnāya, the conclusion that, 'Sound is evanescent;' which means that, 'in as much as there is no means of knowledge indicating the eternality of sound, it must be regarded as evanescent.'

Thus then, what the *Pratyāmnāya* does is to point out the ground for believing in the absence of any valid means of cognising the contrary of the conclusion,—this being done by its precluding all possibility of a contrary conclusion. And when this absence has been pointed out, and proved, all suspicion to the contrary is set aside; and the 'Reason,' whose invariable concomitance has been shown before, being summed up as subsisting in the 'Subject,' leads the enquirer, through the valid means of cognising the necessary concomitance, to a full recognition of the conclusion, free from all doubts and uncertainties; and he does not want anything more for the purpose of being convinced. And thus it is by means of the '*Pratyāmnāya*' that we get at the finale of the conclusion desired to be proved —*viz.*, 'Sound is evanescent.'

The *Sādhyavākyārthavādis* explain the usefulness of the *Pratyāmnāya* in the following manner: "The 'producedness of *Sound* is of a totally different character from the 'producedness' of the *jar*; hence finding that the 'producedness' of the *jar* is pervaded by or invariably concomitant with, 'evanescence,' one may be bewildered as to whether, by analogy, the same might be the case with Sound also; and even when to such a bewildered person it has been shown that the 'indicative' ('producedness') subsists in the 'Subject' ('Sound'), and

that it is invariably concomitant with 'evanescence,'—he is not sufficiently convinced of the conclusion that 'Sound is evanescent'; hence to this end is put forward the '*Prātyāmnāya*—'*Therefore* (*tasmāt* sound is evanescent'; wherein the pronoun '*tasmāt*' serves the purpose of reminding the enquirer of the means of cognising the invariable concomitance previously cognised in a general way, and also of proving the required 'evanescence of *Sound*.' Thus then, the sense of the *Pratyāmnāya* comes to be that because the fact of *producedness* being accompanied by *evanescence* cognised before did not refer to the *producedness* of any particular thing, but to *producedness in general*, therefore *being produced, Sound* is *evanescent*."

In accordance with this view the Minor Premiss itself serves to set aside the fallacies of *Prakaraṇasama* and *Kālātyayāpadishṭa*; as the very character of the true 'Minor Premiss' consists in its being free from *satpratipaksha* and *Bādha*.

Others again hold that the word 'tasmāt' (in the *Pratyāmnāya*) has a threefold signification, its full implication being thus stated: (1) *Because* all that is *produced* is found to be *evanescent*, (2) *because* sound is *produced* and (3) *because* there is no possibility of 'contrary reasons' or 'negation,'—*therefore* on account of its *producedness*, Sound is *evancesent*."

The author sums up the whole section: '*For these reasons* &c. That is to say, in as much as it is only when all the five 'members' have been put forward that there is a full recognition of the potentialities of the 'Reason,' tending to due conviction with regard to the conclusion,—and as nothing more is needed for this purpose,—it follows that a desired conclusion is proved by us by putting forward an argument composed of 'five members,' neither more nor less; and thus it becomes proved that the 'Inferential argument for

the sake of another person' consists of the statement of the aforesaid five 'members.'

---

There are some people who hold that 'Sense-perception is the only *means of right knowledge*; and hence deny this character to 'Inference.' To these people we put the following question: Does the character of the valid means of knowledge belong to the single sensuous perception that is experienced at the particular time, or does it belong to all sensuous perceptions? The said validity could not belong to the one perception only, as there can be no reason for denying the validity of other perceptions brought about by similar means and under similar circumstances. If then, validity be attributed to all sensuous perceptions, the past and the future, as well as that experienced by other persons,—then we should like to know how the validity of all these come to be recognised.

"We regard all these perceptions to be valid because we find them to be exactly similar in kind to our own perception, of whose validity we are fully convinced."

By this you admit the evidential authority of Inferences with regard to the nature of things [That is to say, the reasoning. 'The perception of another person is valid because it is of the same kind as our own perception' is purely inferential].

The evidential authority of Inference may also be proved by putting forward the following alternatives: For whom is the validity of Sense-perception sought to be established—for one who already knows it and admits it? or for one who does not know and admit it? It cannot be for the former; as in his case the proving is not needed. Then as for one who does not know it, how do you come to know the ignorance of another person? Certainly it is not cognisable by means of any sense-organ.

"We infer his ignorance from his declarations."

Then you admit the evidential authority of the inference

अन्यथा चतुर्थं प्रत्यष्टाचत्वारिंशद्वर्षव्रतविधानसम्भवान्निष्कृत्यभावो ऽदृष्टार्थः स्यात् । तस्माद्द्वादशादिविधानेन न तन्त्रं नाप्यावृत्तिमात्रमिति । युगपदनेकब्राह्मणवधे तु भविष्यपुराणे विशेषः ॥

एवं काले यदा हन्याद्युगपत्सुरमर्दन ।
निमित्तमेकमाश्रित्य हन्त्यनेकेन वा विभो ।
ब्राह्मणं ब्राह्मणो वीर ब्राह्मणा तु बहूनपि ॥
निहत्य युगपद्वारमेकं प्रायान्तिकं चरेत्
किन्त्वत्र सुरशार्दूल विशेषं गदतः शृणु ।
बुद्धिपूर्वाबुद्धिपूर्वविशेषं शृणु पुत्रक ।
अकामतोयदा हन्याद्ब्राह्मणान्कामतो गुह ।
चरेद्वने तदा घोरे यावत्प्राणपरिक्षयम् ।
कामतश्च यदा हन्याद्ब्राह्मणं सुरसत्तम ।
तदात्मानं दहेदग्नौ विधिना येन तच्छृणु ।
भूत्वा निष्कालको वीर वेष्टयित्वा तु वाससा ।
घृताक्तेन महाबाहो दत्वा सर्वस्वमेवहि ।
छित्वा पादौ करीषाग्नौ दहेदात्मानमात्मना ।
उत्तमाङ्गानि विधिवद्दन्तः स्यात्सुरसत्तम ।
एवमत्र महाबाहो निर्दोषः परिकीर्तित इति ।

निष्कालकः केशरोमरहितः । क्षत्रियादीनां तु तत्तदेव द्वैगुण्यादि योज्यम् । तदाहाङ्गिराः ।

पर्षद्या ब्राह्मणानां तु स राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतमिति ।

अनयैव दिशा मूर्धावसिक्तादीनामनुलोमजानां दण्डवत्प्रायश्चित्तमूहनीयम् । दण्डतारतम्यमाह याज्ञवल्क्यः । दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैरिति । ततश्च मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणाधिकं क्षत्रियान्न्यूनमध्यर्द्धद्वादशवार्षिकं ज्ञेयम् । तथा प्रतिलोमजानामपि प्रायश्चित्तमूहनीयम् । तथाश्रमिणामपि द्वैगुण्याद्याहाङ्गिराः ।

गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि ।
शौचवच्छोधनं कुर्युरर्वाक् ब्रह्मनिदर्शनादिति ।

शौचवदित्यनेन

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।

त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणमिति ज्ञापितम् । शोधनं प्रायश्चित्तम् । ब्रह्मदर्शनं तत्साक्षात्कारः । ब्रह्मचारिणः प्रायश्चित्तद्वैगुण्यं षोडशवर्षानन्तरम् अर्वाक् तु यमेव ।

अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव चेति ।

अङ्गिरस्मरणात् । तथा

अर्वाक् तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा ।
अर्द्धमेव भवेत्पुंसां तुरीयं तत्र योषितामिति

षोडशद्वादशाब्दयोर्बाललक्षणयोः शक्त्यपेक्षया विकल्पः । अशक्तौ पादः ।

स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा ।
पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति ।

विष्णुस्मरणात् । बालवृद्धयोः स्त्रियोः पादोऽन्यथा सर्वत्राप्यर्द्धमेव अर्वाक्त द्वादशादित्यत्र पूर्वावधिं विशेषं चाह शंखः ।

ऊनैकादशवर्षस्य पञ्चवर्षावरस्य च ।
प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सुहृज्जनः ।
अतो बालतरस्यास्य नापराधो न पातकम् ।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यत इति ।

प्रायश्चित्तमेव नास्तीति प्रायः सम्पूर्णं नास्ति किन्तु पाद एवेति दाक्षिणात्याः । तदेतत्प्रायश्चित्तं हन्तुं प्रवृत्तस्य कथं चिदनिवृत्तावपि भवति । तदाह याज्ञवल्क्यः । चरेद्व्रतमहत्वापि घातार्थं चेत्समागत इति । गौतमोऽपि । सृष्टश्चेद्ब्राह्मणवधे अहत्वापीति । हननाहननयोस्तु

त्यव्रतायोगाद्यथावर्णम् पादोनव्रतं चरेदित्यर्थः । तदेतद्धतं साक्षाद्धन्तुरेव । अनुग्राहकादीनां तु दोषतारतम्येण प्रायश्चित्ततारतम्यं कल्पनीयम् । तद्यथा । अनुग्राहकस्य नवाब्दं प्रयोजकस्य षडब्दमनुमन्तुस्सार्द्धचतुर्वार्षिकनिमित्तिकं त्र्यब्दमिति । अत एवाङ्गिराः ।

षड्भिर्वर्षैर्ब्रह्मचारी ब्रह्महा पूयते नरः ।
सुमन्तुरपि ।
तिरस्कृतोयदा विप्रो हत्वा पानं मृतो यदि ।
निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात् ।
त्रैवर्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम् ।
गच्छेद्वापि विशुध्यर्थम् तस्यापस्येति निश्चितम् ।
अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि ।
क्रोधाद्वा म्रियते यस्तु निर्निमित्तं तु भर्त्सितः ।
वत्सरांस्त्रयं कुर्यान्नरः कृच्छ्रं विशुद्धय इति ।

निमित्तिनोऽत्यन्तगुणित्वे हन्तुश्चात्यन्तनिर्गुणत्वे वार्षिकव्रतमेव ।

केशश्मश्रुनखादीनां कृत्वा तु पवनं वने ।
ब्रह्मचर्यं चरन्विप्रो वर्षेणैकेन शुध्यतीति ।

स्मरणात् । एवमेवानुग्राहकादीनामपि । येऽनुग्राहकादयस्तेषामपि प्रायश्चित्तं कल्पनीयम् । प्रयोजयितानुमन्ताकर्त्ताचेति स्वर्गनरकफलेषु कर्मसु भागिनो यश्चारभते तस्मिन् फलविशेष इत्यापस्तम्बस्मरणात् । एवमन्येषामपि पातकेष्वनुग्राहकादीनां प्रायश्चित्तमूह्यम् ।

इदानीं निमित्तान्तरेऽपि ब्रह्महत्याव्रतातिदेशमाह ।

**सवनस्थां स्त्रियं हत्वा ब्रह्महत्या व्रतं चरेत् ॥**

सवनं सोमयागस्तत्र दीक्षितां स्त्रियं हत्वा पूर्वोक्तं ब्रह्महत्याव्रतं कुर्यात् । अत्र स्त्रियमिति सामान्योपादानात् क्षत्रियवैश्ययोरपि ग्रहणम् तयोरपि सवनाधिकारात् । ततश्च यद्वर्णपुरुषवधोक्तं व्रतं तद् ब्रह्म-

हत्याव्रतेतिकर्तव्यतया कुर्यात् तत्र ब्राह्मणीवधे सम्पूर्णं ब्रह्महत्याव्रतं सेतुयात्रामेव कुर्यात् क्षत्रियादिवधे तु वैश्यं वा क्षत्रियं घातीत्यादिना षष्ठाध्यायाभिहितं विंशतिगो दक्षिणाकं कृच्छ्रद्वयं कुर्यात् अतिदेशस्योपदेशापेक्षित्वेन तदीक्षायां यस्यां स्मृतौ यद्व्रतमुपदिष्टं तस्यैवोपस्थितेः सवनस्थामित्यग्निहोत्रिण्यात्रेय्योरप्युपलक्षणम् । तथाचाङ्गिराः ।

आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव चेति ।

आहिताग्निभार्या आधाने सहाधिकारिणी । आत्रेयी त्रिगोत्रा ऋतुमती ऋतुस्नाता गर्भिण्याजन्मसंस्कृताचेति । तथा च विष्णुः । अत्रिगोत्रं वा नारीमिति । जन्मोद्वाहाभ्यां गोत्रसम्बन्धाद्द्विविधाप्यनेनैवोक्ता । वसिष्ठोऽपि रजस्वलां ऋतुस्नातामात्रेयीमाहुरत्रह्यस्यदाम्पत्यमभवतीति । अनेनापि रजस्वलामृतुस्नातां चेति द्विविधोक्ता तत्र स्नानानन्तरं षोडशदिनानि ऋतुस्नाता । अत्र ह्यस्य दाम्पत्यमभवतीति व्युत्पत्तिप्रदर्शनं वंश्याद्युदासार्थम् अन्यथा व्यर्थं स्यादिति केचित् । तन्न तेन त्वत्र नियतत्वात्ति छत्रस्यार्थवादत्वेन हेतुत्वायोगात् । यमोऽपि ।

जन्मप्रभृति संस्कारैः संस्कृता मन्त्रवच्च या ।
गर्भिणीत्वथ वा या स्यात्तामात्रेयीं विदुर्बुधा इति ।

अनेनापि द्विधैवोक्ति यद्विधात्रेयी । अत्रापि यद्वर्णामात्रेयीं हन्ति तद्वर्णपुरुषवधोक्त व्रतं कुर्यात् । गर्भहा च यथावर्णं तथात्रेयीनिषूदक इति योगिस्मरणात् । स्त्रियमित्युपलक्षणं तेन सवनस्थयोः क्षत्रियवैश्ययोरपि हनने ब्रह्महत्याव्रतं कार्यमिति सिध्यति । तथाच याज्ञवल्क्यः । यागस्थक्षत्रविट्घाती चरेद्ब्रह्महणो व्रतमिति । यागोऽत्रसोमयागः सवनगतौ च राजन्यवैश्याविति वासिष्ठे सवनसाध्यस्य तस्यैव निर्देशात् । तथा गर्भहननेऽपि ब्रह्महत्याव्रतं कार्यम् । तदाह स एव । गर्भहा च यथावर्णमिति विवाहितासु भर्त्तृनिहितं गर्भं स्त्रीपुंनपुंसकत्वेना-

ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ।
एते महापातकिन इति ।
महापातकित्वस्मरणात् । अतएव व्याघ्रः ।
मत्या मद्यममत्या वा पुनः पीत्वा द्विजोत्तमः ।
ततोऽग्निवर्णं तत्पीत्वा मृतः शुध्येत्स किल्विषादिति ।
यद्यपि, माधूकमैक्षवं सैरं तालखार्जूरपानसम् ।
मधूत्थंचैव माध्वीकं मैरेयं नारिकेलजम् ।
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्यत्विति ।
विष्णुना ब्राह्मणस्यैव मद्यनिषेधाद्

वृहद्याज्ञवल्क्येन च

कामादपि च राजन्यो वैश्यो वापि कथं च न ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यत इति ।

क्षत्रियवैश्ययोरनिषेधाच्च द्विजपदं ब्राह्मणमात्रपरमिति प्रतीयते । तथापि नराश्वमेधौ मद्यं चेत्यनेन कलौ क्षत्रियवैश्ययोरपि मद्यनिषेधा-त्त्रैवर्णिकसाधारणमिदं प्रायश्चित्तमिति बोधयितुं द्विजपदोपादानम् । अतएव मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विज इति यमवसिष्ठादि-वाक्येष्वपि तदेवोपात्तम् । अन्यथासर्वत्रविशेषलक्षणाप्रसङ्ग इत्यलम् । दशेति प्रचयशिष्टसङ्ख्यानुवादो न परिसङ्ख्या ।

यक्षरक्षः पिशाचान्नं मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नातव्यं देवानामश्नतांहविरिति मानवात् ।

यद्यपि च द्विजपदोपादानसामर्थ्यादुपनयनानन्तरमेवेदं प्रायश्चि-त्तमिति प्रतीयते तथापि नित्यं मद्यं ब्राह्मणो वर्जयेदिति निषेधस्य जात्याश्रयत्वेनानुपनीतस्यापि तद्भवत्येव । अतएव तस्य प्रायश्चित्तमाह जातूकर्ण्यः ।

अनुपेतस्तु यो बालो मद्यं मोहात् पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राताथवापितेति ।
अनुपेतत्वस्य पूर्वावधिमाह कुमारः ।
मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।

दोषस्तु वत्सरान् पञ्च ऊर्ध्वं पित्रोः सुहृद्गुरोरिति ।

शंखोऽपि । पञ्चवर्षमुपक्रम्य अतो बालतरस्यास्य नापराधो न पातकमिति । तत्रापि कृच्छ्रत्रयस्य पादः प्रायश्चित्तमित्यपरे । अत्रापि स्त्रीणामर्द्धादि पूर्ववदेव ज्ञेयम् । तासामपि ब्राह्मणत्वजातिसमवायात् । एवं बालवृद्धयोरपि मद्यवासितशुष्कभांडोदकस्याज्ञानतः पाने वृहद्यमोक्तं ज्ञेयम् ।

मद्यभाण्डं स्थितं तोयं यदि कश्चित्पिबेद्द्विजः ।
कुशमूलविपक्वेन त्र्यहत्तोरेणवर्तयेदिति ।
ज्ञानतः पाने तु वासिष्ठः ।
मद्यभाण्डस्थितंतोयम् यदि कश्चित्पिबेद्द्विजः ।
पद्मोदुम्बरविल्वानां पलाशस्य कुशस्य च ।
एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यतीति ।
अज्ञानतोऽभ्यासे विष्णूक्तम् ।

पंचरात्रं शंखपुष्पीशृतपयः पानम् । ज्ञानतोऽभ्यासे शंखोक्तम् सप्तरात्रं गोमूत्रयावकपानम् । अत्यंताभ्यासे हारीतोक्तम् । द्वादशाहं ब्राह्मीशृतपयः पानमिति । द्विजोऽत्र त्रैवर्णिकः । क्षत्रियादेरपि तन्निषेधादित्युक्तम् प्राक् ।

अथसुरापानप्रायश्चित्तमाह ।

**सुरापानम् संकृत्कृत्वा अग्निवर्णां सुरां पिबेत् ॥**
**स पावयेदथात्मानमिह लोके परत्र च ॥ ७६ ॥**

अन्नविकारोद्रवद्रव्यविशेषः सुरा । तथाच मनुः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यत इति ।

तेन पैष्ट्येव मुख्या सुरा । गौडी माध्वी तु गौणी । तथाच भविष्ये । सुरातु पैष्टीमुख्योक्ता न तस्यास्तीतरा समा इति । तत्र पैष्टी त्रयाणामपि वर्णानां निषिद्धा ।

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।

यथैवैका तथा सर्वा नपातव्या द्विजोत्तमैरिति मनुस्मरणात् ।

यद्यपि क्षत्रियवैश्ययोर्गौडीमाध्वीनिषेधो न प्रतीयते । प्रत्युतउभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनावित्यादिलिङ्गदर्शनात्पानमेव प्रतीयते तथापि द्विजातिमात्रस्य कलौ मद्यमात्रनिषेधाद्गौडीमाध्वीनिषेधोऽपि सिध्यति तथाच भविष्ये । सकृत्पीत्वा द्विजो गौडीमिति द्विजमात्रस्य गौडीपानप्रायश्चित्तमपि संगच्छते । अन्यथा विशेषलक्षणापातात् । ब्राह्मणाद्युद्देशेन च सुरापाननिषेधादुद्देश्यगतत्वेन लिङ्गमविवक्षितम् तेन च तत्स्त्रीणामपि सानिषिद्धेति सिध्यति । अतएव कुमारः । सुरापाननिषेधोऽयं जात्याश्रयइति स्थितिरिति जन्मप्रभृत्यामरणम् तत्तज्जातीयव्यक्तिमात्रस्यैव सुरानिषेधमाह । प्रायश्चित्ते तु शेषं वक्ष्यामः । तद्यथा ब्राह्मणक्षत्रियवैश्याः सकृदपि पैष्टीं सुरां पीत्वा शुध्यर्थं तामेव कथनेनाग्निसमस्पर्शां पिबेयुः तेनैहिकामुष्मिकयोः शुध्यन्ति । अथवात्रापि च मरणवैकल्पिकम् चतुर्विंशतिवार्षिकम् प्रायश्चित्तं कार्यम् ब्रह्महत्याव्रतानुवृत्तौ कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यत इति व्यासवचनात् । तदेतदग्निवर्णसुरापानमार्द्रवाससा कार्यम् । तथाच पैठीनसिः । सुरापआर्द्रवासाअग्निवर्णां सुरां पिबेदिति । तथा लोहेन पात्रेण । सुरां योऽग्निवर्णामायसेन पात्रेणताम्रेण वा पिबेदिति प्रचेतःस्मरणात् । सुरेति पयोजलगोमूत्राज्यानां सुरालक्षणम् । अतएव वृहत्पराशरः ।

सुरापस्तु सुरां तप्तां पयोवा जलमेव वा ।

तप्तगोमूत्रमाज्यं वा पीत्वा मृत्वा विशुध्यतीति ।

गोमूत्रसाहचर्याद्गव्यएव घृतपयसी वाह्ये घृतपयः साहचर्याच्च स्त्रैणमेव गोमूत्रम् इदम् च कामकृते सुरापाने । तदाह वृहस्पतिः ।

सुरापानं कामकृते ज्वलन्तीं तां विनिक्षिपेत् ।

मुखे तया विनिर्दग्धे मृतः शुद्धिमवाप्नुयादिति ।

यद्यपि मूले सकृदिति वचनात्सकृत्पान एवेदं प्रायश्चित्तमिति गम्यते । तथाप्यांगिरसे सुरापानं सकृत्कृत्वाप्यग्निवर्णां सुरां पिबेदित्यपि- नाभ्यासेऽप्येतदेवेत्युक्तम् । अतएव वसिष्ठः । अभ्यासे तु सुरापाग्नि- वर्णां तां पिबेद्द्विजइति । तथा कामतो गौडीमाध्व्योरसकृत्पानेऽप्येतदेव । तथा भविष्ये ।

गौडीमाध्व्योस्तथाभ्यासे प्राणान्तिकमुदाहृतम् ।

अभ्यासेत्वसुरापाने तामेवाग्निनिभां पिबेदिति ।

तथाज्ञानत इत्यर्थः । असुरापास्त्रिविधसुराव्यतिरिक्तस्य मद्यस्या- प्यभ्यासेतदेवाग्निवर्णां पिबेदित्यर्थः । तदेतद्ब्राह्मवचनेनोपपादितमध- स्तात् । अकामतः सकृत्सुरापाने तु महापातकसामान्यप्रायश्चित्तं सेतु- दर्शनमेव कार्यम् । तथाच पद्मपुराणे ।

एवं संस्तूयमानस्तु देवदेवो महेश्वरः ।
उवाच राघवं वाक्यं भक्तिनम्रं पुरःस्थितम् ।
त्वयाचेह कृते स्थाने मदीये रघुनन्दन ।
आराध्यमाना ये रामं पश्येयुरिह सागरे ।
महापातकयुक्ता ये तेषां पापं विनंक्ष्यतीति ।

अत्रापि पूर्वोक्तरीत्या सेतुयात्रा तुल्यकृच्छ्राब्दशाब्दव्रतं वा कार्यम् । तदाह वृहत्पराशरः ।

जटी वा वालवासा वा ब्रह्महत्याव्रतं चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनरिति ।

अकामतोऽभ्यासे तु विधेः प्राथमिकात्तस्माद्द्वितीये द्विगुणं भवे- दिति न्यायेनास्यैव द्वैगुण्यादि कल्प्यम् । अज्ञानतः पानोत्तरं छर्दने तु त्रैवार्षिकव्रतं कार्यम् ।

एतदेव व्रतं कुर्यान्मद्यपः छर्दने कृते ।
पञ्चगव्यं च तस्योक्तं प्रत्यहं कायशोधनमिति व्यासवचनात् ।

मध्यमत्र पैष्टी सुरा एतदेव प्रक्रमात्त्रैवार्षिकमित्यर्थः । कामतो-गौडीमाध्व्योः सकृत्पाने विशेषो भविष्ये ।

सकृत्पीत्वा द्विजोगौडीमज्ञानात्सुरसत्तम ।
कृच्छ्रातिकृच्छ्रौ विहितौ घृतप्राशनमेव च ।

द्विजोऽत्र त्रैवर्णिकइत्युक्तं प्राक् अत्राप्यकामतोऽभ्यासे विधेः प्राथमिकादिति न्यायेन कृच्छ्रातिकृच्छ्रघृतप्राशनानामेव द्विगुण्यादि कल्पनीयम् । अनन्यौषधसाध्यव्याध्युपशमार्थं पाने तु वृहस्पति- ।

गौडीमाध्व्यौ सुरां पैष्टीं पीत्वा विप्रः समाचरेत् ।
तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमादिति ।
सुरासंसृष्टशुष्करमात्रभक्षणे तु मनुः ।
अज्ञानात्प्राश्य विण्मूत्र सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णाद्विजातय इति ।

सुरासंसृष्टोपलभ्यमानगन्धरसात्रभक्षणे तु सुरापानप्रायश्चित्तमेव । संसर्गेऽपि सुरात्वापायात् । आज्यत्वस्येव पृषदाज्ये । शुष्कसुराभाण्डोदकपाने कर्दनं घृतप्राशनमहोरात्रोपवासश्चेति शातातपोक्तं ज्ञेयं तस्यैव पर्युषितस्य पाने बौधायनः ।

सुरापानस्य यो भाण्डेष्वपः पर्युषिताः पिबेत् ।
शंखपुष्पीविपक्वं तु क्षीरं स तु पिबेत्त्र्यहमिति ।

तस्येवाकामतोऽभ्यासे मानवं पञ्चरात्रं शंखपुष्पीशृतपयःपानम् । कामतः पाने वैष्णवम् सप्तरात्रं शंखपुष्पीशृतपयःपानम् । कामतोऽभ्यासे वृहद्याम्यं द्वादशाहं क्षीरेण ब्राह्मीसुवर्चलापानमिति सोमपस्य सुरापमुखगंधाघ्राणे मनुः ।

ब्राह्मणस्तु सुरापस्यगन्धमाघ्राय सोमपः ।
प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यतीति ।

असोमपस्य तु गौतमः । गन्धाघ्राणे सुरापस्य प्राणायामो घृत प्राशनंचेति । साक्षात्सुरागन्धाघ्राणस्य तु घ्रातिरघ्रेयमद्ययोरिति जातिभ्रंशकरत्वात् ।

जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।
चरेत्सांतपनं कृच्छ्रं प्राजापत्यमनिच्छयेति ।

मनूक्तं द्रष्टव्यम् । स्त्रीणां त्वर्द्धव्रतविधानान्मरणांते चार्द्धत्वासंभवान्मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रताद्र्धं द्वादशवार्षिकं कल्प्यम् । विशेषान्तरं त्वत्र दशमाध्याये निरूपितम् । एवं बालवृद्धयोरप्यर्द्धपादादि ज्ञेयम् । द्वादशवार्षिकस्यैवात्राप्यर्द्धपादादीत्यन्ये । अन्यत्र तूक्तव्रतस्यैवार्द्धपादादीति । तथा ब्रह्मचार्यादीनामाश्रमिणां पूर्ववद्द्विगुण्यादि ज्ञेयम् । प्रयोजकादीनां चात्र प्रायश्चित्तं पूर्ववदेव । पतितोपक्रमे पातकसंयोजकाच्चेति गौतमेन सामान्यतः सर्वपातकप्रयोजकानां पतितत्वाभिधानात् ।

अथ सुवर्णस्तेयप्रायश्चित्तमाह ॥

**अपहृत्य सुवर्णं तु ब्राह्मणस्य ततः स्वयम् ।**
**गच्छेन्मुसलमादाय राजानं स्ववधाय तु ॥ ७७ ॥**
**हतः शुद्धिमवाप्नोति राज्ञाऽसौ मुक्तएव च ॥**

ब्राह्मणस्वामिकं सुवर्णमपहृत्य स्वयमेव स्ववधाय मुसलमादाय राजानं गच्छेत्तेनैव मुसलेन राज्ञा हतो मुक्तो वा शुद्धिं प्राप्नोति । तदेतत्सविशेषमाह शंखः सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा आयसं मुसलमादाय राजानमुपतिष्ठेदिदं मया पापं कृतमनेन मुसलेन घातयस्वेति स राज्ञः शिष्टः पूतो भवतीति । मुसलमित्युपलक्षणम् । अतएव वृहत्पराशरः ।

असिं वोभयतस्तीक्ष्णमायसं दण्डमेव वा ।
खादिरं लगुडं वापि हन्यादेकेन तं नृप इति ।
हननं च राज्ञा सकृत्कार्यं तेन मृतो जीवन्वापि शुध्यतीति ।

तथाच यमः ।

तस्मात्तन्मुसलं गृह्यात्कृतापराधेन भूपतिः
सकृद्धन्यान्मृतो वापि जीवन्वापि विशुध्यतीति ।

यदा स्वशक्त्या राजा हन्तुमसमर्थस्तदा वसिष्ठः । स्तेनः प्रकीर्णकेशो राजानमभियाचेत ततस्तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनात्मानं प्रमापयेन्मरणात्पूतो भवतीति औदुम्बरं ताम्रमयं यदि तु कथञ्चित्कृपालुना राज्ञा पुनर्मैवं कार्षीर्गच्छेत्युक्त्वा मुच्यते तदाप्यसौ शुद्ध्यत्येव । हतो मुक्तोऽपि वा शुचिरिति योगिस्मरणात् । पूतो वधमोक्षाभ्यामिति गौतमस्मरणाच्च । नचैवमकारणिकशुध्द्यापात इति वाच्यम् । विप्रवाक्यवद्राजवाक्यस्यैव शुद्धिकारणत्वात्, यतोऽस्य सर्वदेवमयत्वमाह मनुः ।

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ।
यस्मादेषा सुरेन्द्राणां मात्राभ्योनिर्मितो नृपः ।
तस्मादभिभवत्येव सर्वभूतानि तेजसा ।
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठतीति ।

अतएव सद्यः शौचमक्रमे यस्य चेच्छति पार्थिव इति मनुनैव राजवाक्यस्य शोधकत्वमाविष्कृतं तद्बुमतेऽपीति । नच तत्रानुग्रन्थापेक्षया तथेत्यास्तां सत्यं पक्षेऽपि तथा तावतापि मुक्तस्य शुध्द्युपपत्तेः । न चानग्निनस्वी राजेति गौतमवाक्यविरोधात्तस्य लोभादिविषयत्वात् । स्वयमिति वचनात् स्वयं गमने ताडनमेव दण्डार्थं प्रायश्चित्तार्थं च भवति । अतएव भविष्ये ।

स्वयं गमनपक्षे तु ब्राह्मणस्य नृपं प्रति ।
दण्डस्ताडनमेव स्यादशक्तौ तत्तयोर्गुरेति ।
बलादानयने तु दण्डताडनयोः समुच्चयः ।

तथाच तत्रैव ।

आनीयते बलाद्यस्तु स्तेनोवै पार्थिवं प्रति ।
प्रायश्चित्तं तु तस्य स्यात्तुण्डश्च सुरसत्तमेति ।

दण्डस्वरूपमाह कात्यानः । सुवर्णस्य शतं स्तेनो वधार्हो दण्डम-

हन्तीति । यद्यपि सुवर्णस्तेयकृद्विप्र इति मनुना ब्राह्मणसुवर्णहरणं द्विजातीनां महापातकमिति व्यवनेन च क्षत्रियादय इति शूद्रस्य परिहृतः तथापि चत्वारो वर्णा इति भविष्यवचनात्सर्वेषामिदं महापातकम् । तत्र ब्राह्मणस्य वधतपसोर्विकल्पः । सुवर्णस्तेयकृद्विप्र इत्युपक्रम्य सकृद्धन्यात्तु तं स्वयमिति सर्वनाम्ना प्रकृतविप्रपरामर्शेनैव मनुना वधविधानात् । ब्राह्मणस्तपसैव वेति तयोर्विधानाच्च नच वधेन शुध्यति स्तेनइति सामान्यविषयेण वधेन ब्राह्मणस्तपसैववेति विशेषविषयस्य तपसो विकल्पानुपपत्तिः ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय वेतिवदिति वाच्यम् । स्तेनो ब्राह्मण इति विशेषणविशेष्यभावेनैकवाक्यतया विकल्पोपपत्तेः सामान्यविशेषतया वाक्यभेदानङ्गीकारात् । वधतपसोर्द्वयोरपि सामान्यविषयत्वे ब्राह्मणपदानर्थक्याच्च । नचैकवाक्यतायामपि स्तेनपदानर्थक्यम् । निमित्तविशेषसमर्पणेन सार्थक्यम् । विकल्पश्च व्यवस्थितः । तथाच भविष्ये ।

निर्गुणस्तु यदा विप्रः स्वयं स्तेयं करोति च ।
प्रायश्चित्तमिदं कुर्यात्तदा शुध्यर्थमात्मनः ॥
गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वेति ॥

अत्र मुसलघातस्यनिर्गुणविषयत्वात्तपः सगुणविषयमर्थत एव सिद्धम् । श्रेष्ठविप्रसुवर्णहरणे तु मरणे प्रकारविशेषस्तत्रैव ।

श्रेष्ठविप्रसुवर्णं तु प्रभूतमपहृत्य च ।
सविशेषानुबंधं च ब्राह्मणोद्भूतवल्लभः ॥
प्रायश्चित्तमिदं कुर्यान्निबोध गदतो मम ।
लोमहीनोघृताक्तश्च आत्मानं पावके दहेदिति ॥
क्षत्रियादीनां तु वध एव । तथाच तत्रैव ।
अपहृत्य सुवर्णं तु ब्राह्मणस्य सुराधिप ॥
पञ्च निष्कप्रमाणं तु राजानं क्षत्रियो व्रजेत् ।
तस्मादौदुंबरं शस्त्रं प्राप्यात्मानं हनेत्तु ॥

निमीलिताक्षो जठरे स्वशक्त्या मरणाच्छुचिः ।

इदं तु जातिमात्रब्राह्मणसुवर्णहरणे गुणाढ्यस्य तु हरणे विशेषस्तत्रैव ।

क्षत्रादयस्त्रयो वर्णा निर्गुणाद्व्रततत्पराः ।
गुणाढ्यस्य तु विप्रस्य पञ्च निष्कान् हरन्ति ये ॥
निष्कालकादिविधिना दग्ध्वात्मानं तु पावके ।
शुध्येयुर्मरणाद्वीर तद्विपर्यात्य तु तस्य वै इति ॥

अनेन क्षत्रियादीनां पञ्चनिष्कप्रमाणविप्रसुवर्णहर एव महापातकं नार्वागिति सिद्धम् । चतुःसौवर्णिकोनिष्कः । निष्कं सुवर्णश्चत्वारति स्मरणात् । नचापकर्तुः सगुणनिर्गुणत्वाभ्यां परिमाणभेदो व्यवस्थाप्यइति वाच्यम् । तस्य प्रायश्चित्ततारतम्यप्रयोजकत्वात् पूर्ववाक्ये गुणविशेषाश्रवणाच्च नचोत्तरेणोपसंहारोनिमित्तभेदे नैमित्तिकभेद प्रतिपादनेनोभयोरपि विशेषरूपत्वात् । ब्राह्मणस्य तु सुवर्णाधिकहरण एव महापातकम् ।

सुवर्णमात्रहरणे वत्सरः परिकीर्तितः ।
ऊर्ध्वं प्राणान्तिकं ज्ञेयं ब्राह्मणे नचतद्व्रतमिति ।

षड्विंशन्मते सुवर्णाधिकहरणएव प्राणान्तिकव्रतविधानात्सुवर्णहरणे वार्षिकव्रतविधानाच्च । नच शूले मन्वादिमहास्मृतिषु च सुवर्णशब्दस्यैव प्रयोगादत्र सुवर्णशब्दः किञ्चिन्न्यूनसुवर्णपरस्तदधिकश्च सुवर्ण एवेति न विरोधइति वाच्यम् । तस्य जातिमात्रवचनत्वे सकृदुच्चरित स्यानिलिङ्गद्वयविरोधाद्परिमाणविशिष्टहेमवचनत्वे पलादिशब्देष्वप्यतिप्रसङ्गेनाऽन्यत्र प्रयोगविरोधात् । नच गौणत्वं प्रमाणाभावात् । या तु मनुयाज्ञवल्क्यादीनां हेमरजतताम्राण्यभिप्रेत्य सुवर्णधरणपरादिशब्दपरिभाषा सापि नात्रोपतिष्ठते । सुवर्णशब्दप्रयोगनियमाभावात् । तथाहि याज्ञवल्क्यएव तावत्स्वकृतपरिभाषापरिहारेण ब्राह्मणस्वर्णहारी तु राज्ञे

मुसलमर्पयेदिति स्वर्णशब्दं प्रयुक्त्वाचसुवर्णशब्दम् । अतएवाङ्गिरानिमित्तवाक्येऽपि गुरुतल्पीसुरापश्चरुक्मस्तेय्यथ विप्रहेति रुक्मशब्दमेव प्रयुक्तवात् । विश्वामित्रोऽपि ब्राह्मणस्वर्णहरणं न कर्तव्यं कदाचनेति । शंखेऽपि । रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पग इति । न च परिमाणविशेषाऽनाकलितानां सामान्यानामेषां विशेषेण सुवर्णशब्देनोपसंहारः। सुवर्णस्तेयकृद्विप्र इत्यादौ समासेनास्पष्टलिङ्गस्पृष्टलिङ्गस्य विशेषत्वानवधारणात् । एतेन मूलस्थमपि द्वितीयांतं सुवर्णपदं व्याख्यातम् । तस्माज्जातिवचनानामेषां परिमाणाकांक्षायां षड्त्रिंशन्मतेन तत्पूरणमिति साधीयः, तथाच परिमाणभेदेन प्रायश्चित्तभेदोऽपि तत्रैव ।

वालाग्रमात्रेऽपहृते प्राणायामं समाचरेत्
लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ।
राजसर्षपमात्रे च प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये ।
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम् ।
सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः ।
कृच्छ्रं सांतपनं कुर्यात्तत्पापस्य विशुद्धये ।
अपहृत्य सुवर्णस्य माषमात्रं द्विजाधमः ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ।
सुवर्णस्यापहरणे वत्सरं यावको भवेत्
ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतमिति ।

सान्तपनं द्वितीयदिनं पूर्वोक्तं तदेव कृष्णलचतुष्टयपर्यन्तं द्विगुण्यादिनावर्त्तनीयम् । त्रैमासिकमेव च प्रतिमाषकमष्टादशाष्टादशदिनवृध्यायोज्यम् । इदं च स्तेयप्रायश्चित्तमपहृतधनमेकादशगुणं स्वामिने दत्त्वैव कार्यम् ।

स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः ।
स्वामिनोऽपहृतं देयं हृता त्वेकादशाधिकमिति स्मरणात् ।

अत्राशक्तावपहृतमेव देयम्। तथाभविष्ये।
यद्यस्यापहृतं द्रव्यं ततस्तस्यैव निवेदयेत्।
प्रायश्चित्तं ततः कुर्यादेवं शुद्धिमवाप्नुयादिति।
स्वाम्यभावे विशेषमाह नारदः।
ब्राह्मणस्य तु यद्देय सान्वयस्य च नास्ति चेत्।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु।
यदा तु न सकुल्यः स्यान्नच्व सम्बन्धिबान्धवाः
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेदिति।
अपहृतद्रव्यनाशे तु तत्सम द्रव्यान्तरं तन्मूल्यं वा दद्यात्।
प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्।
तस्याऽनुरूपं मूल्यंवेति।

गोवधे लिङ्गदर्शनात्। सर्वथाऽशक्तौ यथाकथंचित्स्वामितुष्टिमुत्पादयेत्।

यो यस्य हिंस्याद्द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिमिति मानवात्।

स्वाम्यभावेन तुष्ट्यनुत्पादने द्रव्याभावे च व्रतमेव चतुर्गुणं कार्यम्। अभावे कांचनस्य स्याद्व्रतमेव चतुर्गुणमिति विष्णुस्मरणात् यत्तु चतुर्विंशतिमते।

आत्मतुल्यसुवर्णं वा दद्याद्विप्रायवापुमान्।
तीर्थानि वा भ्रमेद्विद्वान्स्वतस्तेयाद्विमुच्यतइति।

तत्सार्वभौमविषयं तत्राधिकारकाश्वमेधसमभिव्याहारात्। क्रतुशब्देन च तस्यैवोक्तत्वात्। तथाच विष्णुः।

अश्वमेधेन शुध्यन्ति महापातकिनस्त्विवमे।
पृथिव्यां सर्वतीर्थानां तथा ऽनुसरणेन चेति।
एतच्च मरणान्तिकं कामकृतसुवर्णस्तेयविषयम्।
मरणान्तं हि यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः।
तत्तु कामकृते पापे विज्ञेयं नात्र संशय इत्यङ्गिरः स्मरणात्।

नन्वामीत्येवास्तु । न चाग्नीनामित्यादौ नित्यत्वात् पूर्वं दीर्घे कृते नुट् न स्यात् । वचनसामर्थ्यात् । न च नृणामित्यत्र नृचेति धाता धातृणामित्यादिमन्त्रे छन्दस्युभयथेति च विकल्पेन दीर्घाभावे चारितार्थ्यम् । यदि छन्दसि ऋकारान्तभिन्नस्य नामि दीर्घाभावो न दृश्यते तदा ऋन्नद्याप इत्येव सिद्धेरिति चेन्न । नोपधाया इत्युत्तरार्थत्वात् । तेन चर्मणामिति दीर्घाभावः सिद्ध इति दिक् ।

**न तिसृचतसृ । ६ । ४ । ४ ॥**

एतयोर्नामि दीर्घो न स्यात् ॥ तिसृणाम् । चतसृणाम् ।

**छन्दस्युभयथा । ६ । ४ । ५ ॥**

नामि दीर्घो वा । धातॄणाम् । धातृणाम् । बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति ।

**नृ च । ६ । ४ ६ ॥**

नृ इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम् । नॄणाम् ।

**नोपधायाः । ६ । ४ । ७ ॥**

नान्तस्योपधाया दीर्घः स्यान्नामि । नलोपः । पञ्चानाम् । परमपञ्चानाम् । सप्तानाम् । अष्टानाम् । नः किम् । चतुर्णाम् । उपधायाः किम् । पञ्चानामित्यादौ पकाराकारस्य मा भूत् । नामः प्रत्ययत्वेनाङ्गविशेषणत्वात् ॥

**सर्वनामस्थाने चासम्बुद्धौ । ६ । ४ । ८ ॥**

नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे ॥ राजा । राजानौ । राजानः । राजानम् । राजानौ । सामानि

तिष्ठन्ति । सामानि पश्य । सर्वनामस्थाने किम् । राजनि । असम्बुद्धौ किम् । हे राजन् ॥

### वा षपूर्वस्य निगमे । ६ । ४ । ९ ॥

नान्ताङ्गावयवस्य षपूर्वस्याच उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ ऋभुक्षणम् । ऋभुक्षाणम् । निगमे किम् । तक्षा । तक्षाणौ ॥

### सान्तमहतः संयोगस्य । ६ । ४ । १० ॥

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे ॥ श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । श्रेयांसौ । श्रेयांसि । यशांसि । शिरांसि । महान् । महान्तौ । महान्तः । महान्तम् । महान्तौ । महान्ति । उपधाग्रहणं पूर्वत्वमात्रोपलक्षणम् । पारिभाषिकार्थस्येहासम्भवात् । सर्वनामस्थाने इति च सान्तसंयोगविशेषणम् । तेन हंसशिरांसीत्यादौ न दोषः । सान्तसंयोगोऽपि प्रातिपदिकस्यैव न तु धातोर्महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन् । सुहिंसौ ॥

### अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् । ६ । ४ । ११ ॥

अप्शब्दो नित्यं बहुवचनान्तः । आपः । नित्यात् परादपि नुमः प्राग्दीर्घः । प्रतिपदोक्तत्वात् । स्वाम्पि । निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । तृन् । कर्ता । कर्तारौ कटस्य । स्वसारौ । नप्तारौ । नेष्टारौ । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे निय-

मार्थम् । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात् ॥

**इन्हन्पूषार्यम्णां शौ । ६ । ४ । १२ ॥**

एषां शावेवोपधाया दीर्घो नान्यत्र ॥ दण्डीनि । वाग्मीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि । अन्यत्र दण्डिनौ । वृत्रघ्नौ । पूषणौ । अर्यमणौ । उपधादीर्घमात्रापेक्षया नियमविज्ञानात् वृत्रहायते वृत्रहणीत्यत्राकृत्सार्वधात्वोरित्यनुनासिकस्य क्वीत्यनयोर्भावाभावौ सिद्धौ ॥

**सौ च । ६ । ४ । १३ ॥**

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे ॥ दण्डी । वृत्रहा । पूषा । अर्यमा । असम्बुद्धौ किम् । हे दण्डिन् । वृत्रहन् । पूषन् । अर्यमन् । योगविभाग उत्तरार्थः ।

**अत्वसन्तस्य चाधातोः । ६ । ४ । १४ ॥**

अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे ॥ परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घस्ततो नुम् ॥ धीमान् । कृतवान् । भातेर्डवतुः । डित्वसामर्थ्याद-भस्यापि टेर्लोपः । भवान् । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः भवतीति भवन् । धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गोमानिवाचरति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । उगिदचामिति सूत्रे अधातोरित्यस्याधातुभूतपूर्वस्यापि नुमर्थत्वस्य वक्ष्यमाणत्वान्नुम् । गोमान् । वेधाः । चन्द्रमाः । सुपयाः । सुयशाः । सुस्रोताः । अधातोः किम् । सुष्ठु वस्ते सुवः । पिण्डं ग्रसते इति पिण्डग्रः । ग्रसु ग्लसु अदने । असम्बुद्धौ किम् । हे धीमन् । गोमन् । वेधः ।

## अनुनासिकस्य क्विझलोः क्ङिति । ६ । ४ । १५ ॥

अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति ॥ प्रशान् । प्रतान् । शान्तः । शंशान्तः । तन्तान्तः । यङ्लुगन्तात् । अनुनासिकस्य किम् । ओदनपक् । पक्वः । पङ्क्तिः । क्विझलोः किम् । गम्यते । रम्यते । क्ङिति किम् । गन्ता । रन्ता ।

## अज्झनगमां सनि । ६ । ४ । १६ ॥

इह सनीत्येव दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घस्ततो हनिगम्योरिति सिद्धेऽज्ग्रहणमतिरिच्यमानं प्रकृतिभेदेन गमेर्विशेषणम् ॥ अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । चिचीषति । तुष्टूषति । चिकीर्षति । जिहीर्षति । जिघांसति । सनि चेतीणादेशो गमिरिष्यद्गिगतीगादेशश्च । कर्मणि तङ् । गमेरिट् परस्मैपदेष्वित्युक्तेर्नेट् । जिगांस्यते । अधिजिगांस्यते । इङश्चेतीङादेशश्च । अधिजिगांसते । अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः । जिगंस्यते । संजिगंसते ॥ झलादौ किम् । इणादेशगमेर्जिगमिषति । अधिजिगमिषति ॥

## तनोतेर्विभाषा । ६ । ४ । १७ ॥

अस्योपधाया दीर्घो वा स्यात् झलादौ सनि ॥ तितांसति । तितंसति । तितनिषति ॥

## क्रमश्च क्त्वि । ६ । ४ । १८ ॥

क्रम उपधाया वा दीर्घः स्याज्झलादौ क्त्वि परे ॥ क्रान्त्वा । क्रन्त्वा । क्रमित्वा ॥

## च्छ्वोः शूडनुनासिके च । ६ । ४ । १९ ॥

'सनकारस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति ॥ विश्नः। प्रश्नः। स्योनः। सिवेरौणादिको नः। पृच्छतीति प्राट्। अक्षद्यूः। पृष्टः। पाप्रष्टः। द्यूतः। स्यूतः। खव भूतप्रादुर्भावे क्र्यादिः। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। वान्तोऽयमित्येके। खौनाति। सतकारस्य किम्। अन्तरङ्गत्वात् पूर्वं तुकि कृते विशिष्टस्य यथा स्यात्। पुतं छादयतीति पुच्छम्। कर्मण्यण्। पृषोदरादित्वाद्धातूपपदयोष्टिलोपः। पुच्छमुदस्यतीति णिङ्। ततः क्विप्। सतकारस्य छस्य शकारे कृते षत्वजश्त्वे चोत्पुडिति च यथा स्यात्। केवलस्य छस्य शकारे कृते तस्य च संयोगान्तत्वाल्लोपे उत्पुदिति मा भूत्॥ तथा वाञ्छतेरप्रत्यये वान् वाञ्छाविति यथा स्यात् वान् वांशाविति मा भूत्। क्विति किम्। द्युभ्याम्। ननु च भोः किमर्थं क्वितीत्यनुवर्त्तयसि। न किं द्युभ्यामित्यत्र परत्वादूठि कृते पुनः प्रसङ्गविज्ञानादेकदेशविकृतस्यानन्यत्वाद्दिव उदिति तपरत्वान्मात्राकालो भविष्यति। इत्थं सति व्रश्चादिसूत्रे छग्रहणं न कर्त्तव्यमिति। लाघवञ्चैतत्कृतशस्यैव षत्वेन सिद्धेः। हन्तैतावन्तमेव तु विशेषमिह प्रतिपादयन् भगवान् यकारवकारान्तानामूठ्भाविनां यङ्लुग् नास्तीत्यत्रैव सूत्रे भाष्ये ध्वनितवान्। कैयटोऽपि स्पष्टीकृतवान्न चेदं ध्वनयिष्यद्दिवेर्यङ्लुकि देद्योति देदेतीत्यूठो भावाभावाभ्यां मन्ये नूनं महान्विशेषोऽभविष्यत्॥ इदं च च्छ्वोरिति यत्रोठ् तद्विषयकम्। ज्वरेत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम्। माधवादिसम्मतञ्च। मव्य बन्धने। अयं यान्त ऊठ्भावी। तेवृ देवृ देवने इत्यादयो वान्ताः॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च । ६ । ४ । २० ॥

ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये ॥ अत्र क्ङितीति नानुवर्तते । अवतेस्तुनि ओतुरिति दर्शनात् । अनुनासिकग्रहणञ्चानुवर्तते । अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात् । जूः । जूरौ । जूर्तिः । तूः । तुरौ । तूर्तिः । स्रूः । स्रुवौ । स्रूतिः । ऊः । उवौ । ऊतिः । मव बन्धने । मूः । मुवौ । मूतिः । यङ्लुकि ईडभावे ऊठि णिति गुणः । मामोति । मामूतः ।

## राल्लोपः । ६ । ४ । २१ ॥

रेफात् परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये परे ॥ मुर्छा । मूः । मुरौ । मूर्त्तिः । मोमोर्ति । मोमूर्तः । त्वर हिंसायाम् । तूः । तुरौ । तूर्तिः । तोतोर्ति । तोतूर्त्तः । तोर्थोर्ति । दोधोर्ति । वलि लोपेन सिद्धे वलोपविधानमूठो बाधनार्थम् ॥

## असिद्धवदत्राभात् । ६ । ४ । २२ ॥

असिद्धवदित्ययमधिकारो वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामः आ अध्यायपरिसमाप्तेस्तदसिद्धवद्भवतीन्त्येवं वेदितव्यम् । आभादिति विषयनिर्देशः । भसंशब्दनमभिव्याप्य यदुच्यते तत्र कर्तव्ये अत्रग्रहणं समानाश्रयत्वप्रतिपत्त्यर्थम् । तच्चेदत्र भवति यथान्यदाभाच्छास्त्रीयं विधीयते तदाश्रयमेवासिद्धवद्भवतीत्यर्थः । व्याश्रयन्तु नासिद्धवद्भवतीत्यर्थः । एधि । शाधि । अत्रैत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति तयोरसिद्धत्वाद्भवति । आगहि । बहुलं छन्दसीति शपो लुक् । जहि । अनुनासिकलोपे जभावे च कृतेऽतोहेरिति लुक् प्राप्नोति । असिद्धत्वान्न भवति । आभात् किम् । अभाजि । रागः । अत

उपधाया इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति। अचग्रहणं किम्। पपुषः। चिच्युषः। लुलुवुषः। वसोः संप्रसारणमाल्लोपे यणि उवङि च कर्तव्ये नासिद्धम्। आल्लोपादीनि हि वसौ वस्वन्तस्य विभक्तौ सम्प्रसारणमिति समानाश्रयत्वाभावात्। समानाश्रयत्वं च तत्प्रयोगे प्राप्तासिद्धत्वाश्रयशास्त्रीयशद्वरूपनिमित्तसमुदायापेक्षयाऽन्यूनानतिरिक्ताश्रयकत्वम्। तत्र पपुष इत्यादौ न्यूनः। चाखायितेत्यादावधिकः। तत्र यङ्निमित्तं ये विभाषेत्यात्वं तृन्निमित्ते यस्य हल इति लोपे नासिद्धम्। अतिरिक्तमपि पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितं चेत्तदपि समानाश्रयमेव अत एव चिणो लुक् चिणो लुक्येवासिद्ध इति संगच्छते। स्त्री इयतीत्यत्र यस्येति लोपापेक्षया स्त्रिया इतीयङि अधिकस्य स्त्रीशब्दस्यापेक्षणाद् व्याश्रयत्वमिति दिक्। नन्वेवमपि सम्प्रसारणस्य बहिरङ्गासिद्धत्वं कस्मान्न भवति। आभाच्छास्त्रीयान्तरङ्गपरिभाषायां प्रवर्तमानायां संप्रसारणादीनामनेनैवासिद्धत्वादेव। नन्वेवं विप्रतिषेधोऽपि न स्यात्। तथा च सातः सातवानित्यत्रानुनासिकलोपापेक्षया जनसनेत्यात्वं विप्रतिषेधेनेति सिद्धान्तो भज्येतेति चेन्न। विप्रतिषेधेन हि व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवति। घुमास्थेत्यत्र हल्ग्रहणाज्ज्ञापकात्। तद्धि गोद इत्यादौ परत्वादीत्वं मा भूदित्यर्थम्। यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणाभावे सत्यपीत्वे तस्यासिद्धत्वाल्लोपेन सिद्धे तद्व्यर्थमेव। न च पुनरीत्वं पुनर्लोप इति चक्रकेणाव्यवस्थापत्त्या शास्त्रस्य व्यवस्थाकारित्वेन लोपेनावस्थानमित्यस्य वक्तुं शक्यत्वेऽपि विनिगमनाविरहादीत्वेनैवावस्थानमिति कुतो नेत्यापत्तिवारणार्थं हलादावीत्वं यथा स्यादजादौ मा भूदिति व्यवस्थार्थं हल्ग्रहणं चरितार्थमिति

वाच्यम् । अविशेषेणैवेत्वं विधाय तस्याजादावाल्लोपस्यापवादस्य विधानेनैवेष्टसिद्धेः । तथाहि आतो लोप इटि च ततः घुमास्थागापाजहातिसां लोपो भवति इटि च अजादौ क्ङितीति । किमर्थं पुनरिदं ईत्वं वक्ष्यति तद्बाधनार्थम् । ततः ईत् ईच्च भवति घ्वादीनाम् । अच क्ङितीत्यपेक्ष्यते । ततः एर्लिङि वाऽन्यस्यसंयोगादेः। न ल्यपि। मयतेरिदन्यतरस्याम्। ततः यति यति च इद्भवतीति ॥ वस्तुतस्त्वेकस्यासिद्धत्वे सिद्धेन सह तुल्यबलत्वाभावाद्युक्तो विप्रतिषेधाभावः । द्वयोरपि परस्परमसिद्धत्वं तु तुल्यबलत्वात्ततः कुतो न विप्रतिषेधः । परस्परदृष्ट्या परस्परमसिद्धत्वेन पर्यायप्रसङ्गे नियमार्थं शास्त्रप्रवृत्तेर्दुर्वारत्वाच्च । न च कार्यकालपक्षे विप्रतिषेध इति परिभाषाया आभीयत्वेन तद्दृष्ट्योभयोरप्यसिद्धत्वाद्विप्रतिषेधानुपपत्तिः । द्वयोः शास्त्रयोः समानाश्रयत्वे तदाश्रयाश्रयकस्यापि समानाश्रयत्वमिति वाच्यम् । विप्रतिषेधे इत्यस्या यथोद्देशत्वस्यैव सत्वात्। कार्यकालपक्षेऽपि स्वदेशत्यागाभावेनाभीयत्वाभावाच्च । आभीयत्वे तु तदुपस्थितिसामर्थ्यादेवासिद्धत्वबाधाच्चेति दिक् । तस्मात् सर्वथा भवतीह विप्रतिषेध इति स्थितम् ॥ नन्वस्याधिकारत्वेऽनुदात्तोपदेशेत्यत्रास्योपस्थाने सत्ययमर्थो भवति एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे । स चासिद्धो भवति । अच झलादौ क्ङित्येव निमित्ते सति यदाभीयं प्राप्नोति तस्मिन् कर्तव्ये इति । एवञ्च यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयं तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्नतु ततः पूर्वस्मिन्नपि । ततश्च छ्वसोरित्येत्वं पूर्वस्मिन्घित्वे कर्तव्ये नासिद्धं स्यादिति चेत्। भवेदयं दोषः शब्दाधिकारे । अयं त्वर्थाधिकारः। ततश्चेह आन्नलोप इति

अवधिर्निर्णीतः । स एव प्रतिसूत्रमुपतिष्ठते । अत्रापि शास्त्रासिद्धत्वमेव । तेनेधि शाधीत्यत्र स्थानिना झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं धित्वं सिध्यति । इदं पुनरिहावधेयम् । अस् तामिति स्थिते परत्वादल्लोपे तस्याभीयत्वेनासिद्धत्वात् पुनः प्रसङ्गविज्ञानेनाटि लक्ष्यभेदाल्लक्ष्ये लक्षणस्येति न्यायाप्राप्तौ प्राप्तस्याटो लोपस्य वारणाय श्नसोरल्लोप इति तपरकरणादनित्यमिदं सूत्रम् । आटोऽसिद्धत्वेनैव लोपाप्राप्तेः । तेन देभतुरित्यत्र दम्भेर्नलोपस्यासिद्धत्वेऽप्येत्वाभ्यासलोपौ सिद्धाविति दम्भेरेत्वाभ्यासलोपौ वक्तव्याविति न कर्तव्यमित्यत एकेतिसू॰ भाष्यकृतः ॥ वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ * ॥ बभूव । बभूवतुः । बभूवुः । दिदीये । दिदीयाते । दिदीयिरे ॥

## श्नान्नलोपः । ६ । ४ । २३ ॥

श्नमः परस्य नस्य लोपः स्यात् । अनक्ति । भनक्ति । हिनस्ति । सशकारग्रहणं किम् । यज्ञानां यत्नानामित्यत्र नामीति दीर्घापेक्षया परत्वान्नलोपो मा भूत् ॥

## अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४ ॥

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति । स्रस्यते । ध्वस्यते । सनीस्रस्यते । दनीध्वस्यते । अनिदितां किम् । नन्द्यते । नानन्द्यते । हलः किम् । नीयते । नेनीयते । उपधायाः किम् । नह्यते । नानह्यते । क्ङिति किम् ॥ स्रसिता । ध्वंसिता ॥ लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ॥ * ॥ विलगितः । कृच्छ्रप्राप्तिरत्रोपतापो न तु रोगः । विकपितः । शरीरविकारोऽत्र व्याधिर्न तु स्थौल्यादि । उभयत्राप्यकर्मक-

त्वात् कर्तरि क्तः ॥ आद्यः कृच्छ्रं प्राप्तः। परो व्याधितः । उपेति किम्। विलङ्घितः। विकम्पितः ॥ रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः ॥ * ॥ मृगरमणमाखेटः । रजयति मृगान् । लोपे वृद्धौ च जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्वाद् ध्रस्वः। मृगेति किम्। रञ्जयति पक्षिणः। रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन। घिनुणन्तो रागी त्यजरञ्जेति निपातनात् सिद्धः । रजकः । क्वुन् शिल्पिसंज्ञयोरित्युणादिक्वुन्नन्तः । न तु शिल्पिनि ष्वुन्नन्तः । रजकीति पुंयोगे ङीष् । क्रियासम्बन्धमात्रविवक्षायामपुंयोगे तु रजिकेत्येव । रजनं रञ्जेः क्युन्नन्तम् । स च बाहुलकाट्टित् । तेन रजनी सिद्धा । रजस्तु युरञ्जिभ्यां किदित्यसुन्नन्तम् ॥

## दंशसञ्जस्वञ्जां शपि । ६ । ४ । २५ ॥

## रञ्जेश्च । ६ । ४ । २६ ॥

एषां शपि नलोपः स्यात् ॥ दंश दशने । दशनम् । दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके तेषामप्यत्रैव तात्पर्यम् । अर्थानिर्देशस्याधुनिकत्वात् । दशति सजति । स्वजते । रजति । रजते ॥

## घञि च भावकरणयोः । ६ । ४ । २७ ॥

रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रजत्यस्मिन् रङ्गः ॥

## स्यदो जवे । ६ । ४ । २८ ॥

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ॥

**अवोदैधौद्मप्रश्रथहिमश्रथाः । ६ । ४ । २९ ॥**

अवोदः । अवक्लेदनम् । उन्देरवपूर्वस्य घञि नलोपो निपात्यते । एधः । इन्धनम् । इन्धेर्घञि नलोपो गुणश्च । ओद्मः । उन्दनम् । उन्देरौणादिके मप्रत्यये नलोपो गुणश्च । प्रपूर्वस्य हिमपूर्वस्य च श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च ॥

**नाञ्चेः पूजायाम् । ६ । ४ । ३० ॥**

पूजार्थस्य गम्यत्वेऽञ्चतेरुपधाया नस्य लोपो न स्यात् ॥ अञ्चिता अस्य गुरवः । अञ्चितमिव शिरो वहति । पूजायां किम् । उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥

**क्त्वि स्कन्दस्यन्दोः । ६ । ४ । ३१ ॥**

एतयोर्नलोपो न स्यात् क्त्वि परे ॥ स्कन्त्वा । स्यन्त्वा अवस्कन्द्य । स्यन्दित्वेतीट्पक्षे न क्त्वा सेडित्येव सिद्धम् ॥

**जान्तनशां विभाषा । ६ । ४ । ३२ ॥**

जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे ॥ भङ्क्त्वा । भक्त्वा । रङ्क्त्वा । रक्त्वा । मस्जिनशोरिति नुम् । तस्य पक्षे लोपः । मत्क्त्वा मंक्त्वा । नष्ट्वा । नंष्ट्वा । अक्त्वा । अंक्त्वा । केचिदिह झलादाविति वदन्ति । नेह । यञ्जित्वा । अनिदितामित्यतः क्ङितीत्यनुवर्त्य क्ङिति क्त्वीति व्याख्येयम् । सेट् क्त्वा च न किदिति तद्व्याख्यातारः । अत्र मूलं मृग्यम् ॥

**भञ्जेश्च चिणि । ६ । ४ ३३ ॥**

नलोपो वा स्यात् । अभाजि । अभञ्जि ॥

**शास इदङ्हलोः । ६ । ४ । ३४ ॥**

शास उपधाया इत् स्यादङि हलादौ क्ङिति च ॥ 'सर्तिशास्तीत्यङ् । अशिषत् । अशिषाताम् । शिष्टः । शिष्टवान् । मित्राणि शास्ति मित्रशीः । क्विप् चेति क्विप् । तौ शिष्टः । आवां शिष्वः । वयं शिष्मः । अङ्हलोः किम् । शासति । शशासतुः । क्ङिति किम् । शास्ति । शास्मि । शासु अनुशिष्टावित्यस्यैव ग्रहणमङ्साहचर्यात् । तेनेह न । आशास्ते । आशास्यमानः । किन्तु अङ्विधौ परस्मैपदसम्बन्धेनात्मनेपदप्रक्रियायां मा समरत मा समरेतामित्याद्युदाहरतां मते आशास्तेरप्यङ्विधौ ग्रहणं कस्मान्न अस्त्येवेति चेत् । आङः शासु इच्छायामित्यत्र कुतो नाङुदाहृतः । तस्मान्नास्तीति सत्यम् । तत्कस्मान्नेति तु विभाव्यताम् । आशासः क्वावुपसंख्यानम् ॥ * ॥ आशीः ॥

## शा हौ । ६ । ४ । ३५ ॥

शास्तेः शादेशः स्याद्धौ परे । शाधि ॥

## हन्तेर्जः । ६ । ४ ३६ ॥

हौ परे । जहि । श्तिपा निर्देशान्नेह । जङ्घहि ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । ६ । ४ । ३७ ॥

अनुनासिकेति लुप्तषष्ठीकं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे ॥ यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः ॥ तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु मनु वनु तनोत्यादयः ॥ यतः । यतवान् । यत्वा । यतिः । एवं रतः जङ्गतः इत्यादि । वनतेः वतिः क्तिन्येतत् । क्तिचि

तु न क्त्विवीति प्रतिषेधेन भाव्यम् । अन्यच तु झलादौ इटा भवितव्यमिति वृत्तिः । तनोत्यादीनाम् । ततः । ततवान् । तत्वा । ततिः । सनोतेरात्वं वक्ष्यति । एवं क्षुत इत्यादि । ङिति खल्वपि । तौ हतः । अतत । अतथाः । तनादिभ्यस्तथासोरिति सिचो वा लुक् । अक्षत अक्षथा इत्यादि । अनुदात्तेत्यादि किम् । शान्तः । वान्तः । अनुनासिकेति किम् । पक्वः । झलि किम् । गम्यते । क्ङिति किम् । यन्ता । उपदेशग्रहणं किम् । इह च यथा स्यात् । गतिः । रतिः । इह च मा भूत् । शान्तः । शान्तवान् ॥

## वा ल्यपि । ६ । ४ । ३८ ॥

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा स्याल् ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा नान्तानिटां वनादीनाञ्च नित्यम् । प्रयत्य । प्रग्म्यय । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य । आहत्य । अवमत्य । प्रवत्य । प्रतत्य ॥

## न क्तिचि दीर्घश्च । ६ । ४ । ३९ ॥

अनिटां वनतितनोत्यादीनां दीर्घानुनासिकलोपौ न स्तः क्तिचि परे ॥ यन्तिः । रन्तिः । वन्तिः । तन्तिः ॥

## गमः क्वौ । ६ । ४ । ४० ॥

अनुनासिकलोपः स्यात् ॥ अङ्गगत् ॥ गमादीनामिति वक्तव्यम् ॥ * ॥ परीतत् । संयत् । सुनत् ॥ ऊङ् च गमादीनामिति वक्तव्यमनुनासिकलोपश्च ॥ * ॥ अग्रेगूः । अग्रेभ्रूः । ङित्करणमनर्थकमन्त्यादेशेन सिद्धेः ॥

## विड्वनोरनुनासिकस्यात् । ६ । ४ । ४१ ॥

विड्वनोः परयोरनुनासिकस्यात् स्यात् ॥ अब्जाः ॥ गोजाः । विजायते इति विजावा । अग्रेगावा । अवावा । अन्येभ्योऽपि दृश्यन्त इति वनिप् ॥

**जनसनखनां सञ्झलोः । ६ । ४ । ४२ ॥**

एषामाकारोऽन्तादेशः स्यात्सनि झलादौ सनि झलादौ क्ङिति च जनी। जातः । जातवान् । जन जनने जुहोत्यादिः । तौ जजातः । सिषासति । सातः । सातवान् । असात । असाथाः । खातः । खातवान् । चङ्खातः । झलादौ किम् । जिजनिषते । सिसनिषति। चिखनिषति ॥

**ये विभाषा । ६ । ४ । ४३ ॥**

जनसनखनामात्वं वा स्याद्यादौ क्ङिति परे ॥ जायते । जन्यते । जाजायते । जञ्जन्यते । जजायात् । जजन्यात् । जायात् । जन्यात् । सायते । सन्यते । सासायते । संसन्यते । सायात् । सन्यात् । खायते । खन्यते । चाखायते । चङ्खन्यते । खायात् । खन्यात् । चङ्खायात् । चङ्खन्यात् ॥

**तनोतेर्यकि । ६ । ४ । ४४ ॥**

आकारोन्तादेशो वा स्यात् । तायते । तन्यते । यकि किम् । तन्तन्यते ॥

**सनः क्तिचि लोपश्चास्यान्यतरस्याम् । ६ । ४ । ४५ ॥**

सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सातिः । सतिः सन्तिः । न क्तिचीति दीर्घनिषेधः । वन षण सम्भक्तावित्यस्य तु सान्तिरित्येव ॥

## आर्द्धधातुके । ६ । ४ । ४६ ॥

अधिकारोऽयं न ल्यपीति यावत् । वक्ष्यति । गोरनिटि । पाच्यते । आर्द्धधातुके किम् । पाचयति ॥

## भ्रस्जो रोपधयो रमन्यतरस्याम् । ६ । ४ । ४७ ॥

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके ॥ मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभ्रज्ज । बभर्जे । बभ्रज्जे । भ्रष्टा । भर्ष्टा । भ्रष्टव्यम् । भर्ष्टव्यम् । भर्जनम् । भ्रज्जनम् । क्किति रमागमं बाधित्वा नित्यत्वात् संप्रसारणम् । भृष्टः । भृष्टवान् । भृज्ज्यात् । भृज्ज्यास्ताम् । उपदेशे इति वर्त्तते । तेनेह न । बरीभृज्ज्यते ॥

## अतो लोपः । ६ । ४ । ४८ ॥

आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्द्धधातुके परे ॥ गोपायिता । चिकीर्षिता । तपरकरणं किम् । याता । वाता । आर्द्धधातुके किम् । वृक्षत्वम् । उपदेशे किम् । अङ्कगत् । अयवयप्रभृतिभ्यः क्विपि वलि लोपे अत् वत् । कथं धिनुतः । कृणुतः । धिन्विकृण्व्योरचेति सौत्रक्रमेण पूर्वमकारादेशः पश्चादुप्रत्यय इति सिद्धान्तात् ॥ वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन ॥ * ॥ चिकीर्षकः । चिकीर्ष्यते ॥

## यस्य हलः । ६ । ४ । ४९ ॥

यस्येति संघातग्रहणम् ॥ हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्वाल्लघूपधगुणो न । बेभिदिता । चेच्छिदिता । संघातग्रहणं किम् ।

ईर्ष्यिता । मव्यिता । इह त्वनर्थकत्वान्न । पुत्रकाम्यिता । सन्निपातपरिभाषयेह न । गव्यिता । नाव्यिता । हलः किम् । लोलूयिता ॥

## क्यस्य विभाषा । ६ । ४ । ५० ॥

हलः परयोः क्यच्क्यषोर्लोपो वा स्यादार्धधातुके ॥ आदेः परस्य । समिधिता । समिध्यिता ॥

## णेरनिटि । ६ । ४ । ५१ ॥

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥ णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्त्तिकम् ॥*॥ णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्तु अनिटीति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ् । अततक्षत् । यण् । आटिटत् । गुणः । कारणा । वृद्धिः । कारकः । दीर्घः । कार्यते । ज्ञीप्सति । अत्र सनीवन्तर्धेतीडभावे अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते ॥ अनिटि किम् । कारयिता ॥

## निष्ठायां सेटि । ६ । ४ । ५२ ॥

णेर्लोपः स्यात् । कारितः । कारितवान् । सेटि किम् । इटि कृते णिलोपो यथा स्यान्न तु पूर्वम् । अन्यथैकाच इति निषेधादिण् न स्यात् । न च संज्ञपितः पशुरित्यत्र सनीवन्तर्धेति वेट्त्वेन यस्य विभाषेतीट्प्रतिषेधाण्णिलोपाभावार्थं तदिति वाच्यम् । पूर्वेण दुर्वारत्वात् । यस्य विभाषेत्यत्रैकाच इत्यनुवृत्तेरिट्प्रतिषेधाभावाच्च । अत एव दरिद्रितः सिद्धः ॥

## जनिता मन्त्रे । ६ । ४ । ५३ ॥

इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता ॥

तथा च ब्रह्मगुप्तोक्तवाक्यम्—

"अम्बरयोजनपरिधिः शशिभगणाः शून्यखखजिनाग्निगुणाः"इति ।

सिद्धान्तशेखरेऽपि—

"त्र्यङ्कर्तुखेनागधृतिप्रमाणा कक्षाऽम्बरस्यार्बुदयोजनघ्नी"-इति ।

ननु परमहत्परिमाणस्याकाशस्य मध्यविधमानासंभवादिदमसंगतमित्यतस्तत्समाधानरूपे मतान्तरे आह तदिति । यदेतदाकाशपरिधिमानमुक्तं तत् तन्मितं ब्रह्माण्डमेव"कटाहद्वितयस्येव संपुटं गोलकाकृति" * इति सूर्यसिद्धान्तोक्तेः। तस्य तटे सन्धौ वेष्टनं परिधिम्। पौराणिकाः केचित् सूरयो गणका जगुरूचुः । तथा च गोलाकारब्रह्माण्डावच्छिन्नाकाशपरिधिमाहुः । द्वितीयमतमाह केचिदिति । केचित् पौराणिकाः सूरयोऽदृश्यदृश्यकगिरिं प्रोचुः। पश्चिमपूर्वस्थलोकालोकपर्वतयोर्दक्षिणोत्तरदिशि मिलनात् तदवच्छिन्नाकाशपरिधिं "लोकालोकेन वेष्टितम् †"-इति सूर्यसिद्धान्तोक्तेः । "लोकालोकश्चक्रवालः" इत्यभिधानं चाहुः ।

तथा च तद्वाक्यम्—

"हिरण्यगर्भाण्डकटाहसंपुटप्रवेष्टनं तच्च बभाषिरे बुधाः ।

अदृश्यदृश्यं च गिरिं पुरातना जगुः खकक्षामिति गोलवादिनः"॥

इति । एतन्मते नोक्तदोष इति ॥ १ ॥

ननु ब्रह्माण्डे लोकालोकपर्वते च बाह्यान्तर्गतपरिधिद्वयसंभवात् कस्येदं मानमित्येतन्मतेऽपि संशयस्तत्त्वमित्यत एतन्मतद्वयपरिष्काररूपमतान्तरमार्यया ऽऽह करतलकलितामलकवदिति । पौराणिकैर्गणकैः स उक्ताङ्कमितो नभसः परिधिरुक्तः। उक्तदूषणं निवारयति । दिनकरेति । सूर्यकिरणसमूहविध्वस्तान्धकारस्येत्यर्थः । अत्र मानमाह करतलेत्यादि । करतलेऽग्रहस्ते कलितो गृहीतो य आमलको धात्रीफलं तद्वद्

* द्रष्टव्यो भूगोलाध्याये २९ श्लोकः ।

† द्रष्टव्यो ज्यौतिषोपनिषदध्याये १६ श्लोकः ।

मलं निर्दूषणं गोलं ब्रह्माण्डगोलं सकलं संपूर्णं ये विदन्ति तैरित्यर्थः । एतादृशोक्तिरेव मानमाप्तवाक्यत्वादिति भावः । तथा च सूर्यकिरणगमनविषयाकाशावच्छिन्नगोलस्य परिधिमङ्गीकुर्वन्ति । तेन ब्रह्माण्डे लोकालोकपर्वतेऽपि किरणावच्छिन्नत्वेनोक्तदोषो यतस्तदन्तर्वर्त्तिन एवार्करश्मय इति ।

तद्वाक्यं च धीवृद्धिदे—

"भवति योजनमानमहर्पतिद्युतियुतो नभसः परिधेरिदम्"-इति ।

श्रीपतिरपि—

"रविगभस्तिनिरस्ततमोनभःपरिधियोजनमानमिदं भवेत्"-इति ।

व्याससिद्धान्तेऽपि—

"ब्रह्माण्डसंपुटपरिभ्रमणं समन्तादभ्यन्तरे दिनकरस्य करप्रसारः-इति ।

"ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते" † ।

इति सूर्यसिद्धान्तेऽपि ।

"ब्रह्माण्डकुण्डमध्यगमिदमखिलं यत् प्रकीर्त्तितं क्रमशः ।
तस्य परिधिः स्वकक्षालोकालोकोऽपि च स उक्तः" ॥

इति लल्लेनापि स्पष्टमुक्तमित्यलम् ॥ २ ॥

इदानीं स्वमतमाह ।

ब्रह्माण्डमेतन्मितमस्तु नो वा
कल्पे ग्रहः क्रामति योजनानि ।
यावन्ति पूर्वैरिह तत्प्रमाणं
प्रोक्तं खकक्षाख्यमिदं मतं नः ॥ ३ ॥

**वा.भा.**—स्पष्टार्थम् ॥ ३ ॥

**मरीचिः**—अथ यथाश्रुतखकक्षापरिष्कारकरूपं स्वाभिमतार्थं पूर्वमतदूषणपू-

† द्रष्टव्यो भूगोलाध्याये ३० श्लोकः ।

वेकमिन्द्रवज्रयाऽऽह ब्रह्माण्डमेतदिति । ब्रह्माण्डमेतन्मितं खकक्षायोजनमितम् । अस्तु नो वाऽस्तु नास्तु लोकालोकपर्वतोऽप्येतदुपेक्षणात् । अत्रास्माकं नाग्रहः । ग्रहसम्बन्धाभावेनोपपत्तिमदागमप्रमाणाभावात् । स्वयमुपपत्त्या खकक्षामाह कल्पे इत्यादि । ग्रहः कल्पे तदवच्छिन्नकाले यावन्ति यन्मितानि योजनानि क्रामति स्वशक्तिपूर्वगत्या भुनक्ति तत्प्रमाणं ग्रहगमनेन कल्पावच्छिन्नकाले योजनभोगमानम् । इह गणितस्कन्धात्मकज्योतिःशास्त्रे खकक्षाख्यमाकाशपरिधिवाच्यं पूर्वैर्विष्णुधर्मोत्तरपुराणकारादिभिः । प्रोक्तमिदं युक्तियुक्तमेतन्मतं नोऽस्माकं ब्रह्मगुप्तादीनां प्रतिभाति ग्रहसम्बन्धोपपत्त्या प्रमाणत्वात् । एवं च कल्पावच्छिन्नकाले ग्रहभुक्तानि योजनानि तदवच्छिन्नाकाशपरिधेर्नियतमानं युक्तमिति नोक्तदोषः । तथा च विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्ते उक्तम्—

"अष्टौ शून्यानि यमन-
वरसखर्वमुनिवसुनिशाकराः १८७१२०६९२००००००००।
सर्वग्रहाणां भ्राम्यमानानां योजनात्मककल्पाध्वा"-इति ॥
ब्रह्मगुप्तोऽपि—
"भूपरिधिसमानि षष्ट्या खपरिधितुल्यानि कल्परविवर्षैः ।
गच्छन्ति योजनानि ग्रहाः स्वकक्षासुतुल्यानि"-इति ॥
तट्टीकाकारश्चतुर्वेदाचार्योऽपि ।
"द्विच्छिद्रषट्काम्बरनेत्रचन्द्रशैलाष्टरूपाणि गुणानि कोट्या ।
व्योम्नः सधाम्नः परिधिर्दशघ्नः कल्पे ग्रहाणां स च योजनाध्वा"॥
इति मूलं प्रसिद्धम् ।

अत्रोपपत्तिः । भूपृष्ठसम्बन्धियन्त्रेण ग्रहवेधविधिनोन्नतांशा राश्याद्यवयवेन स्पष्टत्वं च ग्रहस्य ज्ञेयम् । ततस्तत्काले दिगंशज्ञानेन त्रिप्रश्नोक्तविधिना गणितेनोन्नतांशा ज्ञेयाः । तयोरन्तरं भूपृष्ठगर्भक्षितिजान्तरप्रदेशस्थस्वदृग्वृत्तप्रदेशेऽन्तरांशाः । कुत एवमिति चेच्छृणु । भूपृष्ठस्थेन

वेधार्हभूपृष्ठोन्नतांशानां वेधविधिना सिद्धत्वात् । स्पष्टस्य चैकरूपेणो-भयत्र समानत्वात् तत्काले तत्क्षितिजयोर्दिशाभेदेन भूपृष्ठक्षितिजे तद्वि-गंशज्ञानसम्भवाद्गणितस्य भूगर्भविषयत्वेन गणितागतोन्नतांशानां भूग-र्भीयत्वम् । उन्नतांशानां क्षितिजावधित्वेन तदन्तरांशाः क्षितिजान्तरा-लस्थस्वदृग्वृत्तप्रदेशे स्पष्टाः । क्षितिजयोरन्तरं तु भूव्यासार्धयोजनमित्यग्रे लम्बनादौ स्फुटं प्रतिपादितमतस्तदन्तरांशैर्भूव्यासार्धयोजनानि तदा चक्रांशैः कानीत्यनुपातेन संपूर्णदृग्वृत्तस्ययोजनानि । एतत्तुल्यान्येव कक्षा-वृत्तयोजनानि ग्रहगोले ऊर्ध्वाधःस्वस्तिकयोर्भ्रमणदृग्वृत्तस्य प्रोक्तत्वात् ।

"स्वक्ष्माजेन्दुसमुद्गमास्तमययोः कालान्तरं यद्भवेत्
तत् स्वीयं दिनमानमम्बुघटिकायन्त्रेण संसाधितम् ।
यत् त्वत्रैव दिने निशाकरचरात् त्रिप्रश्नमार्गेण तद्-
भूगर्भस्थनरद्युमानमनयोर्नाड्यन्तरेणेति चेत् ॥

इन्दुर्द्विघ्नगुणमहीदलयोजनानि स्वीयद्युरात्रघटिकाभिरयं तदा किम्
त्रैराशिकेन विधुकक्षिकयोजनानि वा सूर्यपर्वत इयं परिसाधनीया"॥

इत्येकदेशमतोक्तेन वा साध्या । एतद्विवरणं तु तट्टीकायां स्फुटम् । एवं प्रत्यहं भगणभोगपर्यन्तं कक्षायोजनान्यानेयानि । तत्परमाधिकन्यून-संख्यायोगार्धस्य मध्यमत्वेन ज्ञानान्मध्यमकक्षामानं सिद्धम् । अथ कक्षा-योजनानि तत्स्थभगणभोगेन भुनक्ति । अत एकभगणभोगेन कक्षायोज-नभोगस्तदा कल्पभगणैः क इत्यनुपातेन कल्पयोजनभोगः। खकक्षा स्वभ-गणकक्षाघाततुल्योपपन्ना । पृथूदकभास्करादयस्तु चन्द्रभूयोगाच्चन्द्रबिम्ब-मध्यमलिप्तागतं साधयेत् । तच्चोदयतोऽस्तमयतो वा बिम्बस्य किय-त्यो विनाड्यः प्राणाश्च भवन्तीति चन्द्रभगणभोगं यावत् साधयेत् । प्रति-दिनसंभूतबिम्बकालैक्यमेकभगणभोगसंभूतसावनदिनमितिभक्तं फलमेक-दिनोदयकालो मध्यमो भवति । स च प्राणीकृतो मध्यमचन्द्रबिम्बकला भवन्ति कलासूनां समत्वात् । तत तु द्वात्रिंशत् । चन्द्रबिम्बयोजनमानं

शून्यवसुवेदाः ४८० । अत एतत्कलाभिरेतानि योजनानि तदैककलया कानीत्यनुपातेन चन्द्रकक्षायामेककलाप्रमाणं पञ्चदश योजनानि । एतानि चक्रकलागुणानि चन्द्रकक्षामानं योजनात्मकम् ३२४००० । अतः पूर्वोक्तानुपातेन खकक्षेति । न च विम्बयोजनोपपत्तौ कक्षामूलत्वेनान्योन्याश्रय इति वाच्यम् । विम्बयोजनानामाप्तवाक्येन प्रमाणसिद्धत्वाभ्युपगमात् । अथोक्तं चन्द्रविम्बसाधनादि मनुष्यकृत्यगोचरं सूक्ष्मकालस्याज्ञानात् । भुवश्च निम्नोन्नतत्वान्महाद्रिवनान्तरितत्वाच्चाशक्यं सर्वमिति भगणस्वपरिधिमाने आगम एव प्रमाणमिति सत्यम् । परन्त्वस्माभिः प्रसङ्गेन वस्तुदर्शनस्य प्रतिपादनाच्च क्षतिरिति ।

"अम्बरयोजनपरिधिः शशिभगणाः शून्यखखजिनाग्निगुणाः" ।

इति ब्रह्मगुप्तोक्तस्य व्याख्यावसरे

"दशगुणं गुणयेत् खखषड्घनं १७६००० युगभवैर्भगणैः शिशिरद्युतेः।

इत्यस्य व्याख्यावसरे धीवृद्धिदटीकायां क्रमेणाहुः ।

एतेन–

"अत्र भास्करपृथूदकमुख्यैर्वासना निगदिता निजतन्त्रे ।

तां विरोधिमतदूषणदक्षां वच्मि सन्मतिमतामतिरम्याम्"-इति ॥

केषां चित् प्रागल्भ्यं परास्तम् । ब्रह्मगुप्तसिद्धान्ते पृथूदककृतभाष्ये शिष्यधीवृद्धिदतन्त्रे लल्लोक्ते भास्करकृतटीकायां च प्रसिद्धत्वात् ॥ ३ ॥

इदानीं ग्रहकक्षा आह ।

**ग्रहस्य चक्रैर्विहृता खकक्षा**
**भवेत् स्वकक्षा निजकक्षिकायाम् ।**
**ग्रहः खकक्षामितयोजनानि**
**भ्रमत्यजस्रं परिवर्त्तमानः ॥ ४ ॥**

**वा.भा.**–सा खकक्षा यस्य यस्य भगणैर्हियते तस्य तस्य ग्रहस्य कक्षामितिर्लभ्यते । अस्योपपत्तिरूपं श्लोकस्योत्तरार्धमिति । यतः स्वकक्षायां

ग्रहो भ्रमन्नजस्रं परिवर्त्तमानः खकक्षामितानि योजनानि पूरयति। अतो ग्रहभगणैर्भक्तायाः खकक्षाया यल्लभ्यते सा ग्रहकक्षामितिरित्युपपन्नम् ॥४॥

**मरीचिः**—अथ स्वस्वकक्षायां पूर्वगत्या प्रतिपादितयोजनभोगात् कल्पे खकक्षातुल्ययोजनानि प्रत्येकं भुनक्तीति प्रतिपादितम्। तत्रेदं स्वाश्रयकक्षा-योजनमानाधीनमिति ग्रहकक्षायोजनानयनमुपेन्द्रवज्रयाऽऽह ग्रहस्य चक्रै-रिति। पूर्वोक्ता खकक्षा यस्य कल्पभगणैर्भक्ता फलं स्वकक्षा तन्मार्गानुमि-ताकाशवृत्तमानं योजनात्मकं भवेत्। तथा च पूर्वगत्यैकगणभोगेन कलायोजनानि भुनक्तीति प्रतिपादनमर्थसिद्धम्। अथ कक्षायोजनानि प्रतिदिनमपि भुनक्तीत्याह निजकक्षिकायामित्यादि निजकक्षावृत्तमार्गे परिवर्तमानो भ्रममाणः प्रवहानिलेनाजस्रं प्रतिदिनं ग्रहः स्वकक्षामित-योजनानि भ्रमति परिवर्त्तं करोति। ग्रहस्य प्रवहानिलभ्रमेण कक्षावृत्त-प्रदेशत्यागाभावेन कक्षावृत्तभोगानुपपत्तिरिति तद्वारणार्थं मितपददानं प्रवहानिलेन ग्रहाधिष्ठितकक्षावृत्तप्रदेशस्यैव भ्रमणात्। अत एव स्वोद-यद्वयान्तरकालेन ग्रहोऽन्यगत्या कक्षायोजनानि भुनक्तीति चक्रभोगेनैकं भगणं भुनक्तीति कल्पेन स्वरशास्त्रादिषु तत्कालग्रहानयनम्।

"इष्टनाड्यो हता धिष्ण्यैः षष्टिभागाप्तशेषके।
अश्विन्यादीन्दुभोगेन भुङ्क्ते तत्कालचन्द्रमाः॥
यथा चन्द्रस्तथा सूर्यः कर्त्तव्यश्चेष्टकालिकः।
यतोऽहोरात्रमध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले" ॥

इति सम्यगुक्तम्। अन्ये तु ग्रहः खकक्षामितेत्यादि पाठं कृत्वा कक्षानयनप्रकारस्योपपत्तिरूपं द्वितीयार्धम्। तदर्थस्तु निजकक्षायां परिवर्त-मानोऽजस्रं नित्यं ग्रहः कल्पे आकाशकक्षामितयोजनानि भ्रमति अतो ग्रहः कल्पभगणभोगेनाकाशकक्षायोजनभोगं करोति तदैकभगणभोगेन कियन्मितमित्यनुपातेन कक्षानयनं पूर्वार्धोक्तं युक्तमित्याहुः। तत्र पूर्व-श्लोकार्थेन पौनरुक्त्यापत्तेः। अत्रोपपत्तिः। स्वकक्षायाः भगणाङ्ककक्षाघात-

तुल्यत्वप्रतिपादनात् । सा भगणभक्ता कक्षा स्यादिति सुगमा पश्चिमभ्र-मेण कक्षामितयोजनानि भुनक्त्येवेति प्रत्यक्षम् ॥ ४ ॥

इदानीमेवं सिद्धे रवीन्दुकक्षे भकक्षां चाह ।

**सार्धाद्रिगोमनुसुराब्धिमिताऽर्ककक्षा ४३३१४९७½**
**चान्द्री सहस्रगुणिता जिनरामसंख्या ३२४००० ।**
**अभ्रेषुविभाङ्कगजकुञ्जरगोऽक्षपक्षाः २५९८८९८५०**
**कक्षां गृणन्ति गणका भगणस्य चेमाम् ॥ ५ ॥**

वा॰भा॰—रवेः कक्षा ४३३१४९७½। चन्द्रकक्षा ३२४०० । भकक्षा २५९८८९८५०-अत्रार्ककक्षातो भकक्षा षष्टि-६० गुणा । 'अर्कौ भषष्ट्यंश'-इत्यागमप्रामाण्ये नाङ्गीकृता । एवमन्येषामपि ग्रहाणां कार्याः ॥ ५ ॥

**मरीचिः**— अथैवं सिद्धं रवीन्दुकक्षामानं नक्षत्रकक्षामानं च सिंहोद्धृतयाऽऽह सार्धाद्रिगोमनुसुरेति । मनूनां चतुर्दशानां कल्पे प्रतिपादनात् तत्पदेन चतुर्दश । तथा चैतदङ्कस्थापनेनार्ककक्षा एतन्मिता ४३३१४९७। अस्या अधोऽवयवमाह सार्धेति । अर्धेन एकार्धेन ०।३० सह वर्त्तमानेति सूक्ष्मा ४३३१४९७।३०। इयमेव बुधशुक्रयोर्भौमगुरुशनिशीघ्रोच्चानां च ज्ञेया । एकदेशान्वयस्य शास्त्रे प्रतिपादनाच्चान्द्री कक्षेति सम्बन्धः । जिनाश्चतुर्विंशतिः । तद्भेदानां तत्संख्यात्वात् । अङ्कस्थापनेन स्पष्टम् ३२४००० । ननु सूर्यचन्द्रयोर्यथा कक्षामानमुक्तं तथाऽन्येषां कथं नोक्तम् । न च प्रयोजनाभावादिति वाच्यम् । स्वया स्वयेत्याद्युक्तग्रहानयनप्रकारे कक्षामानानामत्यन्तप्रयोजनादिति चेन्न । ग्रहानयनस्याहर्गणतः साक्षात्सिद्धत्वेनातिप्रयोजनाभावात् ग्रहणेऽर्केन्दुकक्षामानस्यात्युपयोगात् शेषाणां सिद्धान्तशेखरे उक्ताः—

"अष्टाङ्कपक्षमनुगजाः क्षितिनन्दनस्य ८१४२९१९
ज्ञस्येशदन्तकृतखेन्दुमिता-१०४३२११ ऽथ सूरेः ।
रूपाश्विनागयुगशैलगुणेन्दुबाणाः ५१३७४८२१

खाग्न्यङ्कसागररसोत्कृतयः सितस्य २६६४९३० ॥

भूधराहिनगनागरसर्तुक्ष्माधराश्विशशिनः शनिकक्षा"—
१२७६६८७८७ ।

मदुक्ताश्च मन्दोच्चपातानाम् ।

"खाभ्रखाभ्रखशरागनगाब्ध्यग्न्यष्टगोष्टदहनै रवेः
३८९८३४७७५००००० क्रमात् ।

नागनागखरसत्रिरामनागाग्निभिः परिमिता ३८३३६०८८ मृदुतुङ्गे ॥

त्र्यर्कागषट्तर्कगजाश्विसिद्धनागाभ्रवेदाङ्कमिता च कक्षा
९४०८२४२८६६७१२३ ।

सप्ताङ्कनागाष्टियमाब्धिपञ्चनृपाङ्करामाङ्कशरैर्मिता
५९३९१६५४२१६८९७ स्यात् ॥

क्वग्न्यङ्कपक्षेषुखभूरसाब्धिशराष्टनागेन्दुयमैर्मिता
२१८८५४६१०५२९३१ स्यात् ।

क्वभ्राङ्गगोभूजिनवेदपञ्चपञ्चाक्षषड्नागयमैर्मिता
२८६५५५४२४१९६०१ स्यात् ॥

घनत्रिसप्ताभ्रघनत्रिगोभूनन्दाग्निषट्पञ्चकृतप्रमाणा
४५६३९१९३१७०७३१७ ।

कृतेषुपाठे खखखाभ्रखाभ्रखखाष्टगोकृतरसाब्धिरामैः
३४६५१९८०००००००० ॥

चन्द्रादिपातस्य नगाग्निवेदसप्ताब्धिपञ्चाभ्रगजप्रमाणा
८०५४७४३७ ।

पञ्चागसप्ताङ्कघनाङ्कपञ्चरसाश्विनागाभ्रखसप्ततुल्या
७००८२६५९१७९७७५ ॥

तानाब्धिषड्वेदगजाङ्कसप्ताङ्केष्विन्दुगोतानाग्निमिता
३५९१५९७९८४६४४९ क्रमेण ।

कुगात्तनागाश्विकृतेन्दुसप्तनवाष्टखाङ्गाङ्कयमप्रमाणा २९६०८९७१४२८५७१ ॥

उत्कृत्यङ्गागरामाष्टाब्ध्यष्टाब्धीष्वङ्कखाश्विभिः२०९५४१६४८३७६२६।
कुङ्गाताग्न्यष्टरामाब्धिकुर्काब्ध्यभ्रदैर्मिता ३२०४१२१४३८३५६१ ॥
निबद्धा भास्करप्रोक्तभगणानां मया ततः ।
केन्द्रचक्रादुक्तरीत्या ज्ञेया केन्द्रस्य कक्षिका" ॥ इति

ननु यथा ग्रहभ्रमणेन तन्मार्गानुमिततत्कक्षाऽस्ति तथा नक्षत्र-भ्रमेण प्रत्यक्षसिद्धेन तेषामपि कक्षाऽस्तीति सिद्धम् । तथा च तन्मान ग्रहस्य चक्रैरित्यादिप्रकारेण कथं सिद्ध्येत् । नक्षत्राणां नियतगत्यभावेन भगणभोगाभावात् । न च भभ्रमेणैकक्षावृत्तभ्रमणात् कल्पभभ्रममानमेव तेषां भगणभोगमानं तेनोक्तप्रकारेण नक्षत्रकक्षामानानयने न क्षतिरिति वाच्यम् । कल्पे ग्रहः क्रामति योजनानीति पूर्वोक्तेन स्वशक्तिगत्या नक्षत्राणां खकक्षाभोगाभावात् भभ्रमाणां प्रवहे हेतुत्वाच्च । अन्यथा ग्रहोदयेन ग्रहकक्षापरिवर्त्तसिद्धिस्तत्सावनैरेव तत्कक्षासिद्धत्वापत्तेरित्यतः सिद्धमेव नक्षत्रकक्षामानमाह । अभ्रेष्विति । इमां भगणस्य नक्षत्रसमूहाधिष्ठिताकाशगोलस्य कक्षां परिधिं गणकास्तत्त्वज्ञा गृणन्ति वदन्ति । इमां काम् । या अभ्रेष्विभाङ्कगजकुञ्जरगोक्षपक्षाः । अत्र पक्षपदेन शुक्लकृष्णभेदात् द्विसंख्या । तेनैतद्योजनमिता २५९८८९८५० । तां वदन्तीत्यर्थः । नक्षत्राकाशगोलपरिधिरेतद्योजनमित इति तात्पर्यार्थः ।

तथा च चतुर्वेदाचार्यः—
"खेष्विन्दुपूर्णशशिशीतकरै-११०१५० र्विहीनाः
कोट्या रसाश्विनिहताः २६०००००००० कथिता भकक्षा" ।

अत्रोपपत्तिः । भूपृष्ठयन्त्रेण नक्षत्रयोगताराविधादुन्नतांशा नक्षत्रस्य ज्ञेयास्ते भूपृष्ठक्षितिजात् । अथ तस्मिन् काले तद्ध्रुवकशरादि-ज्ञानात् त्रिप्रश्नाधिकारोक्तप्रकारेण ग्रहवदुन्नतांशाः साध्यास्ते भूपृष्ठ-

क्षितिजात् । तयोरन्तरांशाः क्षितिजान्तरालस्थदृग्वृत्तप्रदेशे भवन्ति । एतेऽंशाः सूर्यदृग्वृत्तस्थितांशानां षष्ट्यंशरूपा दृष्टा वेधेनात एव तदन्तरांशैर्भूव्यासार्धयोजनानि तदा चक्रकलाभिः कानीत्यनुपातेन सूर्यकक्षा षष्टिगुणा नक्षत्रकक्षा सिद्धैतद्भमितेति ग्रहकक्षोपपत्तिरीत्योक्तप्राया ।

अत एव सूर्यसिद्धान्ते—

"भवेद्भकक्षा तिग्मांशोर्भ्रमणं षष्टिताडितम् ।
सर्वोपरिष्टाद् भ्रमति योजनैस्तैर्भमण्डलम् ॥ * "

इत्यभिहितं युक्तम् । भचक्रस्य सूर्यात् पञ्चमस्थानस्थत्वेन तस्य द्वादशराश्यात्मकत्वात् तद्घातगुणिताऽर्ककक्षा सा भवत्येवेति नयनावरणं मन्दानामिति कश्चित् ।

अन्ये तु—

"पश्येज्जलादौ प्रतिविम्बितं भं खेटं दृगौच्च्यं गणयेच्च लम्बम् ।
तल्लम्बपातप्रतिविम्बमध्यं दृगौच्च्यहृत् सूर्यहतं प्रभा स्यात्" ॥

इति ज्ञातच्छायातः शङ्कुः साध्यः । तस्मिन् काले भौमादिवद् दृग्गणितेन शङ्कुः साध्यः । तयोश्चापांशपूर्वकान्तरं कार्यम् । अस्मादुक्तानुपातेन कक्षोक्ताङ्कमितोपपन्नेत्याहुः ॥ ५ ॥

इदानीं ग्रहगतियोजनान्याह ।

**कल्पोद्भवैः क्षितिदिनैर्गगनस्य कक्षा**
**भक्ता भवेद्दिनगतिर्गगनेचरस्य ।**
**पादोनगोऽक्षधृतिभूमितयोजनानि**
**खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे ॥ ६ ॥**

**वा·भा·**—अत्रोपपत्तिः । यदि कुदिनैः खकक्षामितयोजनानि गच्छन्ति तदैकेन किमिति । फलं दिनगतियोजनानि । तानि च स्थूलत्वेन तावत् पादोनगोऽक्षधृतिभू—११८५८।४५मितानि स्युः ॥ ६ ॥

* द्रष्टव्यो भूगोलाध्याये ८० श्लोकः ।

**मरीचिः**—अथ कक्षायोजनानि स्वशक्तिगमनहेतुभगणभोगेन भुनक्ति तच्च प्रतिदिनयोजनभोगमानस्य हेतुत्वात् तज्ज्ञानं सिंहोद्धतयाऽह कल्पोद्भवैरिति । खस्य कक्षा परिधिः । कल्पग्रहभुक्तयोजनसंख्या समग्रा । कल्पोद्भवैः कल्पकालपठितैः क्षितिदिनैः सूर्यसावनदिनैर्भक्ता फलं गगनेचरस्य सूर्यादिग्रहस्य दिनगतिरेकसूर्यसावनदिने योजनभोगमानरूपा प्रत्येकं भवेत् । फलस्य भाज्यहरयोर्नियतत्वेन नियतत्वात् तन्मनकथनपूर्वकं दिनगत्यर्थं स्पष्टयति पादोनेति । इमे दृश्यमानाः खेटा ग्रहा निजवर्त्मनि स्वकक्षावृत्ते अनुदिनं प्रत्यहं रूपचतुर्थांशोननवपञ्चाष्टादशैकप्रमाणयोजनानि ११८५८ । ४५ । अत्र महायुगस्य श्लोकस्य वा चरणाश्चत्वार इति चतुर्थांशः । तदूनस्याव्यवहितत्वेन गो-इत्यत्रान्वयः त । व्रजन्ति स्वशक्त्या गच्छन्ति । नक्षत्राणां स्वशक्त्या नियतगत्यभावाद्दिनगत्यभावः खेटपदेनार्थसिद्धः ।

अत्रोपपत्तिः । कल्पकुदिनैः खकक्षामितयोजनानि भोगस्तदैकदिनेन क इत्यनुपातेनोपपन्नं कल्पोद्भवैरित्यादि । फलं चागतं किञ्चिदधोवयवाधिकत्रिचत्त्वारिंशदधोवयवाधिकाष्टेषुधृतीन्दुधृतम् । तत्र स्वल्पान्तरत्वाल्लाघवाच्च पादोनेत्याद्युक्तमत एवाधोऽवयवेषु किञ्चिदधिकत्रयमागतेषु त्यक्त्वा "त्र्यंशोननन्देषुधृतीन्दुसंख्या द्युचारिणां योजनभुक्तिरह्नि"। इति सिद्धान्तशेखरे उक्तम् ॥ ६ ॥

इदानीं ग्रहानयनमाह ।

**अहर्गणात् कक्षिनवाङ्क–९९२१निघ्नान्–**
**नवेन्दुवेदेषुहुताश–३५४१९ लब्ध्या ।**
**अहर्गणो गोऽक्षधृतीन्दु–११८५९ निघ्नो**
**विवर्जितः स्युर्गतयोजनानि ॥ ७ ॥**
**स्वया स्वया तानि पृथक् च कक्षया**
**हृतानि वा स्युर्भगणादिका ग्रहाः ।**

वा॰ भा॰—अहर्गणे भूनेत्रनवनन्द–९९२१ गुणे नवशशिश्रुतिबाणाग्निभि-३५४१९ भक्ते यल्लब्धं तेन विवर्जितः कार्यः । कः । नन्देन्द्रियधृतीन्दु–

११८५९ गुणोऽहर्गणः । एवं गतयोजनानि स्युः । तेभ्यः पृथक् पृथक् स्वया स्वया कक्षया भाजितेभ्यो भगणाद्या ग्रहा लभ्यन्ते ।

अत्रोपपत्तिः । दिनगतियोजनैरहर्गणे गुणिते गतयोजनानि भवन्तीति सुगमम् । अत्र सुखार्थं गोऽब्धधृतीन्दुभिः ११८५९ संपूर्णैरहर्गणो गुणितः । सोऽधिको जातः । यदधिकं तच्छोध्यम् । तस्याधिकस्य ज्ञानार्थमुपायः । परमोऽहर्गणः कुदिनतुल्यः । तेन गुणकेन गुण्यः । एवं गोऽब्धधृतीन्दुनिघ्नः सन् खकक्षातोऽधिको भवति । तस्मात् खकक्षां विशोध्य शेषेणानुपातः । यदि कुदिनतुल्येनाहर्गणेनैतावदधिकं भवति तदेष्टेनाहर्गणेन किमिति । अत्र कुदिनानां तस्य शेषस्य च पञ्चपञ्चयुगवेदैरयुतगुणितै ४४५५०००० रपवर्त्ते कृते सति शेषस्थाने कृतिनवाङ्का उत्पन्नाः । कुदिनस्थाने नन्देन्दुवेदेषुहुताशाः । एवं त्रैराशिकेन यल्लभ्यते तेन स्थूलगतिगुणितेऽहर्गणे वर्जिते गतयोजनानि भवन्ति । सर्वेषां ग्रहाणां तान्येव गतेस्तुल्यत्वात् । अथ ग्रहार्थमनुपातः । यदि कक्षातुल्यैर्गतयोजनैरेको भगणस्तदैभिः किमिति । फलं गतभगणाद्याः सर्वे ग्रहा भवन्तीत्युपपन्नम् ॥ ७½ ॥

**मरीचिः**—अथैतदनुरोधेन कल्पादितो ग्रहभुक्तयोजनानयनमिष्टकाले उपजातिकयाऽऽह अहर्गणादिति । एकोनाशीत्यूनायुतगुणितादहर्गणात् । प्रागानीतात् एकाशीत्यधिकपञ्चशतोनषट्त्रिंशत्सहस्रभक्तात् फलेन । एकचत्वारिंशदधिकशतोनद्वादशसहस्रगुणितोऽहर्गणो हीनो गतयोजनानि कल्पादित इष्टकाले ग्रहभुक्तयोजनानि भवन्ति ।

अत्रोपपत्तिः । एकदिनेन गतियोजनानि तदाऽहर्गणेन कानीत्यनुपातेन गतियोजनसंख्यागुणिताहर्गणो गतयोजनानि भवन्तीत्यत्र निबद्धगतियोजनाङ्कस्यापि स्थूलत्वाल्लाघवाद्गोऽब्धधृतीन्दुगुणितोऽहर्गणः कृतः । एतानि स्थूलानीति वास्तवज्ञानार्थमन्तराणि कार्याणि । तत्रान्तरानयनार्थं त्रैराशिकावतारस्तदर्थं प्रमाणकाले फलं साध्यते ।

कल्पे वास्तवानि गतयोजनानि खकक्षातुल्यानि प्रतिपादितानि । तत्रैव कल्परविकुदिनानामहर्गणत्वात् । तानि गोऽब्धधृतीन्दु-११८५९ गुणितानि स्थूलान्ययुतघ्नशरेषुखाष्टेशकक्षार्कागधृति-१८७१२५१११८०५५०००० मितानि । अनयोरन्तरमयुतघ्नशरेषुखाष्टातिधृतिवेदमितम् ४११९८०५५०००० । कल्पे वास्तवगतयोजनेभ्यः स्थूलेष्वधिकमतः कल्पकुदिनतुल्याहर्गणेनेदमन्तरं तदेष्टाहर्गणेन किमित्यनुपातेनाहर्गणस्य कुदिनान्तररूपौ हरगुणावयुतघ्नशरेषुवेदवेदै-४४५५०८०० रपवर्त्तितौ जातौ हर—३५४१९ गुणौ ९९२१ । तथा चाहर्गणात् क्षितिनवाङ्कनिघ्नेत्याद्यानीतफलेनेऽधिकग्रहणादत उक्तमुपपन्नम् ।

अथैभ्यः प्रसंगाद्ग्रहानयनं विशेषं च वंशस्थेनाह स्वयेति । तानि गतयोजनानि स्वया स्वया कक्षया प्रागानीतया पृथक् प्रत्येकं सर्वेषां गतयोजनानां गतितुल्यत्वेनाभेदात् । भक्तानि फलं भगणादिका ग्रहाः पूर्वसिद्धा भवन्ति वा प्रकारान्तरेण पूर्वमनेकधा ग्रहसाधनस्योक्तत्वात् । आदरे वीप्सेति स्वया स्वयेत्युक्तम् । ननु ग्रहाणां प्रत्यक्षविम्बदर्शनेन परस्परं कक्षाभेदोऽयुक्तस्तयोच्चपातयोराकाशे विम्बाभावाद्ग्रहस्य चक्रैरित्यादिप्रकारेण भगणभेदात् । ग्रहकक्षातो भिन्नकक्षा न युक्ता विम्बगमनानुमार्गेणाकाशे वृत्तरूपकक्षाया असत्त्वादत आह ग्रहस्येति । हि यतो ग्रहस्य कक्षा । एवकारो गणितागतपृथक्कक्षाव्यवच्छेदार्थः । तुङ्गपातयोः कक्षा । शीघ्रमन्दोच्चपातानां स्वकीयग्रहकक्षायामेवावस्थानं न पृथगानीतकक्षायां तथा चानीतकक्षाया अप्रयोजकत्वेन नोक्तदोष इति भावः । नन्वेवं कक्षैक्यत्वात् स्वया स्वयेत्याद्यानयनप्रकारेण ग्रहोच्चपातानामभेदाद्भिन्नभगणानुपपत्तेर्भगणानीतोच्चपाताभ्यां विसंवादात् । ग्रहस्य स्पष्टत्वानुपपत्तेः । सर्वदा ग्रहोच्चान्तररूपकेन्द्राभावेन फलाभावाच्चात आह पृथगिति । अत्र गतयोजनेभ्यो ग्रहानयने तदीयसिद्धये तयोरुच्चपातयोः । इदं स्वग्रहभिन्नत्वं तस्य सिद्धये निष्पत्तये । पृथक् भिन्ना

स्वाधिष्ठितकक्षातःकक्षा ग्रहस्य चक्रैरित्यादिप्रकारेण कल्प्या। चःसमुच्चये। तथा च ग्रहभगणेभ्यः पातोच्चयोर्भगणभेदाद्ग्रहस्य चक्रैरित्यनेन कक्षायाः पृथक्त्वेन ग्रहभिन्नत्वम् । आकाशे उच्चपातयोः प्रत्यक्षस्वरूपाभावेन कल्पितत्वाद्ग्रहकक्षायामेव तदधिष्ठानं कल्प्यत इति ग्रहकक्षैव तयोरिति नोक्तदोष इति भावः ।

अत्रोपपत्तिः । कक्षायोजनतुल्यभोगेनैको भगणस्तदा गतयोजनैः क इत्यनुपातेन स्वया स्वयेति ग्रहभगणाद्यानयनमुपपन्नम् ॥ ७$\frac{1}{2}$ ॥

इदानीं विशेषमाह ।

ग्रहस्य कक्षैव हि तुङ्गपातयोः
पृथक् च कल्प्याऽत्र तदीयसिद्धये ॥ ८ ॥
अर्कस्य कक्षैव सितज्ञयोः सा
ज्ञेया तयोरानयनार्थमेव ।
उक्ते तयोर्ये चलतुङ्गकक्षे
तत्रैव तौ च भ्रमतोऽर्कगत्या ॥ ९ ॥

वा० भा०—अत्रोच्चस्य पातस्य च या कक्षाऽऽगच्छति सा तयोरानयनार्थमेव कल्प्या । अन्यथा या ग्रहस्य कक्षा सैव तयोरपि । यतो ग्रहकक्षाया उच्चप्रदेशस्योच्चव्यपदेशः । यत्र च विमण्डलेन सह संपातस्तस्य प्रदेशस्य पातसंज्ञेति गोले सम्यक् प्रतिपादितमस्ति । तथा बुधशुक्रयोरत्र ये अर्ककक्षातुल्ये कक्षे आगच्छतस्ते तयोरानयनार्थमेव । किन्तु तयोर्ये चलकक्षे तत्रैव तौ च भ्रमतः परमर्कगत्या । एतदुक्तं भवति । भूमध्यादर्कं प्रति नीतं सूत्रं यत्र ज्ञचलकक्षायां लगति तत्र बुधो यत्र शुक्रचलकक्षायां लगति तत्र शुक्रो भ्रमतीत्यर्थः ॥ ९ ॥

इति कक्षाप्रकारेण ग्रहानयनाध्यायः ।

---

**मरीचिः**—अथ कक्षासंबद्धप्रतिवृत्तस्थग्रहस्य फलाभावे भूमध्यात् परमान्तरेणोच्चत्वेन दर्शनात्। कक्षाभेदप्रतिवृत्तप्रदेशविशेष एवोच्चम्। एवं प्रतिमण्डलस्थग्रहस्य यत्र प्रदेशे शराभावः स प्रदेशः पात इति गोलाध्याये कक्षास्थग्रहविशेषभेदेनोच्चपातयोः प्रतिपादनात् सिद्धं ग्रहकक्षैव तयोरवस्थानकक्षेति तयोर्भगणभेदाद्भिन्नत्वप्रतिपादनाय कक्षा आनयनार्थमन्याऽस्तीति कल्प्या। अन्यथा स्वया स्वयेत्यादिप्रकारेणानीतोच्चपातयोः पूर्वानीततुल्यत्वं न स्यात्। न चैवमतुल्यगत्योच्चपातयोरेककक्षास्थित्यङ्गीकारे रव्यादिसप्तग्रहाणामेककक्षावस्थानं स्वीकार्यं लाघवादिति वाच्यम्। कक्षापरिवर्त्तेन भगणभोगस्याङ्गीकारात्। समकालेन भगणपरिपूरणापत्तेर्भगणैकत्वापत्तेश्च। अथ साधनार्थं कक्षाभेदाः स्वीकार्याः। ननु स्थित्यर्थमिति चेन्न लाघवात् तत्रैव तेषामवस्थानसंभवेनातिरिक्तैव कक्षा कल्पनस्य गौरवात्। अन्यथाऽऽनयनहेतुकक्षासु प्रत्येकं प्रतिदिनतुल्यगतियोजनभोगसंभवेऽपि ग्रहाणां वस्तुतस्तत्र तद्योजनभोगानुपपत्त्या खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे इत्यस्यासंगतत्वापत्तेः। अत एवोच्चपातयोरानयनहेतुस्वकक्षाकल्पितवृत्ते दिनगतियोजनभोगसंभवेऽपि ग्रहकक्षायां तद्भोगाभावात् खेटा व्रजन्तीत्युक्तम्। तथा चोच्चपातयोरानयनकक्षाकल्पितवृत्ते यत् स्थानं तत्र भूगर्भात् सूत्रे नीते तदुपर्यपि भकक्षायां नीते ग्रहकक्षायां यत्र सूत्रं लग्नं तत्र तयोः स्थानमित्यलम् ॥८॥ ननु सूर्यबुधशुक्राणां प्रत्यक्षं विम्बदर्शनगमनानुरोधात्। कक्षाभेदोऽन्यग्रहवत्। तत् कथं सूर्यकक्षातुल्या ग्रहस्य चक्रैरित्यादिप्रकारेणानीतकक्षा बुधशुक्रयोर्भगणैकत्वाद्युक्तेत्यत इन्द्रवज्रयाऽऽह अर्कस्येति। अर्कस्य कक्षा। एवकारोऽन्ययोगव्यवच्छेदार्थे निश्चयार्थे वा। सितज्ञयोः शुक्रबुधयोः कक्षा भगणैकत्वात्। अन्येषां तु भगणभेदेनैव तद्भेददर्शनस्य युक्तत्वात्। शुक्रस्यान्यग्रहवद्दर्शनयोग्यत्वाद्बुधस्य स्वदर्शनोत्पातकालव्यतिरिक्तकाले दर्शनाभावात्। सितज्ञयोरिति क्रमानुसरणं ज्ञेयम्। उक्तदोषं निरस्यति सैति। तयोः शुक्रबुधयोरानयनार्थं

स्वया स्वयेत्यादि प्रकारेण तन्निरुक्त्यर्थम् । एवकारोऽवस्थानयोगव्यवच्छेदार्थः । सा रविकक्षातुल्यकक्षा ज्ञेया । अन्यथा भगणैक्यत्वात् पूर्वप्रकारानीताभ्यां समत्वानुपपत्तेः । तथा च सूर्यकक्षायां तदवस्थानाभावाच्चोक्तदोष इति भावः । ननु तयोर्बिम्बयोः प्रत्यक्षभ्रमदर्शनेनावस्थानकक्षाऽपि प्रत्यक्षसिद्धाऽन्यग्रहवदिति तदपलापः कथं युक्तोऽनुक्तत्वादत आह उक्ते इति । तयोः बुधशुक्रयोर्ये यन्मिते चलतुङ्गकक्षे शीघ्रोच्चकक्षे उक्ते । ग्रहस्य चक्रैरित्यादिप्रकारेण ज्ञाते । तत्र तत्कक्षयोरित्यर्थः । एवकारेण सूर्यकक्षाया अन्यातिरिक्तकक्षायाश्च निरासः । बाधाज्ज्ञानाभावाच्च । तौ च बुधशुक्रौ । चकाराच्छीघ्रमन्दोच्चपातानां संग्रहः। यथायोग्यं भ्रमतः । तथा च स्वशीघ्रोच्चकक्षयोस्तयोर्भ्रम इत्यस्या उक्तत्वाभावेन तत्कक्षाप्रलापोऽप्रसिद्ध इति भावः । ननु शीघ्रोच्चकक्षायां तद्गतिकलाक्रान्तपादैनेत्याद्युक्तग्रहदैनंदिनभगतियोजनानि सन्ति चक्रकलाङ्कितत्वात् । अन्यथा तत्कक्षात्वव्याघातः । तत्र खेटा व्रजन्त्यनुदिनमित्युक्तत्वाद्बुधशुक्रौ स्वशीघ्रोच्चगतिकलाभोगेनोक्तयोजनान्याक्रामतः । अन्यथा तत्कक्षायां ग्रहतुल्यगतियोजनायोगानुपपत्तेरिति शीघ्रोच्चसमत्वेन तयोः स्पष्टत्वस्यार्कतुल्यस्य चानुपपत्तेरित्यत आह । अर्कगत्येति । सूर्यमध्यमगत्या तत्कक्षायां भ्रमत इत्यर्थः । भगणैक्यत्वात् । तेन सूर्यकक्षायां तुल्यगतियोजनयोगोऽपि अवस्थानकक्षायां तद्भोगाभावस्य सूर्यतुल्यत्वेन कल्पनाच्चोक्तदोष इति भावः ।

अत्रोपपत्तिः। बुधशुक्रयोः सूर्यतुल्यत्वेनान्यथा तत्समत्वानुपपत्त्या साधनार्थं सूर्यकक्षैव सिद्धा । तुल्यभगणत्वात् । तत्रैवावस्थाने सूर्याद्ग्रहान्तरत्वानुपपत्तेः। एकप्रदेशावच्छेदेन द्वयोर्गमनानुपपत्तेश्च सूर्यकक्षातोऽन्याऽवस्थानार्थं कल्प्या सा तु तच्चलोच्चकक्षाक्लृप्तत्वात् कल्पिता । लाघवाद् ग्रहस्य कक्षैव हीत्यादिना तुङ्गग्रहयोरेककक्षास्थलोक्तेश्च । न च मन्दोच्चकक्षैव स्वीकार्या विनिगमनाविरहात् इति वाच्यम् । तत्कक्षाया अति-

हात एवेति ॥ अत एव । बलवदनिष्टाननुबन्धित्वस्य विशेषितत्वादेव तस्य पापरूपबलवदनिष्टानुबन्धित्वेन तादृशेष्टसाधनत्वनिषेधादिति भावः । विशिष्टाभाव इति । यथा पुरुषे सत्यपि दण्डाभावादण्डीपुरुषाभावः तथेष्टसाधनत्वविशिष्टकृतिसाध्यत्वसत्वेपि बलवदनिष्टाजनकेष्टसाधनत्वविशिष्टकृतिसाध्यत्वाभावस्तस्य पापरूपबलवदनिष्टजनकत्वेन विशिष्टाभावसत्त्वादित्यर्थः ॥ विध्यर्थनिषेधः तादृशकृतिसाध्यत्वरूपविध्यर्थनिषेधः । अथ बलवदनिष्टाननुबन्धिविशेषणादाने विध्यर्थानुपपत्तिं शङ्कते कथमिति श्येनेनाभिचरन्यजेतेत्यनेन श्येनस्याभिचाररूपफलजनकत्वबोधकत्वं तत्र "नाभिचारति वै" इति श्रुत्याभिचारनिषेधो बोध्यते न तु श्येननिषेधः । इत्थं च स्वर्गकामोऽश्वमेधेन यजेतेत्यत्र यथा स्वर्गः फलं तथात्राप्यभिचारः फलमिति न श्येनविध्यर्थबाध इत्यभिप्रायवान्समाधत्ते श्येनो हीति । विध्यर्थस्त्वनिष्टाजनकत्वं वधस्यानिष्टभिन्नत्वेन श्येनेऽप्यस्तीति भावः । साक्षान्नरकसाधनत्वाभावं दर्शयति । श्येनाच्चेति । न तत्रेति साक्षान्नरकसाधनत्वाभावेपि परम्परया नरकसाधनत्वादास्तिकानां श्येने न प्रवृत्तिरिति भावः ॥

**ननु श्येनो मरणानुकूलव्यापारत्वेन हिंसा । सा च नरकजनिकेति चेन्न । न हि मरणानुकूलव्यापारमात्रं हिंसा कूपादौ विनष्टे गवि तत्कूपकर्तुर्गोवधकर्तृत्वप्रसङ्गात् । नापि मरणोद्देशेनानुष्ठीयमानत्वे सतीति विशेषितं न हि तद् गोमरणमुद्दिश्य कृतमिति न तत्कर्तुः गोवधकर्तृत्वमिति गङ्गामरणमुद्दिश्यकृतत्रिसन्ध्यस्तवपाठादेरपि तत्वापत्तेः । अदृष्टाद्वारामरणानुकूलत्वं विवक्षितमिति चेन्न । तर्हि**

कथं श्येनस्य हिंसात्वमिति । नव्यास्तु बलवदनिष्टाननुबन्धीष्ठसाधनत्वेसति कृतिसाध्यताज्ञानत्वेन हेतुत्वं कृतिसाध्यत्वेसति बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानत्वेन बलवदनिष्टाननुबन्धीकृतिसाध्यत्वेसति इष्टसाधनताज्ञानत्वेन वेत्यत्र विनिगमनाविरहः । अस्तु तेनापि रूपेण हेतुत्वमिति चेत् । तर्हि कार्यताज्ञानत्वादिनैव हेतुत्वमस्तु लाघवात् ।

नन्विति । न चाव्यवधानेन मरणानुकूलो व्यापारो हिंसा श्येनस्य तादृशत्वाद्धिंसात्वमित्याह नापीति । तत् । मरणानुकूलव्यापाररूपहिंसास्वरूपं तथा च सत्यन्तविशेषणविशिष्टं तादृशव्यापारस्वरूपं हिंसेत्यर्थः । तत्वापत्तेः हिंसात्वापत्तेः । निरुक्तहिंसात्वस्य स्तवपाठेपि सत्त्वादित्यर्थः । नन्वदृष्टाद्वारकमरणोद्देश्यकमरणानुकूलो व्यापारो हिंसा स्तवपाठादेस्तु अदृष्टद्वारकमरणजनकत्वेन न दोष इत्याहादृष्टाद्वारेति तर्हीति श्येनस्यादृष्टद्वारकमरणजनकत्वान्न हिंसात्वमित्यर्थः । नन्वेवं सत्यन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणे ब्रह्महत्वं नस्यादिति चेन्न भवत्येव-अत एव तदुद्देश्यकृतप्रायश्चित्तार्द्धं प्रायश्चित्तमिति । विनिगमनाविरह इति । तथा च कार्यकारणभावत्रयाणामिति भावः । तेन रूपेण बलवदनिष्ठानुबन्धीष्ठसाधनत्वेसति कृतिसाध्यताज्ञानत्वादिरूपेण कार्यत्वादिनेति । कृतिसाध्यताज्ञानत्वादिरूपेण कार्यत्वादिनेति । कृतिसाध्यताज्ञानत्वेन बलवदनिष्ठाननुबन्धित्वज्ञानत्वेनेष्ठसाधनताज्ञानत्वेन वा हेतुत्वमित्यर्थः । लाघवात् । कारणतावच्छेदके लाघवात् ।

वस्तुतस्तु कृतिसाध्यताधीत्वेनैव चिकीर्षां प्रति हेतुत्वं । नन्वेवमिष्टाजनके चिकीर्षा स्यादिति

चेत् । सुखादाविष्टाजनकत्वेन ज्ञाते मण्डलीकरणादौ चिकीर्षा स्यादिति चेन्न उपायेच्छासामान्यसामग्र्यभावात् केयमुपायेच्छासामग्रीति चेदिष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं बलवदनिष्टसाधनताज्ञानं वा प्रतिबन्धकं इष्टसाधनत्वं च विद्यमानेच्छाविषयोयस्तत्साधनत्वं इच्छाविषयत्वं च स्वरूपसद्विशेषणं न तु तस्यापि ज्ञानं कारणं । एवं च सुखादाविव पाकादौ सुखसाधनताधीस्तदापाकादाविच्छेति ध्येयम् । विध्यर्थोऽपीष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाजनकत्वं च न तु विशिष्ट विशेषणविशेष्यभावे विनिगमनाभावात् न कलञ्जं भक्षयेदित्यत्र च कृतिसाध्येष्टसाधनत्वयोर्न तथान्वयस्तस्य कार्यत्वादिष्टसाधनत्वाच्च किं तु बलवदनिष्टाननुबन्धित्वस्य श्येनेनाभिचरन् यजेतेत्यत्र बलवदनिष्टाननुबन्धित्वस्य नान्वयबोधात् इष्टसाधनत्वकृतिसाध्यत्वयोस्त्वन्वयः स्यादेवाबाधादिति संक्षेपः ।

अथ ज्ञानस्यप्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति तत्र कृतिसाध्यताज्ञानत्वेनहेतुता नत्विष्टसाधनताज्ञानत्वेन व्यभिचारात् तथाहि । यत्रेष्टसाधनताज्ञानन्ततो यागे कृतिसाध्यताज्ञानं ततः सिद्धत्वज्ञानं ततश्चिकीर्षा तत्रेष्टसाधनताज्ञानं व्यभिचार एवं बलवदनिष्टाननुबन्धित्वज्ञानमपि । न च यत्रादौ कृतिसाध्यताज्ञानं । तत इष्टसाधनताधीस्ततः सिद्धत्वज्ञाननाशस्तत्र कृतिसाध्यताज्ञानमपि व्यभि-

चारीति वाच्यम् । कृतिसाध्यत्वप्रकारकज्ञानं विना कृतिसाध्यत्वप्रकारकेच्छाया असम्भवादित्यभिप्रायवानाह वस्तुतस्त्विति स्यादेवेति । सुखं नेष्टसाधनमिति ज्ञाने विद्यमानेपि सुखे चिकीर्षाजायत एवेत्यर्थः । चिकीर्षायाः फलोपायोभयविषयत्वादुपायचिकीर्षांप्रतीष्टसाधनताज्ञानस्य हेतुत्वेपि न चिकीर्षात्वावच्छिन्नं प्रति हेतुत्वं फलचिकीर्षायां व्यभिचारादिति भावः । उपायेच्छेति । मण्डलीकरणगोचरचिकीर्षातूपायेच्छा तत्र त्विष्टसाधनताज्ञानादेरपि हेतुत्वेन तदभावादेव न चिकीर्षेति भावः । कस्यचिन्मतमाह बलवदनिष्टसाधनेति । विद्यमानेच्छेति विद्यमानो य इच्छाविषयस्तत्साधनत्वस्य ज्ञानं न कारणं कालान्तरे फलं भविष्यतीति ज्ञानादप्यश्वमेधादौ प्रवृत्तेः । किन्तु विद्यमाना या इच्छा तद्विषयसाधनताज्ञानं कारणं । तथा च तदानीमोदनेच्छाया अभावात् । सिद्धौदने न प्रवृत्तिरित्यभिसन्धाय विद्यमानेत्युक्तं । इच्छाविषयत्वं विद्यमानेच्छाविषयत्वं । नत्विति । गौरवादिति भावः इच्छा चिकीर्षा । तथा च विध्यर्थः क इत्यत आह । विध्यर्थोपीति । ननु विशिष्टस्य कारणत्वाभावे न कलञ्जं भक्षयेदित्यत्र कथं विध्यर्थे नञर्थान्वय इत्यत आह न कलञ्जमिति तस्य कलञ्जभक्षणस्य किन्त्विति कलञ्जभक्षणस्य नरकसाधनत्वेन बलवदनिष्टजनकत्वादिति । इत्थं च श्येनेनाभिचरन्यजेतेत्यत्रेष्टसाधनत्वकृतिसाध्यत्वरूपविध्यर्थान्वयेपि न बलवदनिष्टाननुबन्धित्वान्वय इत्याह । श्येनेति । इष्टेति शत्रुमरणरूपेष्टसाधनत्वात्कृतिसाध्यत्वाच्च श्येनस्येत्यर्थः ॥

**सोयं विधिस्त्रिविधः अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति तदुक्तं विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते इति उदाहरणानि व्रीहीन्प्रोक्षति**

व्रीहीन्नवहन्ति पञ्चपञ्चनखाभक्ष्या इत्यादि । अत्र गुरवः नेष्टसाधनत्वं विध्यर्थः स्वर्गकामो यजेतेत्यनेन विधिना तस्य बोधयितुमशक्यत्वात् तथा हि स्वर्गकामस्येष्टसाधनं याग इत्यनेन बोध्यम् । इष्टं चात्र काम्यत्वेनोपस्थितः स्वर्ग एव न चेदं शक्यं साक्षात्साधनत्वस्याशुविनाशित्वेनासम्भवात् । न च परम्परया स्वर्गसाधनत्वं बोध्यं परम्पराघटकापूर्वानुपस्थितेः । नापि कार्यत्वं स्वर्गकामिकार्यत्वस्य यागे बोधयितुमशक्यत्वात् तथा हि शाब्दबोधे योग्यताज्ञानं हेतुः योग्यता चात्रान्वयप्रयोजकरूपवत्त्वं अत एव सेकान्वयप्रयोजकं द्रवद्द्रव्यत्वं जलेऽस्तीति तद्योग्यं वह्नौ च तन्नास्तीति तदयोग्यं प्रकृते च कामिकार्यत्वान्वये इष्टसाधनत्वमन्वयप्रयोजकं न च तद्गृहीतुं शक्यमित्युक्तं अन्वयप्रयोजकस्य साधनत्वस्य विरहात् तस्मात्कार्यमपूर्वमेव विध्यर्थस्तस्मिंश्च यागस्य विषयतयान्वयः ।

निरुक्तविधेस्त्रैविध्यमाह । अपूर्व इति । अत्यन्ताप्राप्तत्वे सति विधायकत्वमपूर्वविधित्वं पक्षे प्रकारान्तरेणाप्राप्तत्वे सति अप्राप्तपक्षान्तरविधायकत्वं नियमविधित्वं सर्वत्र प्राप्तत्वे सत्यन्यतो निवृत्त्यर्थमंशे विधायकत्वं परिसंख्याविधित्वमिति तदेवाह विधिरिति । अत्यन्ताप्राप्तप्रापणो हि विधिर्वेदवाक्यं सोऽपूर्वविधिः । पाक्षिके सति पक्षान्तरेण प्राप्तौ सत्यां नियमो नियमविधिः । तत्र वैधप्राप्तौ अन्यत्र रागतः प्राप्तौ

परिसंख्याविधिः परिकीर्त्यत इत्यर्थः । उदाहरणानि क्रमेणेति पूरणीयं अपूर्वविधेरुदाहरणमाह । व्रीहीन्प्रोक्षतीति प्रोक्षणस्य संस्कारविशेषजनकत्वं तच्च विनाविधिङ्कुत्रमपि प्रमाणान्तरेण न प्राप्येतेत्यर्थः । नियमविधेरुदाहरमाह व्रीहीनवहन्तीति अवहननेन वितुषीभावस्य नखनिकृन्तनेनापि प्राप्तत्वादित्यर्थः परिसंख्याविधेरुदाहरणमाह पञ्चेति । पञ्चा नखा येषां ते पञ्चनखाः । भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः शशकश्चेति वचनात्सेधादयः पञ्च भक्ष्याः । पञ्चनखानां मध्ये मार्जरवानरादीनामन्येषां च भक्षणे प्राप्ते सति एतेषामेव विधानमित्यर्थो यथा वा "इमामगृभ्णन् रशनामृतस्येत्यनेन मन्त्रेणाश्वाभिधान्याग र्दभाभिधान्याश्च रशनाया ग्रहणे पुनरश्वाभिधानीमादत्त इत्यनेनाश्व भिधान्यामिवप्राप्तायाङ्गर्दभाभिधानी निवर्त्तत इति । ननु त्रिविधविधिना पीष्टसाधनत्वं यागे बोध्यं तच्च न सम्भवति । यागस्याशुतरविनाशित्वेनेष्टाव्यवहितपूर्ववर्त्तित्वरूपकारणत्वस्य ज्ञातुमशक्यत्वात् । नचापूर्वद्वारेष्टसाधनत्वं ज्ञेयमिति वाच्यम् । अपूर्वोपस्थापकाभावात्तथा च विधेरिष्टसाधनत्वं न शक्यमित्येवोच्यतामित्यभिप्रायवानाह नेष्टसाधनत्वमिति । तस्य इष्टसाधनत्वस्य इष्टसाधनत्वस्य विध्यर्थत्वे स्वर्गकामो यजेतेत्यनेन स्वर्गकामस्येष्टसाधनं यागादि इति बोध्यं । तच्च न संभवति यागस्याशुतरविनाशित्वेन साधनत्वस्य बोधयितुमशक्यत्वादित्याह स्वर्गकामस्येति । यद्वा गुरुपरम्परया विधिसमभिव्याहृतस्वर्गकामो यजेतेत्यादिवाक्यस्य प्रवर्त्तकत्वमवगम्यते तच्चैतद्वाक्यस्य प्रवर्त्तकत्वज्ञानजनकत्वे सत्येव संभवति । प्रवर्त्तकं च ज्ञानं यागादिविशेष्यकमिष्टसाधनत्वप्रकारकं स्वर्गकामस्येष्टसाधनं याग इति तच्च तस्याशुतराविनाशित्वेन न सम्भवतीत्याह स्वर्गकामस्येति । नन्विष्टमपूर्वं तच्च यागाव्यवहितोत्तरक्षण एवोत्पद्यते तत्साधनत्वमाशुतरविनाशिनोप्यक्षतमेवेत्यत आहेष्टञ्चेति । कामनाविषयस्तु स्वर्ग एव नापूर्वमिति भावः । इत्थं च कालान्तर-

भाविनः साधनत्वं कथमाशुतरविनाशिनि शक्त्या बोध्यमित्याह न चेदमिति । इद साधनत्वं । नन्वपूर्वसम्बन्धेनाव्यवहितपूर्ववृत्तित्व रूपस्वर्गसाधनत्वं यागे बोध्यमित्यत आह न चेति । परम्परया स्वजन्यापूर्वसम्बन्धेन । अथैवमिष्टसाधनत्वरूपाया अन्वयप्रयोजकरूपयोग्यताया यागेऽभावात्कार्यत्वान्वयो न यागक्रियायामित्यभिप्रायवानाह नापीति । अत्रायं गुरूणामाशयः कालान्तरभावि स्वर्गादिफलकामसमभिव्याहृतवैदिकविधिप्रतिपाद्यप्रवर्त्तकज्ञानप्रकारीभूतो धर्मः समभिव्याहृतक्रियान्वयी न वेति विप्रतिपत्तिः स च धर्मो गुरुनये न्यायनये च कार्यत्वमेव तच्च कार्यत्वं न्यायनये यागादिरूपक्रियान्वयि प्राभाकरमते त्वपूर्वान्वयीति विवेकः । अत्र पापध्वंसकामो गङ्गां स्नायादित्यादौ पापध्वंसकामीयद्गङ्गाकर्मकं स्नानं कार्यमिति कार्यत्वस्य स्नानरूपक्रियान्वयित्वांशतः सिद्धसाधनवारणाय कालन्तरभावीति । सन्ध्यामुपासतेत्यादौ सन्ध्योपासनं कार्यमिति बोधे सन्ध्योपासनक्रियायां कार्यत्वान्वयादंशतः सिद्धसाधनवारणाय कामेति पचेतेत्यादौ पाकः कार्य इति बोधे पाके कार्यत्वान्वयादंशतस्तद्वारणाय वैदिकेति । अपूर्वस्यापि याग रूप क्रियान्वयित्वे प्राभाकरमते बाधवारणाय प्रवर्तकेति । तथा च तस्य कार्यत्वस्येष्टसाधत्वरूपयागान्वयित्वं वाच्यं तच्च न सम्भवति इष्टसाधनत्वस्याशुविनाशिनि यागे गृहीतुमशक्यत्वात् स्वर्गकामिकार्यत्वस्य स्वर्गकामिकृतिसाध्यत्वस्य अत एव ईदृशयोग्यताया विवक्षणादेव । स्वर्गकामो यजेतेति शब्दश्राविणस्तादृशविधिसमभिव्याहृतवाक्यं स्वर्गादिप्रवृत्तिजनकज्ञानजनकमिति तात्पर्यमवगत्तवतः कार्यत्वान्वये योग्यताविरहादनुपपत्तिज्ञानवतः कार्यस्वरूपेणापूर्वरूपे कार्ये विधेः शक्तिमवगतः पुरुषस्य कार्यत्वेनोपस्थिते कार्ये यागप्रकारकं यागविषयकं कार्यमित्येतादृशान्वयबोधो भवत्येवेत्यभिप्रायवानुपसंहरति । तस्मादिति । अपूर्वरूपं कार्यमेव विध्यर्थः । एवकारेण कार्यत्वव्यवच्छेदः । तस्मिन्निति धात्वर्थ-

प्रकारकबोधे संख्याकालादिभिन्नत्वे सति विशेष्यतासम्बन्धेनाख्यातादिप्रत्ययजन्योपस्थितिः कारणं धात्वर्थस्य प्रकारताजन्यत्वरूपविषयतासम्बन्धेन तथा च यागजन्य कार्यमिति बोध इत्यर्थः ॥

नन्वपूर्वस्य पूर्वमनुपस्थितत्वात्तत्र शक्तिग्रहो ऽनुपपन्नः । अथ कार्यत्वेन कार्यसामान्य एव शक्तिग्रहो योग्यताबलाच्चापूर्वव्यक्तेर्लाभः न हि यागविषयकमन्यत्कार्यं सम्भवतीति चेन्न स्वज्ञानादेरपि सम्भवात् । उच्यते कार्यं तावत्स्वर्गकामान्वयी नियोज्यनियोजकभावलक्षणः तत्र कामी नियोज्यो नियोजकं च कार्यं अतः कार्यं नियोजकत्वेनैव स्वर्गकामस्यान्वयः नियोजकत्वं च तत्कामिकार्यतया प्रतीयमानत्वं । अत्र चान्वयप्रयोजकं काम्यसाधनत्वं न हि कामी काम्यादन्यत्काम्यसाधनत्वेन ज्ञातं कार्यतया वेति । नच काम्यासाधनं काम्यसाधनत्वेन ज्ञायते अन्यथाख्यातेरनभ्युपगमात् । न च ज्ञानं काम्यस्वर्गसाधनं सम्भवतीत्यतो योग्यताबलाद्यागविषयकं कार्यं स्वर्गकामीयं स्वर्गकामो यागविषयककार्यवानित्येवं वानुभवो भवन् योग्यतया ऽपूर्वमवलम्बते एवं च काम्ये क्लृप्तशक्तिर्लिङ् नित्ये निषेधेपि विधेरपूर्वमाह लोके च यत्रेत्यादावपूर्वे तात्पर्यासम्भवात्कार्यत्वे लक्षणेत्याहुः ।

नन्वपूर्वानुपस्थितौ लिङस्तत्र कथं शक्तिग्रहः । उपस्थिते च तस्मिंस्तद्वारेणैव यागस्य स्वर्गसाधनत्वग्रहे गतमपूर्वस्य वाच्यत्वमत्याश-येत्यभिप्रायवानाह नन्विति मणिकारमतमाहायेति तथा च कार्यत्वेन शक्तिग्रहः कार्यं च घटादिरूपं पूर्वमुपस्थितमेवेत्यर्थः । ननु कार्यत्वेन रूपेण किमपूर्वे शक्तिरुत घटादौ किमुभयत्र वा नाद्यः प्रथमपूर्वस्यानुप-स्थितेः। अत एव नान्त्योऽपि नापि द्वितीयः। अन्यशक्तिग्रहस्यान्यत्राप्रयो-जकत्वादित्यत आह योग्यतेति । अयमर्थः। कार्यशक्तौ लिङ्प्रत्यय इति शक्तिग्रहो घटादिकमादायैव ततो घटादिविषयकमेव कार्यत्वेन रूपेण कार्यमिति स्मरणं ततो योग्यतावलाद्घटादिकं विहाय यागविषयकं कार्य-मित्यनुभवोऽनुभवश्चापूर्वमालम्बते तथा च येन रूपेण शक्तिग्रहस्तेन रूपेण पदार्थोपस्थितिस्तेन रूपेण शाब्दबोध इति नियमेऽपि क्षतिविरहादिति ॥ ननु कार्यत्वेन रूपेण घटादौ शक्तिग्रहे घटादीनामेव कुतो न लाभ इत्यत आह नहीति। ननु यागविषयकं यागादिज्ञानरूपमन्यत्कार्यं सम्भवि-ष्यतीति किमपूर्वेणेति दूषयति स्वज्ञानादेरिति स्वं यागः तथा च यागधी-रेव सेत्स्यतीति क्वापूर्वसिद्धिरिति भावः । प्राभाकरः स्वस्य रहस्यमाहो-च्यत इति। अथ काम्यसाधनताधीजन्यं ममेदङ्कार्यमिति ज्ञानवतो याग-विषयकं स्थायिकार्यमिति प्रथमो बोधः । ततो नियोज्यनियोजकभावस-म्बन्धेन कामनावतः पुरुषस्य कार्येन्वयस्तथा हि । स्वर्गकामस्य नियोज्य-त्वेन स्थायि कार्येन्वयं विना तादृशकार्ये स्वर्गसाधनत्वालाभः । स्वर्ग-कामकृतिसाध्यस्य स्वर्गसाधनत्वात् नियोज्यत्वेनान्वये स्वर्गसाधनत्वयो-ग्यत्वाच्च योग्यतायाः स्वर्गसाधनत्वान्वयलाभाय नियोज्यान्वय आव-श्यकः नियोज्यत्व कामनावतो ममेदं कार्यमित्यवगमवत्त्वं । नियो-जकत्वं च कामिकार्यतया प्रतीयमानत्वं तथा च यागविषयकस्व-र्गकामनियोज्यकं स्थायिकार्यमिति द्वितीयो बोधः । ततो यागे काम्यसाधनत्वज्ञानमन्तरेण कामिकृतेर्यागविषयकत्वमनुपपन्नं काम्यसा-

धनत्वेन ज्ञायमान एव कार्यताज्ञानद्वारा कामिनः कृत्युत्पत्तेः कामिकृते-र्यागविषयकत्वमन्तरेण कामिकृतेरपूर्वविषयकत्वमनुपपन्नं कृत्यन्तराद-पूर्वानुपपत्तेरित्यनुपपत्तिप्रतिसन्धानसहितेन शब्दात्मकोपादानेन यागे काम्यसाधनत्वबोधात्तदनन्तरङ्काम्यसाधनं यागः स्वर्गकामनियोज्यकः स्वर्गकामकृतिसाध्य इत्यौपादानिकस्तृतीयो बोधः ॥ ततो मत्कृतिसा-ध्यत्वेन यागेऽवगतः सा कृतिराश्रयं विनानुपपन्नेत्यनुपपत्तिप्रतिसन्धान सहितेन शब्देन स्वर्गकामो यागानुकूलकृतिमान् इत्यौपादानिकश्चतुर्थो बोधः। तथापि प्रवर्त्तकज्ञानालाभः। प्रवर्त्तकधीद्वारैव प्रवृत्तिपरं वाक्यं प्रवृ-त्तिजनकमिति स्वर्गकामस्य यागः कृतिसाध्योहमपि स्वर्गकाम इति युक्तिप्रतिसन्धानसहकृतेन शब्देन यागो मत्कृतिसाध्य इति पञ्चमो बोध इत्येकं मतं तत्र द्वितीयबोधाभिप्रायेणाह। कार्यं तावदिति। यद्वा स्व-कामो यजेतेति वाक्यात्स्वर्गकामस्य यागविषयकं कार्यमिति प्रथमो बोधः। तत्र षष्ठ्यर्थो ममेदंकार्यमित्यवगमवत्त्वरूपं नियोज्यत्वं संसर्ग-स्तथा चायमेव नियोज्यत्वेन स्वर्गकामस्यापूर्वेन्वयः एवं च स्वर्गका-मकार्यत्वं स्वर्गकामकृतिसाध्यत्वं यागस्य स्वर्गकामकृतिसाध्यत्वमन्तरेणा नुपपन्नमित्यनुपपत्तिप्रतिसन्धानेन प्रतीतापूर्वद्वारा च काम्यसाधनत्वज्ञाने ममेदं कार्यमित्यवगमवतः स्वर्गकामस्य यागः स्वर्गसाधनत्वेन ज्ञाय-मानं कार्यमिति द्वितीयो बोधः। तदनन्तरम्। कृतिसाध्यत्वेन यागे-ऽवगतः सा कृतिर्विनाश्रयं नोपपद्यत इति ज्ञाने स्वर्गकामः स्वनियोज्य कयागानुकूलकृतिमानिति तृतीयो बोधः। तदनन्तरमधिकारिभिन्नो न कर्त्तेति न्यायात् स्वर्गकामस्यावगतं कर्तृत्वं तच्च फलभागित्वरूपाधिका-रित्वमन्तरेणानुपपन्नमित्यनुपपत्तिज्ञाने स्वर्गकामो यागजन्यफलवानिति चतुर्थोधिकारित्वबोधः। ततः प्रवृत्तिपरं वाक्य सम्बन्धबोधकत्वमन्त-रेणानुपपन्नमित्यनुपपत्तिज्ञाने स्वर्गकामस्य यागः कार्यः स्वर्गकामो यागस्य कर्त्ताहमपि स्वर्गकाम इति यागो मत्कृतिसाध्योऽहं च तत्कर्ता तदधिकारी

चेति प्रवर्त्तकः पञ्चमो बोधः । तत्र प्रथमबोधाभिप्रायेण भूमिकामावरते कार्यं तावदिति अन्वयः सम्बन्धः ॥ नियोज्यो ममेदं कार्यमित्यवगततत्त्वरूपनियोज्यत्ववान् अतः कामिनो नियोज्यरूपत्वात्कार्यस्य नियोजकरूपत्वाच्च । तत्कामिकार्यतया स्वर्गादिकामनावतः कार्यतया पूर्वानुपस्थितापूर्वे शक्तिग्रहोनुपपन्न इति पूर्वोक्तदोषमुद्धरति अत्रेत्यादिना अत्र नियोज्यत्वेन कामिनः कार्यान्वयो अन्वयप्रयोजकं ॥

अन्वयप्रयोजकत्वरूपं योग्यत्वं काम्यसानत्वं स्वर्गादिसाधनत्वं तच्चापूर्वे न तु यागादाविति भावः ॥ ननु लिङो यदि कार्यत्वेन रूपेण घटादिसाधारणकार्ये शक्तिस्तर्हि कामिनो घटा दावन्वयेपि काम्यसाधनत्वरूपमन्वयप्रयोजकरूपं घटादावपि भविष्यतीत्याशयेनाह नहीति कामिनः प्रवृत्तिजनिका या॰ कर्त्तव्यताधीस्तस्याः काम्यभिन्नो यो विषय स काम्यसाधनत्वेनाज्ञात कर्त्तव्यतया न जानातीत्यर्थः ॥ काम्यभिन्नसन्ध्यावन्दनादिकं काम्यसाधनत्वेनाज्ञातमपि कर्त्तव्यतया जानातीति तत्र व्यभिचारवारणाय कामीत्युक्तं । सुखे दुःखाभावरूपे च काम्ये व्यभिचारवारणाय काम्यादन्यदित्युक्तं । न्यायनये काम्यसाधनत्वेन ज्ञाते काम्यसाधने व्यभिचारवारणाय ज्ञातमिति । तथा च कामी काम्यादन्यत्काम्यसाधनत्वेन ज्ञातमेव कर्त्तव्यतयाऽवैतीति व्याप्तिरपि सूचितेति भावः । ननु घटादावपि काम्यसाधनत्वभ्रमसंभवाद्घटादिकमेव यागविषयकं कार्यं भविष्यतीत्यत आह । न चेति कुतो नेत्यत आहान्यथाख्यातेरिति अन्यथाख्यातिर्विशेष्यावृत्तिप्रकारकज्ञानं तच्च गुरुणा न स्वीक्रियत इति भावः । ननु यागविषयककार्यं यागज्ञानमेव भविष्यतीत्यतआह । न च ज्ञानमिति । तस्याशुतरविनाशित्वादिति भावः । योग्यताबलादित्यस्यापूर्वमालम्बत इत्यनेनान्वयः ॥ योग्यताबलात् काम्यसाधनत्वरूपयोग्यताबलात् । तत्र द्वितीयबोधरूपमपूर्वं प्रमाणं दर्शयति यागविषयकमिति । कार्यस्यायिकार्यं स्वर्गकामनियोज्यकं ।

द्वितीयवद्वेति कल्पोक्तचतुर्थबोधरूपं प्रमाणं दर्शयति स्वर्गकाम इति । अनुभवोऽनुभवन् स्वविषयीकुर्वन् । अपूर्वमालम्बते अपूर्वरूपं कार्यं साधयति । ननु यदि यागादिसाधारण्येनैव कार्ये शक्तिस्तदा सन्ध्यावन्दनादौ न कलञ्जं भक्षयेदित्यादौ च फलाभावेनापूर्वाभावस्तथा च तत्र सन्ध्योपासनं कार्यमित्यभेदान्वयस्य कलञ्जभक्षणाभावविषयकं कार्यमित्यभेदान्वयबोधस्य च संभवेनापूर्वविषयकबोधे मानाभाव इत्यत आहैवं चेति । काम्ये । काम्यस्थले अपूर्वे कृप्तशक्तिः । नित्ये सन्ध्यावन्दनादौ निषेधे न कलञ्जभक्षयेदित्यादौ लिङ आहेत्यन्वयि तथा च लिङ्त्वेन कार्ये शक्तिकल्पने धात्वर्थनामार्थयोरभेदान्वयस्याव्युत्पन्नत्वादित्यथानुपपत्त्या नित्यस्थले निषेधस्थले च परत्वापूर्वकार्यं स्वीक्रियत एवेति एवं च कलञ्जभक्षणाभावविषयकं कार्यमिति बोधः । नन्वेवं लोकेऽप्यपूर्वं भासत एवेत्यवोच्यतामित्यत आह लोके चेति । कार्यत्वे लक्षणा लिङ्कार्यत्वे लक्षणा तथा च पाकः कार्यत्ववानिति बोधः ।

अत्रोच्यते कार्यत्व एव विधेःशक्तिर्लाघवान्न तु कार्यत्वविशिष्टे । न च यागे स्वर्गकामकार्यत्वान्वयबोधासम्भवो बाधकाभावात् । न च योग्यताज्ञानविरहो बाधकः न ह्यन्वयप्रयोजकरूपवत्त्वं योग्यता सेकानन्वयिनोवादेरपि सत्त्वात् किन्तु प्रकृतसंसर्गवत्त्वं तस्य च संशयसाधारणं ज्ञानं हेतुः । न च यागे स्वर्गकामकार्यत्वस्य संशयो न सम्भवति येनैवं स्यात् यच्चोक्तमिष्टसाधनत्वं विध्यर्थः यागे तस्य लिङा बाधयितुमशक्यत्वादिति तदपि न तस्य बाधकाभावात् उक्तं बाधकमिति चेन्न साक्षात्परम्परात्वं

व्युदस्य, साधनतासामान्यस्य लिङा बोधनात् यथा रूपवांश्चैत्र इत्यत्र नीलत्वादीन् व्युदस्य रूपसामान्यज्ञानं । अथैकविशेषबाधे शाब्दसामान्यज्ञानं तदितरद्विशेषणप्रकारतानियतं यथा घटेन जलमाहरेतेत्यत्र छिद्रेतरत्वेन घटज्ञानमतोऽत्रसाक्षात्त्वबाधे परम्परात्वप्रकारकं ज्ञानं कार्यं तच्च न सम्भवति द्वारानुपस्थितेरिति चेन्न घटेन जलमाहरेत्यत्र हि योग्यतया वस्तुतो यः छिद्रेतरस्तदन्वयो न तु तदितरत्वेन तदुपस्थापकपदाभावात् न च लक्षणया तदुपस्थितिर्मानाभावात् आस्तां वा तत्रापि साक्षादन्यसाधनत्वप्रकारेणैवान्वयः किन्नः छिन्नम् ।

ननु पचेतेत्यादौ कार्यत्वमिष्टसाधनत्वं शक्त्यैव लिङा बोध्यते एवं च स्वर्गकामो यजेतेत्यादावपीष्टसाधनत्वं कृतिसाध्यत्वं च लिङा बोध्यत इति नापूर्वे शक्तिः परन्तु साक्षात्स्वर्गसाधनत्वस्य यागे बाधादपूर्वरूपो व्यापारः कल्प्यतामित्यभिप्रायवान्वैयायिकः सिद्धान्तयति अत्रोच्यत इत्यादिना कार्यत्वे कृतिसाध्यत्वे । न त्विति । कार्यत्वविशिष्टे पूर्वे न शक्तिरित्यर्थः । नन्वाशुतरविनाशिनि यागे स्वर्गसाधनत्वबाधात्कथं कार्यत्वान्वयबोध इत्याह न च याग इति । ननूक्तमेव यागे कार्यत्वान्वयोनुपपन्नः इष्टसाधनत्वरूपान्वयप्रयोजकरूपवत्त्वरूपयोग्यताया अभावादित्याह न चेति । सेकान्वयिन इति । अनाप्तोक्तसमुद्रजलाभिप्रायेण पयसा सिञ्चतीत्यादावपि द्रवद्द्रव्यत्वरूपान्वयप्रयोजकत्वरूपयोग्यतायाः सत्त्वादिति भावः । प्रकृतेति । एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वमित्यर्थः। नचेति। तादृशसंसर्गरूपयोग्यताज्ञानेनैव निर्वाहे नियोज्य-

त्वेन योग्यतावच्छेदकरूपेण ज्ञानं नोपयुज्यत इति नापूर्वं वाच्यमिति भावः येन तादृशसंसर्गरूपयोग्यतासंशयासंभवेन । एवं स्यादिति । तादृशसंभवे स्वर्गकामिकार्यत्वान्वये इष्टसाधनत्वरूपमन्वयप्रयोजकरूपं वाच्यं । तच्च यागस्याशुतरविनाशित्वेन न संभवतीति विधेः शक्तिरपूर्वे स्यादित्यर्थः । नेष्टसाधनत्वं विध्यर्थ इति पूर्वोक्तमनूद्य दूषयति । यच्चोक्तमित्यादिना तस्य इष्टसाधनत्वस्य । अशक्यत्वादिति यागस्याशुतरविनाशित्वादिति भावः । ननु स्वर्गसाधनत्वं यागे कथं भासते साक्षात्साधनत्वस्य बाधात् परंपराघटकस्य त्वनुपस्थितेरित्यभिप्रायवानाहोक्तमिति व्युदस्याक्षाद्य । साधनेति । साधनत्वेन रूपेण साधनसामान्यस्य लिङा बोधनादित्यर्थः । तत्र दृष्टान्तमाह यथेति । साधनत्वेन रूपेण साक्षात्साधनस्य बाधात्परंपरासाधनमेव बुध्यते यथाघटेन जलमाहरेत्यत्र सच्छिद्रस्य बाधाच्छिद्रेतर एव घटो भासते । परंपरात्वपूर्वघटितत्वेत्याहाथेति एकविशेषबाधे साक्षात्साधनत्वरूपैकविशेषबाधे शाब्दसामान्यज्ञानं विधिपदात्साधनत्वेन रूपेण साधनसामान्यज्ञानं । तदितरेति । बाधितेतर परंपरासाधनत्वरूपविशेषप्रकारतानियतमित्यर्थः । द्वारेति । अपूर्वरूपद्वार घटितपरंपरायाः द्वारोपस्थापकपदाभावादसंभवादित्यर्थः । योग्यतया छिद्रेतरघटस्य जलाहरणयोग्यतया । तदुपस्थापकेति । छिद्रेतरत्वेन घटोपस्थापकपदाभावादित्यर्थः । ननु यथा प्रजपतीत्यत्र लक्षणया जोधातोः प्रकृष्टजपत्वेनैव रूपेण बोधस्तथा घटेनेत्यत्रापि घटपदलक्षणयछिद्रेतरत्वेनैव रूपेण घटबोधो भविष्यतीत्यत आह न चेति । तादृगुपस्थितिः । छिद्रेतरत्वेन रूपेणोपस्थितिः । छिद्रेतरत्वेन तात्पर्यग्रहेपि घटेनेत्यादितः शाब्दबोधादित्यभिप्रायवान्समाधत्ते मानाभावादिति । साधनत्वेन रूपेण परंपरासाधनत्वस्यैवावगमः यथा घटेन जलमाहरेदित्यत्र घटत्वेन रूपेण छिद्रेतरघटस्यैवावगमः । न तु छिद्रेतरत्वेन रूपेण पदोपस्थितेरभावादित्याशयवानाहास्त्वंवेति । तत्रापि व्रजेतेत्यत्रापि ।

यथा घटेनेत्यत्र घटपदाद्घटत्वेन रूपेण छिद्रेतरघटस्य भानं तथा विधिपदादपि साधनत्वेन रूपेण परंपरासाधनस्यैव भानमित्यर्थः । किंनश्छिन्नं । किमस्माकं गतमित्यर्थः ।

**अथ योग्यताज्ञानविरहो बाधकस्तथा हि आशुविनाशिनः कालान्तरभाविफलजनकत्वे फलपर्यन्तस्थायिव्यापारजनकत्वमन्वयप्रयोजकं न चेह तथा ज्ञानं सम्भवतीति चेन्न अन्वयप्रयोजकरूपवत्वस्य योग्यतात्वनिरासात् । नन्वेवं कथमपूर्वलाभ इति चेदाशुविनाशिनः कालान्तरभाविफलजनकत्वस्य तत्कालस्थायिभावव्यापारकत्वव्याप्तेः तदुक्तमाचार्यैः चिरध्वस्तं फलायालं न कर्मातिशयं विनेति ।**

ननु यदि परंपरासाधनत्वं यागे बुध्यते तर्हि काम्यसाधनताज्ञानजन्यं ममेदं कार्यमिति ज्ञानवतो मत्कृतिसाध्यो याग इति बोधो भवितुमर्हति । तत्र योग्यताज्ञानविरहरूपं बाधकमाशङ्कते । अथेति आशुतरविनाशिनः स्यापि व्यापारजनकत्वविरहिणो ज्ञानस्य संस्काररूपफलजनकत्वमतः कालान्तरभावीत्युक्तं । तादृशव्यापारविरहिणो दण्डस्य कालान्तरभाविघटजनकत्वमत आशिवत्युक्तं । इह व्रजेतेत्यादौ । तथा ज्ञानं यागे फलपर्यन्तस्थायिव्यापारजनकत्वज्ञानं । तदुपस्थापकपदाभावादिति भावः । निरासादिति । यागे स्वर्गकामकार्यत्वरूपयोग्यता संशयसंभवेनान्वयप्रयोजकत्वरूपयोग्यताया निरासादिति भावः । ननु यदितादृशयोग्यताया यागे संभवे स्वर्गकामस्य यागान्वये किमपूर्वेणेत्यत आह नन्विति । अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्व तत्रानन्यथासिद्धत्वस्य नियतपूर्ववृत्तित्वस्यापूर्वमन्तरेणाप्यक्षतमिति किमपूर्वकल्पनेनेतिभावः । ननु कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कारणताव-

च्छेदकसंबंधेन कारणसत्त्वमवश्यं वाच्यं तथा च सुखात्मकस्वर्गाधिकरणमात्मा तत्रापूर्वघटितपरंपरासंबन्धेनाशुविनाशिनो यागस्य सत्त्वं वाच्यं तथापूर्वास्वीकारे न संभवतीत्यभिप्रायवानाहाशुविनाशिन इति। तत्कालस्थायि स्वर्गकालस्थायीत्यर्थः । ननु स्वर्गकाल स्थायी यागध्वंसरूपव्यापारो भविष्यतीति क्वापूर्वलाभ इत्यतआह भावेति । नन्विदमप्रयोजकं । ध्वंसरूपव्यापारेणैव निर्वाहादिति चेन्न । भावाभावयोरेकस्मिन्कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वापत्तेः । तदुक्तमिति चिरध्वस्तं अतिपूर्वनष्टं । फलायालं फलजनने समर्थं कर्म यागादि । अतिशयं अदृष्टं विना नेत्यर्थः । तथा च चिरध्वस्तं कर्मातिशयरूपव्यापारं विना फलजनने न समर्थमित्यर्थः । इदं तु बोध्यम् । अपूर्वास्वीकारे स्वर्गधाराविच्छेदो न स्यात् नियतपूर्ववृत्तियागरूपकारणस्य सत्त्वात् किं च ब्रह्महत्यादिनापूर्वानुत्पत्तावपूर्वनाशार्थं प्रायश्चित्ते न प्रवर्त्तेत । अपि च । कीर्त्तितयागादपि फलञ्जायेत तथा च "धर्मः क्षरति कीर्त्तनादित्यादिकमपूर्वे मानमिति । ननु यागजन्यापूर्वं सर्वात्मनिष्ठवासनानिष्ठमेव कल्प्यतामिति चेन्न । व्यापारशून्यात्मनोपि प्रतिनियतस्वर्गभोगः स्यात् तदुक्तमाचार्यैः द्वितीयार्द्धेन" संभोगो निर्विशेषाणां । भूतैः संस्कृतैरपि । सम्भोगः प्रतिनियतभोगः । निर्विशेषाणां व्यापार शून्यानाम् । भूतैः भूतभाग्यवद्भिरिति संक्षेपः ।

भट्टास्तु धर्मिकल्पनातो धर्मकल्पनाया लघुत्वाद्यागादेरेव स्थायित्वं युक्तं न त्वपूर्वं नचैवमिदानीं यागप्रत्यक्षापत्तिः आत्मविशेषगुणानां द्वितीयक्षण एव योग्यत्वादित्याहुस्तन्न । इदानीं न यजेयमिति प्रत्यक्षविरोधात् विधिभिन्नोऽर्थवादः स त्रिविधः गुणवादोऽर्थवादो भूतार्थवादश्चेति तदुक्तं विरोधे

तत्रैव मरणावैकल्पिकं चतुर्वैकृति वार्षिकं वा कार्यम् । ब्रह्महत्याव्रतानुवृत्तौ "कामतो द्विगुणं प्रोक्तं पूर्वेषु च तदुच्यत इति" व्यासवचनात् । अकामकृते तु सेतुदर्शनं द्वादशाब्दव्रतं वा ।

त्वया चेह कृते स्थाने मदीये रघुनन्दन ।
आराध्यमानं मां राम पश्येयुरिह सागरे ।
महापातकयुक्ता वै तेषां पापं विनंक्ष्यतीति पाद्मवचनात् ।
नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने ।
अधःशायी जटाधारी पर्णमूलफलाशनः ।
ग्रामं विशेत भिक्षार्थी स्वकर्म परिकीर्तयन् ।
एककालं तु भुञ्जानो वर्षे तु द्वादशे गते ।
हेमस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विम इति शङ्खस्मरणाच्च ।
नच लोभैकमूलस्य चौर्यस्याकामकृतत्वमेवासम्भवतीति वाच्यम् ।

यस्मादपहरतस्तत्प्रान्त्यर्थितं सुवर्णमजानतो रजतत्वादिना वा जानतोऽपहारानन्तरमेव च नाशयतोऽन्यस्मै ददतो वा स्वाभिप्रायेणाभावेनाकामतोऽप्युपसंहारसम्भवात् । कृत्रिमसुवर्णे तु न सुवर्णत्वं रसवेधापादितसुवर्णसाम्यात्तदपहारे नेदं प्रायश्चित्तं सुवर्णस्तेयाभावात् । द्रव्यान्तरसंसृष्टसुवर्णापहारेतुभवत्येव सुवर्णस्तेयं, संसर्गेऽपि सुवर्णत्वानपायात् पृषदाज्ये आज्यत्ववत् तेन तत्रापि कामाकामाभ्यां व्रतव्यवस्था कल्प्या सगुणस्य निर्गुणसुवर्णहरणे चेवापेक्षम् । यथा भविष्ये ।

विशिष्ट गुणवान्विप्रो निर्गुणस्यापहृत्य तु ।
चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्विशुध्यतीति ।

मानससुवर्णस्तेये तु सुमन्तुः । सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः-पूतोभवतीति । रजतादिस्तेये तु प्रायश्चित्तं चतुर्विंशतिमते ।

रूप्यं हृत्वा द्विजो मोहाच्चरेच्चान्द्रायणव्रतम् ।
गद्याणादशकादूर्ध्वमाशताद्विगुणं चरेत् ।

आसहस्राच्च त्रिगुणमूर्ध्वं हेमविधिः स्मृतः ।
सर्वेषां धातुलोहानां पराकं तु समाचरेत् ॥
धान्यानां हरणे कृच्छ्रं स्त्रीणामैन्दवं स्मृतम् ।
रत्नानां हरणे विप्रश्चरेच्चान्द्रायणव्रतमिति ॥
इदानीं ब्रह्मवधादिचतुष्टयप्रायश्चित्तशेषमाह ।

**कामतस्तुकृतं यत्स्यान्नान्यथा वधमर्हति ॥**

कामकृतेष्वेव ब्रह्मवधसुरापानसुवर्णस्तेयेष्वग्निप्रवेशाग्निवर्णं सुरापानमुसलाभिघातादिना वधमर्हति नान्यथा अकामकृतेष्वपीति । तथाचाङ्गिराः ।

यः कामतो महापापं नरः कुर्यात्कथञ्चन ।
न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृत इति ।

प्रतिपदोक्तवधप्रकारोपलक्षणमेतत् इत्थं महापातकत्रयप्रायश्चित्तमत्रोक्तम् । गुरुतल्पप्रायश्चित्तं तु दशमाध्याये मातरं यदि गच्छेत्त्वित्यादिना पूर्वमेवोक्तं तदेतत्सर्वं प्रायश्चित्तं विख्याते रहस्ये च दोषे समानम् । न विख्यातमात्र एव । तस्मात् प्रकाशयेत्पापमित्यादिना रहस्यस्यापि प्राकाश्यत्वाभिधानात् प्रच्छादने नरकस्मरणात् । कलौ रहस्यप्रायश्चित्तनिषेधाच्चेत्युक्तं प्रथममध्यायेः कलौ पार्थिवाभिषेकात् सुवर्णस्तेये तु रहस्यव्रतमपि वर्तते । तदाह याज्ञवल्क्यः ब्राह्मणस्वर्णहारी तु रुद्रजापी जले स्थित इति । त्रिरात्रोपोषित इत्यनुवर्तते शुध्यति इति शेषः । रुद्रजपश्चैकादशकृत्वः कार्यः ।

एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित् ।
महापापैरपि स्पृष्टो मुच्यते नात्र संशय इत्यत्रिस्मरणात् ।

इदानीं स्मृत्यंतरप्रसिद्धस्य पतितसंसर्गस्य महापातकत्वाभावमभिप्रेत्य पापमात्रोत्पादकत्वं प्रपञ्चयितुमाह ।

**आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् ।**
**संक्रमन्तीह पापानि तैलविन्दुरिवाम्भसि ॥ ७९ ॥**

सहशब्दोऽत्रासनादिभिः प्रत्येकमभिसम्बध्यते । पतितादिभिः सहासनात्सहशयनात्सहयानात्सहसंभाषणात्सहभोजनादिह संसर्गकर्तृषु सङ्क्रामन्ति यथाम्भसि तैलबिन्दुरिति । तत्र च कालविशेषेण प्रायश्चित्तन्त्यापानां विशेषो ऽभिहितश्चतुर्थेऽध्याये संसर्गमाचरन्विप्रः पतितादिष्वकामत इत्यादिना ।

एवं विवाहितविशेषेषु निमित्तेषु स्वयमेव प्रायश्चित्तविरोधमभिधायाऽन्यत्र तु शेषं मुनिविभावितमित्यनेन स्मृत्यन्तरोक्तमेवाभ्युपगम्येदानीं स्वयमन्यैश्चानुक्तप्रायश्चित्तेषु निमित्तेषु साधारणप्रायश्चित्तमाह ।

**चान्द्रायणं यावकं च तुलापुरुष एव च ॥**
**गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥ ८० ॥**

चान्द्रायणं पूर्वोक्तं तस्य सर्वपापनाशकत्वमाह याज्ञवल्क्यः ।

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च ।
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामिति ।

यावकमाह शंखः ।

गोपुरीषयवाभ्यासो मासमेकं समाहितः ।
व्रतं तु यावकं कुर्यात्सर्वपापानुत्तये इति ।

यावकमिति प्रसृतयावकस्याप्युपलक्षणम् । तदाह हारीतः अथात्मकृतेः कर्म यदा कृतैर्गुरुमात्मानं पश्येदथात्मार्थं प्रसृतयावकं श्रपयेत्स्नातः शुचिर्भूत्वोदितेषु नक्षत्रेषु ताम्रपात्रे प्रसृतयावकं श्रपयेत्स्थय यवागूर्भवति तस्य श्रपणकाले रक्षां कुर्यान्नमो रुद्राय भूताधिपतये पर्वतानां पतये त्वामिमं रक्षस्वेति । शृतेवरावणेनाग्नौ जुहुयाद्देवबलिकर्म देवस्यत्वेत्युत्पूय सावित्र्याभिमन्त्रयेत् ।

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ।
निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ।
वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् ॥

अलक्ष्मीं कालकर्णीं च सर्वं पुनन्तु मे यवाः ।
महापातकसंयुक्तं दारुणं राजकिल्बिषम् ॥
बालवृत्तमधर्मं च सर्वं पुनन्तु मे यवाः ।
सुवर्णस्तेयमव्रत्यमयाज्यस्य च याजनम् ॥
ब्राह्मणानां परीवादं सर्वं पुनन्तु मे यवाः ।
श्वशूद्रावलीढं च काकोच्छिष्टमेव च ॥
मातापित्रोस्तु शुश्रूषां सर्वं पुनन्तु मे यवाः ।
गणान्नं गणिकान्नं च शूद्रान्नं श्राद्धसूतकम् ॥
चौरस्यान्नं तथाभक्ष्यं सर्वं पुनन्तु मे यवाः ।

इत्येतैः षड्भिर्मन्त्रैः ब्रह्मादिदेवानामिति प्राश्य ततः प्राणायस्वाहे त्यादिभिर्यथोक्तं सर्वं प्राश्नीयात् षड्रात्रं ततो नियमातिक्रमजान्यति षिद्धसेवनजादभक्ष्यभक्षणजाच्च सर्वस्मात्पापात्प्रमुच्यते सप्तरात्रं पीत्वा भ्रूणहत्यां गुरुतल्पं सुवर्णस्तेयं सुरापानं च पुनाति एकादशरात्रं पीत्वा पूर्वकृतं पापं नुदति एकविंशतिरात्रं पीत्वा गणान् पश्यति गणाधिपतिं विद्याधिपतिं पश्यति एवमहरहरनन्याहारो यावकं प्राश्नीयाद्योऽश्नीयाद्यावकं पाचितं गोमूत्रे सोंऽहसः प्रमुच्यत इत्याह भगवान्मैत्रावरुणिरिति । तुलापुरुषमाह याज्ञवल्क्यः ।

पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निक इति ॥

तत्प्रकारमाह हारीतः । अथातस्त्रिनयनोक्तस्य तुलापुरुषस्य कल्पं व्याख्यास्यामः ।

अयाज्ययाजनं कृत्वा प्राश्य मूत्रपुरीषके ।
अप्रतिग्रहमादाय भोजयित्वा तु निन्दितान् ॥
विनायकोपसृष्टस्य महाव्याधिहतस्य च ।
एतत्कृच्छ्रं तुलापुरुषं महापातकनाशनम् ॥

स्वर्गद्वारमिदं पुण्यं महादेवेन निर्मितम् ।
आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहं परम् ।
वाचा कायेन मनसा कृतानि विहितानि च ।
आचामस्तानि निर्हंति तत्र चाष्टुं च सूतकम् ।
तैलस्य ग्रहणं किञ्चित्कीलितं तु यत् ।
आखोर्मूत्रं पुरीषं च कुक्कुटस्पृष्टमेव च ।
पिण्याकस्तानि निर्हन्ति अस्थिभित्त्वा तु यत् स्थितम् ।
आहारेषु च ये दोषाः केशकीटाश्च ये क्वचित् ।
खरोष्ट्रमुखसंस्पृष्टं मद्यसंस्पृष्टमेव च ।
तक्रेण तानि निर्हन्ति यच्चान्यच्चाण्डालोकितम् ।
कनकाश्व तिलागावोभूमिराच्छादनं स्त्रियः ।
सर्वं पुनाति धर्मात्मा गूढं चोदकसक्तुभिः ।

ब्रह्महत्यां भ्रूणहत्यां सुवर्णस्तेयं सुरापानं गुरुदाराभिगमनं कन्यादूषणं क्लीबाभिगमनं वायुभक्षः पुनाति ।

गन्धोशीरमयौ कार्यौ पुरुषौ पलसंमितौ ।
नदीमृत्तिकया वापि पुरुषौ द्वौ तु कारयेत् ।
महापशुर्यन शरेण विद्वौ यद्वाशस्त्रमुभयोर्लब्धलक्षम् ।
तेनायसीं सुकृतां कारयित्वा प्रादेशमात्रामुभयोः क्रान्तशिक्यां ।
सौवर्णीं राजतीं वापि तुलां देवीं तु कारयेत् ।
अपि चन्दनवृक्षस्य खदिरस्यापि कारयेत् ।
तस्यालाभे तुला कार्या यथा वाप्युपपद्यते ।

यः पुरुषः पिङ्गलोबभ्रुर्हलमुसलचक्रपाणिस्तमहं पिङ्गलं बभ्रुं हलमुसलवज्रपाणिमावाहयिष्यामि स्तुत एहि नाग एहि कृष्णाजिन एहि स्वागतमनुस्वागतं भवते तुलापुरुषाय महादेवायेदमासनमिदं पाद्यमिदमर्घ्यमिदं गंधमाल्यधूपदीपं प्रतिगृहाण प्रसीद देव तुभ्यं नमोऽस्तु सुमना भव । अथ तुलामभिमन्त्रयेत ।

ऋषिमत्यं देवमत्य यत्सत्यं तेन सत्येन सत्यवादिनि ।
देशानां सम्पदं ब्रूहि किं बीजं वर्द्धयिष्यसि ।
राज्ञां च सम्पदं ब्रूहि कं नृपं वर्द्धयिष्यसि ।
अस्माकं सम्पदं ब्रूहि किमस्माकं भविष्यति ।
यदा तु गुरुमात्मानमसक्तुलया धृतम् ।
परं चैव लघुं मन्ये तदा कर्म समारभेत् ।

अग्नये पृथिव्यधिपतये स्वाहा वायवेऽन्तरिक्षाधिपतये स्वाहा सूर्याय दिवोऽधिपतये स्वाहा सोमाय नक्षत्राधिपतये स्वाहा कुबेराय यक्षाधिपतये स्वाहा इन्द्राय देवाधिपतये स्वाहा ब्रह्मणे त्रैलोक्याधिपतये स्वाहा देव्यै नगाधिपतये स्वाहा शालकटङ्कटाय स्वाहा कुष्माण्डराजपुत्राय स्वाहा विनायकाय स्वाहा महाविनायकाय स्वाहा वक्रतुण्डाय गणानां पतये स्वाहा धर्माय स्वाहा अधर्माय स्वाहा तुलायै स्वाहा तुलापुरुषाय स्वाहा प्रजापतिदेवाय मरुद्भिः सहैव पुनरागमनाय स्वाहा सकृच्चरित्वा पूतः कर्मण्यो भवति द्वितीयं चरित्वा गाणपत्यं प्राप्नोति त्रिः कृत्वा महादेवस्यार्द्धासनं प्राप्नोति आषाढ्यां कार्त्तिक्यां फाल्गुन्यां पुण्ये वा नक्षत्रे एषविहितो धर्म इति । अप्रतिग्रहमप्रतिग्राह्यमेषां कृष्णाजिनादि निन्दितान्पतितान्, आचामो मण्डः । पिण्याकन्तिलखलिः । तक्रम्पादाम्बु । उदकमिश्राः सक्तवो भ्रष्टयवचूर्णानि । एतानि चत्वारि त्र्यहं त्र्यहमावर्त्य त्र्यहमुपवसेदेवं पञ्चदशदिनानि भवन्ति। ननूदकस्य सक्तूनां च पृथगुपभोगेनोपवासनिवृत्या पञ्चदशत्वं मिश्राणामेवफलसाधनत्वश्रवणादुपवासश्रवणाच्च विवृतानि प्रकाशानि । तैलस्य दारुणं निषिद्धाहःसु भोजनाभ्यङ्गादिजन्यमलक्ष्मीकरं पापम् । केशकीटाखुब्रह्मघ्नाद्युपहताद्यभोजनजन्यं अस्थिस्थं चिरसञ्चितम्। आहारदोषा अभक्ष्याद्यभक्षणजन्याः अभक्ष्येह भक्षणजन्याः सुवर्णाश्वादिप्रतिग्रहजन्यं पापम् । स्त्रीवाभिगमनं नपुंसकेषु मैथुनम् ।

इदानीमुक्तव्रतानुष्ठाननिमित्तनिश्चयार्थं पूर्वकर्त्तव्यमाह ॥

गन्धोशीरमयाविति । गन्धश्चन्दनकाष्ठम् । उशीरं वीरणमूलं ताभ्यांपलपरिमिते द्वे पुरुषप्रतिमे कार्ये तदभावे नदीतीरद्वयमृत्तिकया वा । तत्र गन्धमयी स्वतटमृन्मयी वा स्वप्रतिमा स्वर्गसंज्ञा । उशीरमयी परतटमृन्मयी वा परप्रतिमा नरकसंज्ञा ।

प्रतिमा चान्दनी कार्या एकैव स्वर्गसंज्ञिता ।
उशीरस्यापरा कार्या तथा नरकसंज्ञितेति यमस्मरणात् ।

महापशुर्गजस्तद्द्विधकशरेण यद्वोभयतोधारस्य शस्त्रस्यास्यादेः खण्डन सुवर्णरजतचन्दनखदिराणामन्यतमेनान्येन यथालाभोपपन्नेन वा प्रादेशमात्रां सुदृढां पार्श्वद्वये शिक्यद्वयोपेतां तुलां कारयेत् तस्यां यः पुरुषः पिङ्गलइति मन्त्रेण माहादेवमावाह्य भगवते तुलापुरुषाय महादेवायेति मन्त्रेण इमासनमित्यासनादीनि प्रदाय तानि प्रतिग्रहाणेत्यादि सुमनाभवेत्यंतानुषङ्गेण दद्यात् । ऋषिसत्यमिति तुलामभिमन्त्रयेत् । देशानामित्यादि मन्त्रलिङ्गेन देशवीजराजेष्टानिष्टपरीक्षास्वप्ययं प्रकार इति दर्शितम् । बीजपरीक्षायां तु बीजानामेव तोलनम् । तत्र बीजानि स्थापयेदिति यमस्मरणात् । अन्यत्र प्रतिमाया एव स्वतोलनेऽप्याकर्मितिमन्त्रः । तुलारोहणानन्तरं स्वगौरवे परलाघवे च ज्ञाते व्रताधिकारी भवति एवं साम्येऽपि तुलादिव्ये तथादर्शनात् तोलनं वा सकृद्वारत्रयं किञ्चित्कालविलम्बेन कार्यं तत्र वारत्रयमपि स्वगौरवे दोषाधिक्यं वारद्वयं गौरवे दोषमाध्यस्थ्यं एकवारं गौरवे दोषाल्पत्वं साम्येऽल्पतरत्वमिति ज्ञेयम् ।

गौरवं तु पापपरीक्षायामेवानिष्टमन्यत्रेष्टमेव । अग्नय इत्यादि त्रयोदशाहुतीर्हुत्वा व्रतारम्भ इति । गवां वनं गच्छन्तीनामागच्छन्तीनां वानुगमनम् । तथाच हारीतः ।

चान्द्रायणं यावकं च तुलापुरुष एव च ।
गवां चैवानुगमनं सर्वपापप्रणाशनमिति ।
चकारात्कृच्छ्रातिकृच्छ्रादीनामपि ग्रहणम् ।

तथाच षट्त्रिंशन्मते।

यानि कानि च पापानि गुरोर्गुरुतराणि च।
कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शोध्यन्ते मनुरब्रवीदिति।

मनुरपि। पराकोनामकृच्छ्रोऽयं सर्वपापापनोदनइति। जन्मप्रभृत्यनेकपापानुवृत्तौ षडब्दकृच्छ्रं कुर्यात्। तथा चतुर्विंशतिमते।

जन्मप्रभृति पापानि बहूनि विविधानि च।
कृत्वार्वाक् ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत्।
प्रत्याम्नाये गवां देयं साशीति धनिना शतम्।
तथाष्टादशलक्षाणि गायत्र्या वा जपेद्बुध इति।

ब्रह्महत्येति महापातकोपलक्षणम्। ततोऽर्वाक्तनानि विनेति। महापातकावृत्तौ तु प्रत्येकप्रायश्चित्ताशक्तावेकं प्राणान्तिकमेव कार्यम्। तथाच विवस्वान्।

धर्मार्जनासमर्थस्य कर्त्तुः पापाङ्कितस्य वा।
ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणमिति।

धर्मार्जनासमर्थस्य प्रत्येकं महापातकप्रायश्चित्तासमर्थस्य पापैर्महद्भिरङ्कितस्य युक्तस्यैकतीर्थे मरणमेव शोधकमित्यर्थः। तीर्थं वाराणस्यादि तथाच कूर्मः।

अस्मिन्कलियुगे घोरे लोकाः पापानुवर्त्तिनः।
भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः।
नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम्।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युग इति।
मरणप्रकारमप्याह विवस्वान्।
सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च।
प्रायश्चित्तमनुज्ञातमग्निपातो महापथ इति।

इदमित्थमेव व्याख्येयम्। उपपातकाद्यावृत्तावपि षडब्दविधानेन मरणाभावात्। स्वधर्मानुष्ठानासमर्थपरत्वे तु पापाङ्कितप्रायश्चित्तपदयोरसङ्गतत्वापत्तेः।

एवं काण्डत्रयेण कलिप्रधानान् धर्मानभिधायेदानीं स्वकृतश्लोकसंदर्भस्य संख्यावर्णनेनावापोद्वापशङ्कामपाकुर्वन्पराशरत्वोक्त्या च स्वोत्प्रेक्षामात्रमूलत्वशङ्कामुन्मूलयन् कर्त्ता शास्त्रमुपसंहरति ॥

**एतत्पाराशरं शास्त्रं श्लोकानां शतपञ्चकम् ॥**
**द्विनवत्या समायुक्तं धर्मशास्त्रस्य संग्रहः ॥ ८१ ॥**

एतन्मदुक्तं नतुसुव्रतोक्तं श्लोकानामष्टोनषट्शतं पराशरस्यैव शास्त्रं शासनं पराशरोक्तिमूलकमेव नान्योक्तिमूलकम् । ननु सुव्रतोक्तं बृहत्पराशरीयमेवाचार्यैशास्त्रमुज्जृम्भते किन्त्वत्प्रयासेनेत्यत आह । धर्मशास्त्रस्य संग्रहइति । तस्य युगान्तरीयधर्मस्याप्यनुवादकत्वेनासाधारण्याभावादनेकत्र विप्रकीर्णानां कलिधर्मवचनानामेकत्र सङ्कलनमसाधारणं प्रयोजनं मत्प्रवृत्तेरित्यर्थः ।

ननूक्तकलिधर्मानुष्ठानमेतच्छास्त्राध्ययने सम्भवति तत्प्रापकमेव तु-प्रमाणं नास्तीत्यतआह ॥

**यथाध्ययनकर्माणि धर्मशास्त्रमिदं तथा ॥**
**अध्येतव्यं प्रयत्नेन नियतस्वर्गकामिना ॥ ८२ ॥**

अध्ययनक्रियाकर्माणि वेदादीनि तत्तद्विधिभिर्नियतं नित्यं यथाध्येतव्यानि तथा धर्मशास्त्राध्ययनविधिना शौचाचारांश्चशिक्षयेदित्यादिना इदमप्यध्येतव्यम् । नित्यस्याप्येतदध्ययनस्य काम्यत्वप्रतिपादनायाह । प्रयत्नेन स्वर्गकामिनेति । स्वर्गश्च

यन्न दुःखेन सम्भिन्नं नचग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदमिति ।

एव मादयुक्त लक्षणस्य कामतोऽभिलाषः सोस्यास्तीति स्वर्गकामी तेन प्रयत्नेन यथोक्त ब्रह्मचर्यादियत्नवतोपनयनानन्तरं वेदाध्ययनोपक्रमात्प्रागिदमध्येतव्यम् । अनेन द्विजानामेवैतदध्ययनमुक्तम् । तथाच बृहत्पराशरीये ।

पराशरोदितं शास्त्रं चतुर्वर्णाश्रमाय च ।
वेदितव्यं प्रयत्नेन सदाध्येयं द्विजातिभिरिति ।
अध्यापने तु ब्राह्मणस्यैवाधिकारः । तथाच मनुः ।
विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचिदिति ।
तस्य पर्वमात्रेऽनध्यायो नान्यत्र तथाच कौर्मे ।
अनध्याया नचांगेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वाण्येतानि वर्जयेदिति ॥

श्रीवत्सं निजवक्षसोद्वहति यस्तं दर्शयित्वाश्रियं
सन्धातुं किमु रत्नणे व्रजगवां विज्ञानतत्वः पुरा ॥
येनाम्भोनिधिमन्थने सुरवरांस्त्यक्त्वा परा न्वत्सला
श्रीरेवाभ्यगमत्स्वयं पतिमसौ कृष्णः क्रियान्मङ्गलम् ।१।

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
तद्द्वादशे विवरणं विहितं तथात्राध्याये,
महाघचयशुद्धिविचारणाय ॥ २ ॥

व्यर्थं प्रार्थनमेतयोरुभयथेत्यस्मान्निवृत्तं मया
यच्छीलं सहजं सदा सदसतोः स्तत्कोऽन्यथा त्वं नयेत् ॥
कस्य प्रार्थनया पुनाति सकलं दुष्टं जनं जान्हवी
कस्य व्यर्थनया निहन्ति सुकृतं सा कर्मनाशापि वा॥३॥

उच्चावचेषु विषयेषु परिभ्रमन्ती
गौश्चेदियं स्खलति कुत्रचिदप्यगाधे ।
सन्तः स्वधर्ममनुरुध्य निरुध्य
चेष्यामुद्धर्तुमेव तदिमां तरसा यतध्वम् ॥ ४ ॥

पराशरस्मृतेर्व्याख्या जाताभिरव्याप्रकाशिका ।
येनान्तरात्मना सोऽयमनया प्रीयतां हरिः ॥ ५ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृत्तौ विद्वन्मनोहरायां द्वादशोऽध्यायः ॥

शुभमस्तु ।

[1]अथ तद्वाक्यमाज्ञाय राजा चण्डालदर्शनः ।
अब्रवीत् प्राञ्जलिर्वाक्यं[2]विश्वामित्रं तपोधनम् ॥ १९ ॥
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैवच ।
[3]इमं विपर्ययं प्राप्तः काममप्राप्य काङ्क्षितम् ॥ २० ॥
सशरीरो दिवं यायामिति मे सौम्य[4]काङ्क्षितम् ।
[5]महायज्ञफलेनेति तच्च[6]नैवाप्यते मया ॥ २१ ॥
अनृतं नोक्तपूर्वं[7]हि विश्वामित्र मया क्वचित् ।
[8]कृच्छ्रेऽपि वर्त्तमानेन क्षत्रधर्मेण ते शपे ॥ २२ ॥
[9]यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही ।
गुरवश्च[10]मया सर्वे शीलवृत्तेन तोषिताः ॥ २३ ॥
धर्मे प्रयतमानस्य[11]शुद्धवाग्बुद्धिकर्मणः ।
परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव ॥ २४ ॥
[12]दैवमत्र परं मन्ये पौरुषं[13]नास्ति कारणम् ।
शुभाशुभफलप्राप्तौ नराणामिति मे मतिः ॥ २५ ॥
[14]तस्य मे परमार्त्तस्य दैवोपहतकर्मणः ।

15. किमागमनकार्यंते राजपुत्र (a) महाबल ॥ (a) S. महाबल: 1. B. 16. अथ तद्वाक्यमाकर्ण्य राजा चंडालतां गतः ॥ 2. B. 17. वाक्यज्ञो वाक्यकोविदं 3. B. 18. अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः । 4. B. 18. दर्शन, G. 21. दर्शनं, 5. B. 19. मया चेष्टं क्रतुशतं तच्च नावाप्यते फलं । 6. G. 21. नावाप्यते &c. 7. B. 19. मे न च वक्ष्ये कदाचन ॥ 8 B. 20. कृच्छ्रेष्वपि गतः सौम्य क्षत्र &c. 9. B. 20. यज्ञैर्बहुविधैरिष्टं प्रजा धर्म्मेण पालिताः ॥ 10. B. 21. महात्मानः शील &c. 11. B. 21. यज्ञं चाहर्तुमिच्छतः ॥ 12. For this Sl. B. 22-23. दैवमेव परं मन्ये पौरुषं तु निरर्थकं ॥ दैवेनाक्रम्यतेसर्वं दैवं हि परमा गतिः । 13 G. 25. तु निरर्थकं । 14. For this Sl. B. 23. तस्य मे

शरणागतस्य भगवन् प्रसादं कर्त्तु [1]मर्हसि ॥ २६ ॥
[2]नान्यां गतिं प्रपश्यामि नान्यः [3]शरणमस्ति मे ।
दैवं पुरुषकारेण निवर्त्तयितुमर्हसि ॥ २७ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
शतानन्दवाक्ये त्रिशङ्कुवाक्यम् ।

---

LXI.

उक्तवाक्यं तु राजानं [4]विश्वामित्रो महामुनिः ।
अब्रवीन्मधुरं वाक्यं [5]त्रिशङ्कोर्हर्षवर्द्धनम् ॥ १ ॥
[6]ऐक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम् ।
शरणं ते [7]भविष्यामि वसेह त्वं ममाश्रमे ॥ २ ॥
सर्वाना[8]मन्त्रयिष्यामि त्वत्कृतेन तपोधनान् ।
काङ्क्षितस्यास्य ते राजन् सिद्धये यज्ञ[9]कर्मणि ॥ ३ ॥
[10]गुरुशापकृतं रूपं यदेतद्धार्यते त्वया ।
संसिद्धस्त्वमनेनैव रूपेण स्वर्गमिष्यसि ॥ ४ ॥

---

परमार्तस्य प्रसादमभिकाङ्क्षतः ॥ कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः 1. G. 26. मर्हति. 2. B. 24. नान्यां गतिं गमिष्यामि नान्यच्छरणमस्ति मे । 3. G. 27. शरणादोऽस्ति मे । 4. B. LIX. 1. कृपया कुशिकात्मजः 5. B. 1. साक्षाच्चाण्डालतां गतं । 6. B. 2. and G. 2. have इक्ष्वाको &c. but P. has ऐक्ष्वाको &c. 7. B. 2. प्रदास्यामि मा भैषीर्नृपपुंगव ॥ 8. G. 3. मन्त्रयिष्येऽहं त्वत्कृते(a)च &c. (a) P. वै &c. For this Sl. B. 3. अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः यज्ञसाह्यकरान् राजंस्ततो यक्ष्यसि निर्वृतः ॥ 9. P. कर्मणः 10. For this Sl. B. 4. गुरुशापकृतं रूपं यदिदं त्वयि वर्तते । अनेन सह रूपेण सशरीरो गमिष्यसि ॥

हस्तप्राप्तमहं मन्ये स्वर्गं [1]ते नृपसत्तम ।
यस्त्वं [2]मामभ्युपागम्य त्रिदिवं गन्तुमिच्छसि ॥ ५ ॥
[3]एवमुक्त्वा महातेजाः पुत्रानाहूय सर्वशः ।
शिष्यांश्च सुहृदश्चान्यानुवाचेदं [4]वचस्तदा ॥ ६ ॥
आनयध्वमिह क्षिप्रं यज्ञद्रव्याण्यशेषतः ।
मदीयेनैव यज्ञोऽयं द्रव्येणास्य भविष्यति ॥ ७ ॥
[5]शिष्यानुवाच चाहूय सर्वानेव तदा वचः ।
सर्वानृषीनानयध्वं समुपेत्याज्ञया मम ॥ ८ ॥
यश्चत्र यद्वचनं ब्रूयान्ममवाक्यप्रचोदितः ।
तन्मे भवद्भिरावेद्यं यथाप्रोक्तमशेषतः ॥ ९ ॥
[6]शिष्यास्ततोऽस्य ते जग्मुर्दिशः सर्वे तदाज्ञया ।
आमन्त्र्य चाप्युपावृत्ता न चिरेण तपोधनान् ॥ १० ॥
[7]ऊचुः प्राञ्जलयोऽभ्येत्य विश्वामित्रमिदं वचः ।
तवोपमन्त्रिताः सर्वे मुनयोऽस्माभिराज्ञया ॥ ११ ॥

---

1. B. 5 तव नराधिप । 2. B. 5. कौशिकमागम्य शरण्यं शरणागतः 3. For. this and the following Sl. B. 6. एवमुक्त्वा महातेजाः पुत्रान् परमधार्मिकान् । व्यादिदेश महाप्राज्ञान् यज्ञसंभारकारणात् ॥ 4. G. 6. वचोऽर्थवत्, but P. has वचस्तदा· 5. For this and the following Sl: B. 7-9. सर्वान् शिष्यान् समाहूय वाक्यमेतदुवाच ह । सर्वानृषीन् सवासिष्ठानानयध्वं ममाज्ञया ॥ सशिष्यान् सुहृदश्चैव सर्त्विजः सुबहुश्रुतान् । यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः ॥ तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतं । 6. For this Sl. B. 9-10. तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ॥ आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः । 7. For this and the following Sl. B. 10-12. ते च शिष्याः समागम्य मुनिं

आज्ञा प्रतिगृहीता तैः सर्वैरेव तपोधनैः ।
अस्माभिरुक्तैरभ्येत्य वर्जयित्वा महोदयम् ॥ १२ ॥
[1]वसिष्ठस्य च पुत्राणां शतं क्रोधसमाकुलम् ।
यदुवाच वचो घोरं शृणु तन्मुनिपुङ्गव ॥ १३ ॥
[2]क्षत्रियो याजको यत्र चाण्डालस्य विशेषतः ।
कथं सदसि भोक्ष्यन्ते हविस्तत्र सुरोत्तमाः ॥ १४ ॥
ब्राह्मणा [3]वा महात्मानो भुक्त्वा चाण्डालभोजनम् ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण [4]पीडिताः ॥ १५ ॥
[5]निष्ठुरं वचनं प्राहुर्[6]तत्ते रक्तलोचनाः ।
वासिष्ठा मुनिशार्दूल सर्वे [7]ते समहोदयाः ॥ १६ ॥
[8]इति तेषां वचः श्रुत्वा शिष्याणां मुनिपुङ्गवः ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ १७ ॥
[9]यद्दूषयन्त्यदुष्टं मां वासिष्ठा [10]मन्दतेजसः ।
[11]भस्मभूता दुरात्मानः कालस्य वशमागताः ॥ १८ ॥

---

ज्वलिततेजसं ॥ ऋतुश्च वचनं (a) सर्वं सर्वेषां ब्रह्मवादिनां । श्रुत्वा तं वचनं सर्वं समायांति द्विजातयः ॥ सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयं । (a) V. सर्वं &c. 1. For this Sl. B, 12-13. वासिष्ठं यच्छ्रुतं सर्वं क्रोधपर्याकुलाक्षरं ॥ यथाह वचनं सर्वं शृणु त्वं मुनिपुंगव । 2. For this Sl. B, 13-14. क्षत्रियो याजको यस्य चंडालस्य विशेषतः ॥ कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः । 3. P. वे &c. 4. G. 15. पातिताः; B. 15. पालिताः. 5. For this line B. 15. वसद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ॥ 6. G. 16. तत् संरक्त &c. 7. B. 16. सह महोदयाः । 8. For this Sl. B, 16-17. तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुंगवः ॥ क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् । 9. For this Sl. B. 17-18. यद्दूषयंत्यदुष्टं मां तप उग्रं समास्थितं ॥ भस्मीभूता दुरात्मानो भविष्यंति न संशयः । 10. G. 18. मन्दचेतसः । 11. G. 18. भस्मीभूता &c.

अद्य ते कालपाशेन नीता वैवस्वतक्षयं ।
सप्तजातिशतान्येव [1]मृता यास्यन्ति दारुणाः॥ १९ ॥
[2]स्वमांसनियताहारा [3]मुष्टिकाणामनिर्घृणाः ।
विकृताश्च विरूपाश्च लोकाननुचरन्त्विति ॥ २० ॥
महोदयश्च दुर्बुद्धिर[4]दुष्टं मां प्रदूषयन् ।
दूषितः सर्वलोकेषु [5]निषादत्वमवाप्स्यति ॥ २१ ॥
प्राणातिपातनिरतो निरनुक्रोशतां गतः ।
दीर्घकालं मम क्रोधाद्दु[6]र्वृत्तो वर्त्तयिष्यति ॥ २२ ॥
एतावदुक्त्वा वचनं विश्वामित्रो [7]महामुनिः ।
विरराम महातेजा [8]स्तस्मिन् मुनिसमागमे ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
शतानन्दवाक्ये विश्वामित्रवाक्यम् ॥

---

LXII.

[9]तपोबलहतान् [10]दृष्ट्वा वासिष्ठान् समहोदयान् ।
ऋषिमध्ये [11]परं वाक्यं विश्वामित्रोऽभ्यभाषत ॥ १ ॥

---

1. G. 19. मृतपाः सन्तु सर्वशः । B. 19. मृतपाः संभवंतु ते। 2. B. 19. and P. श्वमांस &c. (a better reading). 3. G. 20. मुष्टिकामाः सुनिर्घृणाः । P. is illegible here. B. 19. मुष्टिकानामनिर्घृणाः । 4. B.20, मामदुष्ट &c. 5. B. 21. निषादत्वं गमिष्यति । 6. B. 22 द्दुर्गतिं &c. G 22, द्दुर्वृत्या &c, but P. has द्दुर्वृत्तो &c. 7. B. 22. महातपाः । 8. B. 22. ऋषिमध्ये महामुनिः ॥

9. Before this Sl. G. LXII. 1. reads the line: सक्रोधविषमुत्सृज्य गाधिजो रघुनन्दन ।10.G.1.कृत्वा &c. B. LX.1. ज्ञात्वा &c.11. B. 1. महातेजा &c.

अध्वर्युरभवत्तत्र विश्वामित्रो महातपाः ॥ ८ ॥
[1]ऋत्विजश्चाभवंस्तत्र मुनयः संशितव्रताः ।
तस्य यज्ञे तदा तस्मिंस्त्रिशङ्कोर्भूरितेजसः ॥ ९ ॥
[2]विश्वामित्रोऽथ भगवान् मन्त्रविन्मन्त्रपारगः ।
चकारावाहनं यज्ञे भागार्थं त्रिदिवौकसाम् ॥ १० ॥
[3]नाभ्यगच्छन् यदाहूता भागार्थं तत्र देवताः ।
ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ॥ ११ ॥
स्रुवमुद्यम्य [4]भगवांस्त्रिशङ्कुमिदमब्रवीत् ।
पश्य मे तपसो वीर्यं [5]स्वार्जितस्य नरेश्वर ॥ १२ ॥
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ।
[6]दुष्प्रापं स्वशरीरेण [7]दिवं गच्छ नराधिप ॥ १३ ॥
[8]बाल्यात् प्रभृति यत् किञ्चिन्मया सम्यक् तपश्चितम् ।
तेजसा तस्य तपसः सशरीरो दिवं व्रज ॥ १४ ॥
[9]उक्तवाक्ये मुनावेवं सशरीरो नृपस्तदा ।
ययौ स्वर्गं समाविश्य मुनीनां पश्यतान्तदा ॥ १५ ॥

1. For this Sl. B. 9-10. ऋत्विजश्चानुपूर्व्येण मंत्रवन्मंत्रकोविदाः ॥ चक्रुःसर्वाणि कर्माणि यथाकल्प यथाविधि । 2. For this Sl. B. 10-11. ततः कालेन महता विश्वामित्रो महातपाः ॥ चकारावाहनं तत्र भागार्थं सर्वदेवताः । 3. For this Sl. B. 11-12. नाभ्यागच्छंस्तदा तत्र भागार्थं सर्वदेवताः । ततः कोपसमाविष्टो &c. 4. B. 12. सक्रोधस्त्रिशंकु &c. 5. G. 13. ऊर्ज्जितस्य &c. but P. has स्वार्जितस्य &c. 6. G. 14. त्रिशंको &c. but P. has दुष्प्रापं &c. 7. B. 14. स्वर्गं &c. 8. For this Sl. B. 14-15. स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलं । राजंस्त्वं तेजसा तस्य सशरीरे दिवं व्रज । 9. For this Sl. B. 15-16. उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरे-

[1]त्रिदिवं तं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ।
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ १६ ॥
[2]त्रिशङ्को पत भूमौ त्वं नासि [3]स्वर्गकृतालयः ।
गुरुशापादुपहतो मूढ शीघ्रमवाक्शिराः ॥ १७ ॥
एवमुक्तो महेन्द्रेण त्रिशङ्कु[4]रपतद्दिवः ।
[5]उपाक्रोशंश्च पाहीति विश्वामित्रमवाक् शिराः॥१८॥
[6]तच्छ्रुत्वा वचनं तस्य पाहीति पततो [7]द्विजः ।
विश्वामित्रो भृशं क्रुद्धस्तिष्ठतिष्ठेत्युवाच तम् ॥ १९ ॥
[8]ततो ब्रह्मतपोयोगात् प्रजापतिरिवापरः ।
सृष्ट्वा दक्षिणमार्गस्थान् सप्तर्षीनपरान् प्रभुः ॥ २० ॥
नक्षत्रवंशमपरं स्रष्टुं समुपचक्रमे ।
स्वर्गस्य दक्षिणे मार्गे तपोब्रह्मबलाश्रयात् ॥ २१ ॥

---

परः । दिवं जगाम काकुत्स्थो मुनीनां पश्यतां तदा । 1. B. 16. स्वर्गलोकं गतं &c. 2. For this Sl. B. 17-18. त्रिशंको गच्छ भूयस्त्वं नासि स्वर्गकृतालयः । गुरुशापहतो मूढ पत भूमिमवाक्शिराः 3. P. स्वर्ग &c. 4. P. रपतद्भुवि । B. 18. रपतत्पुनः ॥ 5. G. 19 उपाक्रोशत् स &c. B. 19 विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनं । 6. For this Sl. B. 19-20. तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ रोषमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् । 7. G. 19. दिवः । 8. For this and the follwing Sl. B. 20-22. ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ असृजद्दक्षिणामार्गस्थान्सप्तर्षीनपरान्पुनः । नक्षत्र (a) वंशमपरमसृजत्क्रोधमूर्च्छितः ॥ दक्षिणां दिशमास्थाय ऋषिमध्ये महायशाः । (a) V. मालामपरा &c. Between the two lines of this Sl. of our text G. reads the additional line. अस्रजद्दक्षिणे मार्गे सप्तर्षीनपरांस्ततः । which however is wanting in P.

[1]दृष्ट्वा च नक्षत्रगणं क्रोधसंरक्तलोचनः ।
इन्द्रादीनपरान् देवान् स्रष्टुं समुपचक्रमे ॥ २२ ॥
ततः परमसंभ्रान्ताः [2]सदेवर्षिगणाः सुराः ।
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २३ ॥
[3]अयं राजात्मजः सौम्य गुरुशापपरिक्षतः ।
सशरीरो दिवं गन्तुं नार्हत्यकृतपावनः ॥ २४ ॥
[4]प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः ।
[5]प्रमाणैः स्थापितां संस्थां नातिक्रमितुमर्हसि ॥ २५ ॥
[6]इति तेषां वचः श्रुत्वा देवानां मुनिपुङ्गवः ।
अब्रवीत् [7]सुमहद्वाक्यमिदमाभाष्य देवताः ॥ २६ ॥
सशरीरस्य [8]विबुधास्त्रिशङ्कोरस्य [9]धीमतः ।
आरोहणं [10]प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २७ ॥
[11]गमनं सशरीरस्य त्रिशङ्कोर्मत्प्रतिग्रहात् ।

---

1. For this Sl. B. 22-23. सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ अन्यमिंद्रं करिष्यामि लोको वा स्यादनिंद्रकः । दैवतान्यपि सक्रोधात् स्रष्टुं समुपचक्रमे ॥ 2. B, 24. सर्षिसंघाः सुरासुराः । 3. G. 25. अयं राजा द्विजश्रेष्ठ etc. but P. has अयंराजात्मजः सौम्य &c.; for this Sl. B. 25. अयं राजा महाभाग गुरुशापपरिक्षतः । सशरीरो दिवं यातुं (a) नार्हत्येव तपोधन । (a) V. नार्हतीति etc. 4. This Sl. is wanting in B. 5. P. पुराणैः &c. 6. For this Sl. B. 26. तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः । अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ 7. G. 27. सेहवद्वाक्य &c. P. सुमहावाक्य &c. 8. B. 27. भद्रं वः &c. 9. B. भूपतेः. 10. B. प्रतिज्ञातं &c. 11. For this, and the following Sl. B. 28-29. स्वर्गोस्तु सशरीरस्य त्रिशंकोरस्य शाश्वतः । नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥

[1]नक्षत्राणि च सर्वाणि मया सृष्टान्यशेषतः ॥ २८ ॥
ध्रुवाणि सत्त्वयोगानि यावत्कालक्षयादिति ।
यावल्लोका धरिष्यन्ति तावत्स्थास्यन्त्यमूनि तु ॥ २९
[2]एतां प्रतिज्ञां सर्वे मे समनुज्ञातुमर्हथ ।
तमूचुर्विबुधा भीता एवमस्त्विति राघव ॥ ३० ॥
[3]तिष्ठन्त्वेतानि योगानि वैश्वानरपथाद्बहिः ।
अवाक्शिरा एव चायं त्रिशङ्कुरिह तिष्ठतु ॥ ३१ ॥
दक्षिणस्यामभिरतो दिशि स्वप्रभया ज्वलन् ।
[4]विश्वामित्रस्तु तच्छ्रुत्वा देवानां वचनं तदा ॥ ३२ ॥
बाढमित्यब्रवीत्तत्र सर्वदेवैरभिष्टुतः ।
ततो देवा ययुः सर्वे यथागतमरिन्दम ।
ऋषयश्च महात्मानो यज्ञस्यान्ते तपोधनाः ॥ ३३ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
शतानन्दवाक्ये त्रिशङ्कुस्वर्गारोहणम् ॥

---

यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः । 1. For this line, and the following Sl. G. 29-30. नक्षत्राणि च सर्वाणि ध्रुवाणीमानि सन्तु च ॥ यावल्लोका &c. P. has this line, and the first line of the next Sl. on the margin. 2. For this Sl. B. 29-30. मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुङ्गवं । एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥ 3. For this Sl. and the following line, B. 31-33 गगने तान्यनेकानि वैश्वानरपथाद्बहिः । नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिःषु जाज्वलन् ॥ अवाक्शिरा स्त्रिशंकुश्च तिष्ठत्वमरसन्निभः । अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमं ॥ कृतार्थं कीर्त्तिमन्तं च स्वर्गलोकगतं यथा । 4. For this line and the following Sl. B. 33-34. विश्वामित्रस्तु धर्म्मात्मा सर्वदेवैरभिष्टुतः ॥ ऋषिमध्ये महातेजा बाढमित्येव देवताः । ततो देवा महात्मानो ऋषयश्च तपोधनाः ॥ जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥

## LXIII.

[1]मुनीन् प्रतिगताम् दृष्ट्वा विश्वामित्रस्तपोधनः ।
अब्रवीन्मुनिशार्दूलः सर्वांस्तान् वनवासिनः ॥ १ ॥
[2]महान् विमर्दो [3]वृत्तोऽयं दक्षिणामभितो दिशं ।
दिशमन्यामतो यामस्तप्स्यामो यत्र वै तपः ॥ २ ॥
[4]पश्चिमस्यां दिशि सुखं पुष्करारण्यमाश्रिताः ।
[5]वयं तपश्चरिष्यामः परं तद्धि तपोवनम् ॥ ३ ॥
एवमुक्त्वा महातेजाः [6]पुष्करारण्यमाश्रितः ।
तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
[7]अथ तत्रापि वसतो विश्वामित्रस्य राघवः ।
अम्बरीषस्य राजर्षेर्यष्टुं मतिरजायत ॥ ५ ॥
[8]तस्य वै यजमानस्य नरमेधेन भूपतेः ।
प्रोक्षितं मन्त्रवद् यूपात् पशुमिन्द्रो जहार तम् ॥६॥
नरं लक्षणसम्पन्नं पशुत्वे विनियोजितं ।
तस्मिन् हृते पशौ [9]विप्रा राजानमिदम [10]ब्रुवन् ॥ ७ ॥

1. For this Sl. B. LXI. 1. विश्वामित्रो महातेजाः प्रस्थितान् वीक्ष्य तानृषीन् । अब्रवीन्नरशार्दूल सर्वां &c. 2. For this Sl. B. 2. महाविघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशं । दिशमन्यांप्रपत्स्यामस्तत्र तप्स्यामहे तपः ॥ 3. G. 2. प्रवृत्तो &c., but P. has वृत्तोऽयं &c. 4. For this Sl. B. 3. पश्चिमायां विशालायां पुष्करेषु महात्मनः । सुखं तपश्चरिष्यामः सुखं तद्धि तपोवनं ॥ 5. G. 3. तपस्तत्र चरिष्यामः &c., but P. has वयं &c. 6. B. 4. पुष्करेषु महामुनिः । 7. For this Sl. B. 5. एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान् । अंबरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ 8. For this, and the following Sl. B. 6. तस्य वै यजमानस्य पशुमिन्द्रो जहार ह । (a) प्रनष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ (a) V. प्रविष्टे तु etc. 9. G. 7. विप्रो &c. 10. G. 7. ब्रवीत् ; P. is worm-eaten here.

[1]पशुर्यः प्रोक्षितो राजन् केनापि स हृतो बलात् ।
अरक्षितारं [2]नृपतिं घ्नन्ति [3]दोषा नरेश्वर ॥ ८ ॥
[4]प्रायश्चित्तं महद्ध्येतत् तं त्वं पशुमुपानय ।
अन्यं वाप्यानय क्रीत्वा यावत् कर्म प्रवर्त्तते ॥ ९ ॥
उपाध्यायवचः श्रुत्वा स राजा [5]बहुश [6]स्तदा ।
अन्वेष्टुं पशुमारेभे पुरुषं लक्षणान्वितम् ॥ १० ॥
देशान् जनपदां [7]श्चैव नगराणि वनानि च ।
[8]आश्रमांश्च तथा पुण्यान् [9]प्रविशन् वै महामनाः॥११
[10]अन्विष्यमाणः सोऽपश्यदृचीकं नाम राघव ।
बहुपुत्रं दरिद्रं च द्विजं गृहनिवासिनम् ॥ १२ ॥
[11]अभिगम्याम्बरीषस्तं [12]विप्रं वचनमब्रवीत् ।
तपः स्वाध्यायनिरतं पृष्ट्वा कुशलमादितः ॥ १३ ॥
[13]गवां शतसहस्रेण सुतमेकं प्रयच्छ मे ।

---

1. For this Sl. B 7. पशु (a) रभ्याहृतो राजन् प्रनष्टस्तव दुर्नयात् । अरक्षितारं राजानं घ्नन्ति etc. (a) V. रथ्याहृतोetc. 2. G.8. च नृपं etc. 3. G. 8. देवा etc. but P. has दोषा etc. 4. For this Sl. B. 8. प्रायश्चित्तं महद्ध्येतच्चरं ना पुरुषर्षभ । आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ 5. B. 9. पुरुषर्षभः । अन्विषेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ 6. P. स्ततः. 7. B. 10. स्तांस्तान् etc. 8. B. 10. आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ 9. G. 11. प्राविशद् etc., but P. has प्रविशन् etc. 10. For this Sl. B. 11. स पुत्र सहितं तात सभार्यं रघुनन्दन । भृगुतुङ्गे समासीनमृचीकं संददर्श ह ॥ 11. For this Sl. B. 12. तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च । (a) महर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ॥ (a) V. & S. ब्रह्मर्षिं etc. 12. P. द्विजं etc. 13. For this and the following 2 Slokas, B. 13-15. पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः । गवां शतसहस्रेण विक्रीणीषे सुतं यदि ॥ पशोरर्थे महाभाग कृतकृत्यो,

नरमेधे महायज्ञे [1]पश्वर्थाय द्विजोत्तम ॥ १४ ॥
[2]यदि ते रोचते ब्रह्मन् सुतमेकं परित्यज ।
बहवोऽनुसृता देशा न लेभे यज्ञियं [3]नरम् ॥ १५ ॥
दातुमर्हसि मूल्येन सुतमेकं द्विजोत्तम ।
पशोरर्थे कृतार्थः स्यामहं काश्यप सुव्रत ॥ १६ ॥
[4]इत्युक्तोऽथाम्बरीषेण ऋचीको रघुनन्दन ।
नविक्रेष्याम्यहं पुत्रं ज्येष्ठमित्यब्रवीद्वचः ॥ १७ ॥
[5]ऋचीकवचनं श्रुत्वा माता तेषां यशस्विनी ।
उवाचर्चीकपुत्राणां तं राजानमिदं वचः ॥ १८ ॥
अविक्रेयं सुतं ज्येष्ठं भगवानाह [6]काश्यपः ।
[7]ममाप्येकं कनीयांसं न शुल्क्यं विद्धि सुप्रियम् ॥ १९ ॥
[8]पितॄणां वल्लभा ज्येष्ठाः प्रायेण हि सुता नृप ।
मातॄणाञ्च कनीयांसस्तस्माद् रक्ष्यौ हि तौ नृप ॥ २० ॥
उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च ।

ऽस्मि भार्गव । सर्वे परिगता देशा यज्ञियं न लभे पशुं ॥ दातुमर्हसि मूल्येन सुतमेकमितो मम । 1. B. 14. पश्वर्थं च etc. 2. Before this Sl. of our text G. (15) reads the additional line बहुपुत्रो दरिद्रश्च वृद्धश्चासि द्विजोत्तम । 3. G.16. पशुं· 4. For this Sl. B. 15-16. एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ॥ नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन । 5. For this Sl. B. 16-17. ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनां ॥ उवाच नरशार्दूलमम्बरीषमिदं वचः । 6. B. 17. भार्गवः । 7. For this line B. 18. ममापि दयितं विद्धि कनिष्टं शुनकं प्रभो । तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥ G. 20. ममाप्येवं कनीयांसं सुतं विद्धि वरं प्रियं ॥ P. is illegible here. 8. For this Sl. B. 19. प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः ॥

शुनःशेफ [1]इदं तत्र मध्यमो वाक्यमब्रवीत् ॥ २१ ॥
[2]ज्येष्ठः पितुरविक्रेयः कनीयान् मातुरेव च ।
विक्रीतं मध्यमं मन्ये राजन्नाशु नयस्व माम् ॥ २२ ॥
[3]गवां शतसहस्रेण शुनःशेफं [4]ततो नृपः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २३ ॥
[5]रथमारोप्य तं राम शुनःशेफं त्वरान्वितः ।
आजगाम ततो यज्ञं समापयितुमात्मनः ॥ २४ ॥

॥ इत्यादिकाण्डे बालचरिते शतानन्दवाक्ये
शुनःशेफविक्रयः ॥

---

## LXIV.

[6]शुनःशेफं तमादाय स राजा श्रान्तवाहनः ।
[7]व्यगमत् पुष्करे तीर्थे मध्याह्ने रघुनन्दन ॥ १ ॥
तस्य [8]विश्राम्यतस्तत्र शुनःशेफो महा[9]मतिः ।

---

मातृणां च कनीयांसस्तस्माद्वृद्ध्ये कनीयसं ॥ 1. B, 20. स्वयं राम मध्यमो etc. 2. For this Sl. B 21. पिता ज्येष्ठमविक्रेयं माता चाह कनीयसं । (a) विक्रेयं ०मध्यमं मन्ये राजपुत्र नयस्व मां ॥ (a) V. विक्रीतं etc. 3. Before this Sl of our text B. (22) has अथ राजा महाबाहो वाक्यान्ते ब्रह्मवादिनः । हिरण्यस्य सुवर्णस्य कोटिभी रत्नराशिभिः । 4. B. 23. नरेश्वरः 5. For this Sl. B. 24. अंबरीषस्तु राजर्षी रथमारोप्य सत्वरः । (a) शुनःशेपं महातेजा जगामाशु महायशाः ॥ (a) V. and S. शुनः शेफं etc.

6. For this Sl. B. LXII. 1. (a) शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः । व्यश्रमत्पुष्करे राजा मध्याह्ने etc. (a) V. and S. have शुनःशेफ everywhere for शुनःशेप in B. 7. G. 1. व्यश्रमत् etc. 8. B. 2. विश्रममाणस्य; G. 2. विश्रमतस्तस्य, but P. has विश्राम्यत etc. 9. B, 2. यशाः ।

पुष्करं [1]तीर्थमागम्य विश्वामित्रं ददर्श ह ॥ २ ॥
[2]स दीर्णहृदयो दीनो विक्रयेण श्रमेण च ।
जगाम शिरसा पादौ मुनेर्वाक्यमुवाच ह ॥ ३ ॥
[3]न मेऽस्ति माता न पिता न सुहृन्न च बान्धवाः ।
त्रातुमर्हसि मां त्यक्तं बन्धुभिः शरणागतम् ॥ ४ ॥
[4]राजा च कृतकार्यः स्याज्जीवेयं चाप्यहं यथा ।
भवतो वीर्यमाश्रित्य तथा त्वं कर्तुमर्हसि ॥ ५ ॥
[5]नाथो मे त्वमनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं कृपणं त्रातुमर्हसि मां मुने ॥ ६ ॥
तस्यैतद्वचनं श्रुत्वा [6]विश्वामित्रस्तपोधनः ।
सान्त्वयित्वा [7]शुनःशेफं स्वान् पुत्रानिदमब्रवीत् ॥७॥
[8]यत् कृते पितरः पुत्रानिच्छन्ति [9]गुणवत्तमान् ।
दुर्गसन्तरणार्थाय तस्य कालोयमागतः ॥ ८ ॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।

1. B. 2. ज्येष्ठमागम्य etc. G. 2. श्रेष्ठमागम्य etc., P. ज्येष्ठमागम्य etc.. 2. For this Sl. B. 3-4. तप्यंनर्मार्षिभिः सार्धं मातुलं परमातुरः । विषण्णवदनो दीनस्तृष्णाया च श्रमेण च ॥ पपातांके मुने राम वाक्यं चेदमुवाच ह । 3. For this Sl.B. 4-5. न मेऽस्ति माता न पिता ज्ञातयो बांधवाः कुतः ॥ त्रातुमर्हसि मां सौम्य धर्म्मेण मुनिपुंगव । त्राता त्वं हि नरश्रेष्ठ सर्वेषां त्वं हि भावनः । 4. For this Sl. B. 6. राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः । स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमं । 5. For this Sl. B. 7. स मे नाथो ह्यनाथस्य भव etc. Sl. पितेव पुत्रं धर्म्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ 6. B. 8. विश्वामित्रो महातपाः । 7. B. 8. बहुविधं पुत्रानिदमुवाच ह ॥ 8. For this Sl B. 9. यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः । परलोकहितार्थाय तस्य कालोय मागतः ॥ 9 G. 8. गुणवत्तरान्.

[1]तस्य जीवितदानेन प्रियं मे कर्त्तुमर्हथ ॥ ९ ॥
[2]सर्वे सुकृतकल्याणाः सर्वे सुचरितव्रताः ।
ते यूयं मन्नियोगेन मोक्षयध्वं [3]महामुनिम् ॥ १० ॥
अध्वराग्नेः समिद्धस्य गत्वा तृप्तिं प्रयच्छत ।
मोक्षयध्वमिमं चैव पशुत्वान्मम शासनात् ॥ ११ ॥
[4]शरणं मामनुप्राप्तमृचीकस्य मुनेः सुतं ।
स्यादविघ्नं यथा तस्य राजर्षेः क्रियतां तथा ॥ १२ ॥
[5]इति पित्रानुशिष्टास्ते [6]मधुस्यन्दादयस्तदा ।
साभिमानमिदं वाक्यमूचुः पितरमप्रियम् ॥ १३ ॥
कथमात्मसुतान् हित्वा [7]त्राता परसुता[8]नपि ।
[9]भगवन् कार्यमेतत्ते स्वमांसस्यैव भक्षणम् ॥ १४ ॥
[10]इति तेषां वचः श्रुत्वा पुत्राणां मुनिरप्रियम् ।
क्रोधसंरक्तनयनः पुत्रांस्तानशपत् तदा ॥ १५ ॥

---

1. B. 10. अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ 2. For this, and. the following Sl. B. 11. सर्वे सुकृतकर्म्माणः सर्वे धर्मपरायणाः । पशुभूता नरेंद्रस्य तृप्तिमग्नेः (a) प्रयच्छत ॥ (a) V. and, S. have प्रयच्छथ. 3. G. 10. मुनेः सुतं 4. For this Sl. B. 12. नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नतो भवेत् । देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः । 5. For this Sl. B. 13. मुनेस्तद्वचनं श्रुत्वा मधुच्छन्दादयः सुताः । साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ 6, G. 13. मधुस्यन्दादयस्ततः, P. मधुच्छन्दादयस्तथा 7. B. 14. त्रायसेऽन्यसुतं विभो. 8. G. 14. नपि. 9. B. 14 अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ 10 For this Sl. B. 15. तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः । क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥

## शमिता यज्ञे । ६ । ४ । ५४ ॥

शमयितेत्यर्थः ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ॥

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् ॥ णिलोपापवादः । कामयाञ्चक्रे । कारयाञ्चकार । अन्त । गडयन्तः । तृविशिभ्यां झच् इत्यतोऽनुवर्तमाने तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेत्यौणादिको झच् । झोऽन्तः । गडेर्घटादित्वान्मित्वे ह्रस्वः । मण्डयन्तः । आलु । स्पृहयालुः । स्पृहिगृहीत्यादिना आलुच् । आय्य । स्पृहयाय्यः । श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्यौणादिकः । इत्नुः । स्तनयित्नुः । स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् इत्यौणादिकः । इष्णु । पारयिष्णवः । णेश्छन्दसीति इष्णुच् ।

## ल्यपि लघुपूर्वात् । ६ । ४ । ५६ ॥

लघुपूर्वात् परस्य णेरयादेशः स्याल्ल्यपि । विगणय्य । प्रणमय्य । प्रबेभिदय्य । लघुपूर्वात् किम् । सम्प्रधार्य ।

## विभाषाऽऽपः । ६ । ४ । ५७ ॥

आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य । प्राप्य । इङादेशस्य लाक्षणिकत्वान्न । अध्याप्य ।

## युप्लुवोर्दीर्घश्छन्दसि । ६ । ४ । ५८ ॥

ल्यपीत्यनुवर्तते । वियूय । विप्लूय । छन्दसि किम् । वियुत्य । आप्लुत्य ।

## क्षियः । ६ । ४ । ५९ ॥

क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय ।

## निष्ठायामण्यदर्थे । ६ । ४ । ६० ॥

ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो दीर्घः ॥ क्षियो दीर्घादिति नत्वम् । प्रक्षीणः सः । आदिकर्मणि क्तः कर्तरि । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ।

## वा ऽऽक्रोशदैन्ययोः । ६ । ४ । ६१ ॥

क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च ॥ क्षीणायुर्भव । क्षितायुर्भव । क्षीणोऽयं तपस्वी क्षितो वा ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च । ६ । ४ । ६२ ॥

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात् स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च ॥ अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । इहार्द्धधातुक इत्यधिकृतं सीयुटो विशेषणं नेतरेषामव्यभिचारात् । कानि पुनरस्य योगस्य प्रयोजनानि ।

वृद्धिश्चिण्वद्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।

इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥

चिण्वद्भावाद्वृद्धिः । भाविष्यते । भविष्यते । अभाविष्यत । अभविष्यत । अन्वभाविषाताम् । अन्वभविषाताम् । भाविषीष्ट । भविषीष्ट । भाविता । भविता । चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः । भाविष्यते । पक्षे भावयिष्यते । अभाविष्यत । अभावयिष्यत । अभाविषाताम् । अभावयिषाताम् । भाविषीष्ट ।

भावयिषीष्ट । भाविता । भावयिता । सन्नन्ताद्यङन्ताच्चाविशेषः । यङ्लुगन्तात्तु बोभाविष्यते । बोभविष्यते इत्यादि । स्ताविष्यते । स्तोष्यते । अस्ताविषाताम् । अस्तोषातामित्यादि । परत्वान्नित्यत्वाच्च गुणे रपरे च कृतेऽजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिष्यते । स्मारिष्यते । कारिष्यते । अरिष्यते । स्मरिष्यते । करिष्यते इत्यादि । गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथाहि । चिण्वदिटो दीर्घो न । प्रकृतस्य वलादिलक्षणस्यैवेटो वृतो वेत्यनेन दीर्घविधानात् । अगारिध्वम् । द्वितीये त्विटि वृतो वेति वा दीर्घः । अगरीध्वम् । अगरिध्वम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वचयञ्चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः । लिङ्सिचोरिति विकल्पादिडभावे उश्चेति कित्वमित्वं रपरत्वं हलि चेति दीर्घः । इणः षीध्वमिति नित्यं ढत्वं अगीर्ढ्वम् । ढवमानां द्वित्वविकल्पेऽष्टौ । उक्तषण्णवत्या सह सङ्कलने उक्ता सङ्ख्येति ।

> इट् दीर्घश्चिण्वदिट् लत्वं ढत्वं द्वित्वंचिकं तथा ।
> इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

चिण्वद्भावाद्युक् । दायिष्यते । धायिष्यते । ग्लायिष्यते । दास्यते । धास्यते । ग्लास्यते । अदायिषाताम् । अधायिषाताम् । अग्लायिषाताम् । अदिषाताम् । अधिषाताम् । अग्लासाताम् । एवं दायिषीष्ट । दासीष्ट । दायिता । दातेत्यादि । चिण्वद्भावाद्वा दीर्घः । हेतुमण्ण्यन्तात् शाम्यतेः कर्मणि लृडादयः । शामिष्यते । शमिष्यते । शमयिष्यते । अशामिष्यत । अशमिष्यत । अशमयिष्यत । अशामिषाताम् । अशमिषाताम् । अशमयिषाताम् । शामिषीष्ट । शमिषीष्ट ।

शमयिषीष्ट । शामिता । शमिता । शमयिता । ण्यन्ताण्णिच्यप्येवम् । न च णिलोपस्य स्थानिवत्त्वं दीर्घविधौ तन्निषेधात् । पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चर्विधिषु प्रत्याख्यानानां भाष्यकाराणां मते तु णाविति जातिपरो निर्देशः । यङन्ताण्णिचि शंशामिष्यते । शंशमिष्यते । शंशमयिष्यते इत्यादि । यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः । अथ हनादयः स्यादिषूदाह्रियन्ते । चिण्वद्भावाद्धो हन्तेरिति कुत्वम् । अचिण्णलोरित्युक्तेर्हनस्तौ न । घानिष्यते । हनिष्यते । अघानिष्यत । अहनिष्यत । अघानिषाताम् । अहसाताम् । पक्षे आत्मनेपदेष्वन्यतरस्यामिति वधादेशः । अवधिषाताम् आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावः । आर्द्धधातुके सीयुट इति विशेषविहितत्वात् । घानिषीष्ट । पक्षे वधिषीष्ट । घानिता । हन्ता । न च स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम् । अङ्गस्येत्यधिकारादाङ्गस्यैवातिदेशात् । अत एव । एष्यते । आयिष्यते । अध्येष्यते । अध्यायिष्यते इत्यादौ इणिङादेशा अपि न भवन्ति । चिण्वदिटो न दीर्घत्वम् । प्रकृतस्य वलादिलक्षणस्येटो ग्रहो लिटीत्यनेन दीर्घविधानात् । ग्राहिष्यते । ग्रहीष्यते । अग्राहिष्यत । अग्रहीष्यत । अग्राहिषाताम् । अग्रहीषाताम् । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । दर्शिष्यते । द्रक्ष्यते । अदर्शिष्यत । अद्रक्ष्यत । अदर्शिषाताम् । लिचः कित्त्वादम् । अदृक्षाताम् । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । स्यादिषु किम् । चेतव्यम् । आर्द्धधातुके किम् । प्रस्तुवीत । कर्मकर्तरीदम् । तच्च न दुहस्नुनमामिति यकः प्रतिषेधः । क्रियेत

ह्रियेतेत्यत्र युक्सत्वेपि तदन्तस्यैव च मा भूत्। सति तु वृद्धियुक्तौ स्याताम्। अतो लोपो वा स्यादिति सर्वथा रूपासिद्धिः। भावकर्मणोः किम्। चेष्यति। दास्यति। अञ्झनग्रहदृशां किम्। पठिष्यते।

## दीङो युडचि क्ङिति। ६। ४। ६३॥

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात्। दिदीये। अचि किम्। देदीयते। क्ङिति किम्। उपदानम्।

## आतो लोप इटि च। ६। ४। ६४॥

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात्। पपतुः। पपुः। प्रदा। प्रधा। पपिथ। तस्थिथ। अजाद्योः किम्। ग्लायते। दासीय। आर्द्धधातुकयोः किम्। वान्ति। यान्ति। व्यत्यरे। व्यत्यले॥

## ईद्यति। ६। ४। ६५॥

यति परे आत ईत् स्यात्। गुणः। देयम्। ग्लेयम्॥

## घुमास्थागापाजहातिसां हलि। ६। ४। ६६॥

एषामात ईत् स्याद्धलादौ क्ङित्यार्द्धधातुके॥ दीयते। धीयते। देदीयते। देधीयते। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। गीयते। जेगीयते। अध्यगीष्ट। अधगीष्यत। गाङ्कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणात् नेह। गाङ् गतौ। अगास्त। पा पाने। पीयते। पेपीयते। पै ओवै शोषणे इत्यस्य च नेह ग्रहणम्। एकस्य लुग्विकरणत्वादपरस्य लाक्षणिकत्वात्। हीयते। जेहीयते। जहातीति

भृजामिदितीत्वरहितनिर्देशेन ओहाङो न । अवसीयते । अवसेषीयते । स्यतेरेव ग्रहणम् । व्याख्यानात् । तन्त्रान्तरे स्यतीति श्यना निर्देशाच्च । न तु चे जै षै चये इत्यस्य । हलि किम् । ददतुः । क्ङिति किम् । दाना ।

## एर्लिङि । ६ । ४ । ६७ ॥

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके क्ङिति लिङि ॥ देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । किति किम् । दासीष्ट । जहातीति श्तिपा निर्देशान्नेह । आशिषि जाहायात् ।

## वान्यस्य संयोगादेः । ६ । ४ । ६८ ॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि ॥ ग्लायात् । ग्लेयात् । अन्यस्य किम् । स्थेयात् । संयोगादेः किम् । यायात् । किति किम् । ग्लासीष्ट ।

## न ल्यपि । ६ । ४ । ६९ ॥

ल्यपि परे घुमास्थादेरात ईत्वं न ॥ प्रदाय । प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । अवसाय । मीनातिमिनोतीत्यात्वे कृते प्रमाय । निमाय । उपदाय ।

## मयतेरिदन्यतरस्याम् । ६ । ४ । ७० ॥

मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य । अपमाय वा याचते । याचित्वा अपमयते इत्यर्थः । उदीचां माङो व्यतीहारे इत्यपूर्वकालेऽपि विकल्पेन क्त्वा ॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः । ६ । ४ । ७१ ॥

एषु परेष्वङ्गस्याडागमः स्यात् स चोदात्तः ॥ अभूत् । अभवत् । अभविष्यत् ।

## आडजादीनाम् । ६ । ४ । ७२ ॥

अजादीनामाट् स्याल्लुङादिषु स चोदात्तः ॥ अटोऽपवादः । आटश्चेति वृद्धिः । ऐधिष्ट । ऐधत । ऐधिष्यत । कथमैज्यत । औप्यत । औह्यत । औयत इत्यादि । लङि कृते लावस्थायामेवाडागमोऽन्तरङ्गत्वाल्लादेशः । तत्र कृते विकरणो नित्यत्वादडागमं बाधते । शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम् । कृते हि विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यमकृते तु धातुमात्रस्य शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति न तु शब्दान्तरादिति विकरणो नानित्यः । विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति । सम्प्रसारणे कृते त्वजाद्यङ्गम्भवतीत्याडजादीनामित्याडागमः । यद्वा उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते इति न्यायेन पूर्वमड् न प्रवर्तते । सम्प्रसारणोत्तरमाडागमस्योपजनिष्यमाणनिमित्तत्वात् । अपवादोऽपि यद्यन्यत्रेति न्यायस्य तु नात्र विषयः । अडप्राप्तियोग्यविषये आटश्चारितार्थ्याभावादितोऽप्यधिकं ग्रन्थगौरवभयादनुक्तं स्वयमूहनीयं सुबुद्धिभिः । अत्राजादीनामप्यटैव सिद्धिप्रकारस्तु भाष्यकैयटाभ्यामवगन्तव्यः ।

## छन्दस्यपि दृश्यते । ६ । ४ । ७३ ॥

अनजादीनामित्यर्थः । आनट् । आवः । मन्त्रे घसह्वरेति लेर्लुक् । आयुनक् । युजेर्लङ् ।

## न माङ्योगे । ६ । ४ । ७४ ॥

अडाटौ न स्तः । मा भवान्भूत् । मा भवानीहिष्ट ।

## बहुलं छन्दस्यमाङ्योगेऽपि । ६ । ४ । ७५ ॥

जनिष्ठा उग्रः सहसे मावः । द्वेचे परबीजान्यवाप्सुः ॥

## इरयो रे । ६ । ४ । ७६ ॥

बहुलमित्यनुवर्तते । प्रथमं दध्र आपः । रेभावस्याभीयत्वे नासिद्धत्वादातो लोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावस्तदर्थं सूत्रे द्विवचनान्तं निर्दिष्टमिरयोरिति । न च भवति । कर्मणि चक्रिरे ।

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे ॥ ङिच्चेत्यन्तादेशः । आन्तरतम्यादेरियङ् ओरुवङ् । प्राप्नुवन्ति । राध्नुवन्ति । चिचियतुः । चिचियुः । लुलुवतुः । लुलुवुः । नियौ । नियः । लुवौ । लुवः । भ्रुवौ । भ्रुवः ॥ भ्रमेर्डूप्रत्ययान्तोऽयं न तूङ् च गमादीनामित्यूङन्तः । तथा सति धातुत्वादेव सिद्धेः । अचि किम् । आप्नुयात् । श्न्वादीनां किम् । लक्ष्म्यौ । य्वोः किम् । चक्रतुः । चयनं चायको लवनं लावक इत्यादौ तु परत्वाद्गुणवृद्धी भवतः ॥ तन्वादीनां छन्दसि बहुलम् ॥ * ॥ तन्वं पुषेम तनुवं पुषेम । त्रियम्बकम् । त्र्यम्बकम् । स्वर्गं लोकम् । सुवर्गं लोकम् ।

## अभ्यासस्यासवर्णे । ६ । ४ । ७८ ॥

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ॥ इयाय ।

इयेष । उवोष । उवोख । इयर्ति । असवर्णे किम् । ईषतुः । अचि किम् । इयाज ।

## स्त्रियाः । ६ । ४ । ७९ ॥

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे ॥ स्त्रियौ । स्त्रियः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः २ । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् ।

## वाम्शसोः । ६ । ४ । ८० ॥

अमि शसि च परे स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः ।

गुणनाभावौत्वनुड्भिः परत्वात् पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥
औस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥

अतिस्त्रियौ २ । अतिस्त्रयः । अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अतिस्त्रौ । क्लीबे तु नुम् । अतिस्त्रिणी २ । अतिस्त्रीणि २ । अतिस्त्रिणा । अतिस्त्रिणे । अतिस्त्रिणः २ । अतिस्त्रिणोः २ । अतिस्त्रिणि । ङेप्रभृतावजादौ वक्ष्यमाण-पुंवद्भावविकल्पात् पक्षे प्राग्वद्रूपम् । स्त्रियां तु प्रायेण पुंवत् । शसि । अतिस्त्रीः । अतिस्त्रियः । टायामतिस्त्रिया । ङिति ह्रस्वश्चेति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासस्तत्सम्बद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो न तु ह्रस्वस्य ।

आण्नद्या इत्याट् । अतिस्त्रियै । अतिस्त्रिये । अतिस्त्रियाः २ । अतिस्त्रेः २ । अतिस्त्रियाम् । अतिस्त्रौ ।

## इणो यण् । ६ । ४ । ८१ ॥

अजादौ प्रत्यये । मध्येऽपवादन्यायेनायमियङोऽपवादः । यन्ति । यन्तु । आयन् । यण आभीयासिद्धत्वादाट् । गुणवृद्धिभ्यां परत्वादयं बाध्यते । अयनम् । आयकः ।

## एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२ ॥

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे ॥ निन्यतुः । निन्युः ।कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी । कुमार्यौ । कुमार्यः । अमि शसि च । कुमार्यम् । कुमार्यः । कुमार्या । कुमार्यै । कुमार्याः । कुमारीणाम् । अत्र परत्वान्नुट् । कुमार्याम् । एः किम् । असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यादङ्गविशेषणं मा भूत् । तथा सति प्रध्यं प्रध्यः ग्रामण्यं ग्रामण्य इत्यादि न सिध्येत् । लुलुवतुः लुलुवुरिति तु ओः सुपीति नियमादपि सिध्यति । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्नयतीत्युन्नीः । उन्न्यौ । उन्न्यः । उन्न्यम् । उन्न्यः । उन्न्याम् । अनेकाचः किम् । नीः । नियौ । नियः । नियम् । नियः । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ॥ गतिकारकेतरपूर्वपदस्य यण् नेष्यते ॥ * ॥ शुद्धधियौ । परमधियौ । कथं तर्हि दुर्धियौ वृश्चिकभियेत्यादि । उच्यते दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दम्प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः स्युः ।

वृश्चिकशब्दस्य तु बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चिकसम्बन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा ॥

## ओः सुपि । ६ । ४ । ८३ ॥

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि ॥ गतिकारकेतरपूर्वपदस्य यण् नेष्यते । खलप्वौ । खलप्व इत्यादि । एवं सुल्वादयः । अनेकाचः किम् । लूः । लुवौ । लुवः । धात्ववयवेति किम् । उल्लूः । उल्लवौ । उल्लवः । असंयोगपूर्वस्य किम् । कटप्रूः । कटप्रुवौ । कटप्रुवः । गतीत्यादि किम् । परमलुवौ । सुपि किम् । लुलुवतुः ।

## वर्षाभ्वश्च । ६ । ४ । ८४ ॥

अस्योवर्णस्य यण् स्यादचि सुपि ॥ वर्षाभ्वौ । वर्षाभ्वः ॥ दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः ॥ * ॥ दृन्भ्वम् । दृन्भ्व इत्यादि खलपूवत् । करभ्वम् । करभ्वः । दीर्घपाठे कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारभ्वौ । कारभ्वः । पुनर्भूर्योगिकः पुंसि । रूढस्तु नित्यस्त्रीलिङ्गः । पुनर्भ्वावित्यादि । आमि पुनर्भ्वाम् । स्त्रियान्तु यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् । एवं वर्षाभूशब्देऽपि । कैयटवृत्तिकारयोर्मतभेदनिबन्धननदीत्वविकल्पान्नुड्विकल्पो द्रष्टव्यः । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । न च नेयङुवङिति निषेधः । यणा उवङो बाधनात् । दृन्भूकाराभूशब्दौ तु स्वयंभूवत् । कथं दृम्भ्वौ दृम्भ्व इत्यादि । दृम्भतीति दृम्भूः । जन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण व्युत्पादितः ।

तत्र इको यणचीति यण् । स च दृम्भू दृम्भूनित्यत्र बाध्यते दृन्भूरित्यत्र तु दृन्निति नान्ते हिंसार्थेऽव्यये भुवः क्विबिति विशेषः ।

### न भूसुधियोः । ६ । ४ । ८५ ॥

एतयोर्यण् न स्यादचि सुपि ॥ स्वभुवौ । स्वभुवः । सुधियौ । सुधिय इत्यादि ।

### छन्दस्युभयथा । ६ । ४ । ८६ ॥

भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वं विभुवं वा । सुधियौ नत्यमग्ने सुध्यौ वा ।

### हुश्नुवोः सार्वधातुके । ६ । ४ । ८७ ॥

जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके ॥ उवङोऽपवादः । जुह्वति । जुह्वतु । अजुह्वत । शृण्वन्ति । सुन्वन्ति । चिन्वन्ति । हुश्नुवोः किम् । योयुवति । बोभुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति । छन्दसि तु छन्दस्युभयथेति आर्द्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । सार्वधातुके किम् । जुहुवतुः । असंयोगपूर्वस्य किम् । आप्नुवन्ति ।

### भुवो वुग् लुङ्लिटोः । ६ । ४ । ८८ ॥

भुवो वुगागमः स्याल्लुङ्लिटोरचि । नित्यत्वाद्वुग्गुणवृद्धी बाधते । अभूवन् । अभूवम् । अबोभूवीत् । अबोभूवुः । बभूव । बभूवतुः । बभूवुः । बभूविथ । अचि किम् । अभूत् । अभूताम् ।

### ऊदुपधाया गोहः । ६ । ४ । ८९ ॥

गुह उपधाया ऊत् स्याद् गुणहेतावजादौ प्रत्यये ॥ गूहति । गूहते । गूहयति । उपधायाः किम् । अन्त्यस्य मा भूत् । विकृतनिर्देशः किम् । जुगुहतुः । जुगुहुः । अचि किम् । गोढा ॥

**दोषो णौ । ६ । ४ । ९० ॥**

दुष इति सुवचम् । दुष्यतेरुपधाया ऊत् स्याण्णौ । दूषयति ।

**वा चित्तविरागे । ६ । ४ । ९१ ॥**

विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा कामः ।

**मितां ह्रस्वः । ६ । ४ । ९२ ॥**

मितामुपधाया ह्रस्वः स्याण्णौ परे । के पुनर्मितः । चुरादौ भ्वादौ च पठ्यन्ते । तत्र तावच्चुरादौ ये त उच्यन्ते । ज्ञप मिच्च । अयं ज्ञाने ज्ञापने च वर्तते । ज्ञपयति । यम च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनं न तु भोजना नापि वेष्टना । उभयथापि हेतुमण्ण्यन्तत्वेनामन्तत्वादेव सिद्धेः । न च वेष्टनायां यमोऽपरिवेषणे इति निषेध इति वाच्यम् । तत्र विनिगमनाविरहाद्भोजनावद्वेष्टनाया अपि ग्रहणात् । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । चह परिकल्कने । चहयति । अचीचहत् । कथादेस्तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् । चप इत्येके । चपयति । रह त्यागे इत्येके । रहयति । अरीरहत् । कथादेस्तु अररहत् । बल प्राणने । बलयति । चिञ् चयने । चिस्फुरोरिति वा आत्वम् । अर्तिह्रीति पुक् । चपयति । चययति । ञित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति । चयते । नेर्गदेत्यत्र चिनोतेर्ग्रहणान्नेह । प्रणिचयति । प्रनिचयति । नान्ये मितोऽहेतौ । अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये

मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्वं न । इति चुरादिमितः । अथ भ्वादिमितः । तत्र त्वरत्यन्तास्त्रयोदश अनुदात्तेतः षितश्च । ये धातवोऽन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः । ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनार्थान्तरसत्त्वेऽपि मित्वमस्त्येवेति न्यासधातुवृत्त्यादिषु स्थितम् । घट चेष्टायाम् । घटादयो मित इति वक्ष्यमाणेन मित्संज्ञा । घटयति । कथन्तर्हि कमलवनोद्घाटनं कुर्वते ये । प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादि । शृणु । घट संघाते इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्वार्थमनुवादोऽयम् । एवञ्च कथं विघटयतीत्यादौ मित्वमिति वाच्यम् । नान्ये मितोऽहेताविति निषेधात् । अनुवादसामर्थ्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवोचितत्वात् । व्यथ भयसञ्चलनयोः । प्रथ प्रख्याने । प्रस विस्तारे । म्रद मर्दने । स्खद स्खदने । स्खदनं विद्रावणम् । क्षजि गतिदानयोः । मित्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोरिति दीर्घविकल्पः । अक्षञ्जि । अक्षाञ्जि । क्षञ्जम् २ । क्षाञ्जम् २ । एवमग्रेऽपि । दक्ष गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्वार्थोऽनुवादः । क्रप कृपायां गतौ । कदि क्रदि क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ । कद क्लदेति चानिदिताविति मैत्रेयः । कदिक्रदीक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्वार्थ आत्मनेपदार्थश्च । ञित्वरा संभ्रमे । घटादयः षितः षित्वादङ् कृत्सु भवति ॥ अथ फणान्ताः परस्मैपदिनः । ज्वर रोगे । गड सेचने । हेड वेष्टने । हेडृ अना-

दरे इति घटादिभ्यः पूर्वमात्मनेपदिषु गतः स एवोत्स्पृष्टानुबन्धोऽनूद्यते अर्थविशेषमित्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात् परस्मैपदम्। हेडति। हिडयति। अनादरे तु हेडयति। वट भट परिभाषणे। वट वेष्टने भट भृताविति पठितयोः परिभाषणे मित्वार्थोऽनुवादः। नट नृत्तौ। इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वे पठितस्य नाट्यमर्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ नट नताविति पठन्ति। गताविन्यन्ये। णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव। ष्टक प्रतीघाते। चक तृप्तौ। तृप्तिप्रतिघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात् परस्मैपदम्। कखे हसने। रगे शङ्कायाम्। लगे सङ्गे। ह्रगे ल्हगे षगे ष्ठगे संवरणे। कगे नोच्यते। अस्यायमर्थ इति विशिष्य नोच्यते। क्रियासामान्यार्थत्वात्। अनेकार्थत्वादित्यन्ये। अक अग कुटिलायां गतौ। कण रण गतौ। चण शण श्रण दाने। शण गतावित्यन्ये। श्रथ क्नथ क्रथ क्लथ हिंसार्थाः। जासिनिप्रहणेतिसूत्रे क्राथेति मित्वेऽपि वृद्धिर्निपात्यते। क्राथयति। मित्वन्तु निपातनात् परत्वाच्चिण्णमुलोरिति दीर्घे चरितार्थम्। अक्रथि। अक्राथि। क्रथम् २। क्राथम् २। वन च हिंसायामिति शेषः। वनु च नोच्यते। वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः। उदित्करणसामर्थ्यात्। न च तस्यैवानुवाद इत्यर्थे तदिति वाच्यम्। विशिष्यार्थो नोच्यत इत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यात्। अत एव पूर्वपठितवनो

नानुवादः । उक्तरीत्यार्थनियमासम्भवेन तत्र वनपाठस्य वैयर्थ्या-पत्त्या तदनुवादासम्भवात् । उदित्वफलन्तु णिजभावे । तेन क्रिया-सामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्वविकल्पो वक्ष्यते । ज्वल दीप्तौ । णप्रत्ययार्थे पठिष्यमाण एवायं मित्वार्थे-मनूद्यते । प्रज्वलयति । ह्वल ह्मल चलने । प्रह्वलयति । स्मृ आध्याने । चिन्तायां पठिष्यमाणस्य आध्याने मित्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । दॄ भये दॄ विदारणे इति क्र्यादेरय-मनुवादः । दृणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । धात्वन्तरमेवेदमिति मते तु दरतीत्यादि । केचिद्घटादौ अत्स्मृदॄ त्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति माधवः । नॄ नये क्र्यादिषु पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति । श्रा पाके श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येना-नुकरणम् । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य । लक्षणप्रतिपदो-क्तयोः प्रतिपदोक्तस्येति परिभाषाभ्याम् । श्रपयति । विक्लेदयती-त्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः । मारणतोषणनिशा-मनेषु ज्ञा । निशामनं चाक्षुषं ज्ञानमिति माधवः । ज्ञापनमात्र-मित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ननु माधवमते ज्ञीप्स्यमानो बोधयितुम-भिप्रेत इति वृत्तिग्रन्थस्य का गतिः । ज्ञप मिच्चेति चुरादौ ज्ञापनं मारणादिकञ्च तस्यार्थः । कथं विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्य इति च । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्वा-भावात् । ज्ञापनमात्रे मित्वमिति मते तु ज्ञा नियोगे इति चौरादिकस्य । धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हर-

शो वा भवति। आवधिषृ । आवधिषाताम् । आवधिषत । आहत। आहसाताम् । आहसत। आङो यमहन इति दविधिः । हनः स्मिरिति सेः कित्त्वं कर्मणि । अवधि । अवधिषाताम् । अवधिषत । ञिवद्भावे अघानि । अघानिषाताम् । अघानिषत ।

लुङ्येत्योर्गाः ॥ ११७ ॥

लुङि परतः एत्योर्गा इत्ययमादेशो भवति । अगात्। अगाताम् । अगुः । अध्यगात् । अध्यगाताम् । अध्यगुः । स्थेणावेत्यादिना इणवदिक इति च सेरुप् आत इति झेर्जुस् पुनर्लुङ्ग्रहणमिथ्यपि नित्यार्थम्। अगायि भवता। अध्यगायि भवता । गात्रमिति गायतेः ॥

णौ गमज्ञाने ॥ ११८ ॥

णौ परत एत्योर्गमित्ययमादेशो भवत्यज्ञानेऽर्थे। गमयति । गमयतः। गमयन्ति । अनेकार्थत्वादिकोऽप्यज्ञाने वृत्तिः । अधिगमयति । अधिगमयतः । अधिगमयन्ति । उडोत इत्यैप्। जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्वं जिनमोर्दीर्मितां प्र इति प्रादेशः। अज्ञान इति किम् । अर्थान् संप्रत्याययति ।

सनि ॥ ११९ ॥

सनि च परत एत्योरज्ञानेऽर्थे गमित्ययमादेशो भवति। जिगमिषति। अधिजिगमिषति । गमेरिराम इतीट । अज्ञान इत्येव । अर्थान् प्रतीषिषति । अच इति वर्तमाने सन्यङोरिति द्वितीयस्यैकाचो द्वित्वम्। योगविभाग उत्तरार्थः ।

इङः ॥ १२० ॥

सनि परत इङो गमित्ययमादेशो भवति । अधिजिगांसते । इङिकावधिगिं न व्यभिचरतः । हनिङ्गम्यचां सनीति दीत्वम्

गाङ् लिटि ॥ १२१ ॥

इङो गाङित्ययमादेशो भवति लिटि परतः । अधिजगे । अधिजगाते । अधिजगिरे । सेर्ह्यपिच्चेतिज्ञापकादादेशस्य ङित्वे गाङो ङित्करणं किमर्थम् । गाङ्कुटादेरञिदित्यत्र विशेषणार्थः । गायतेर्ग्रहणं मा भूत् । अगासीद्गाथकः इति ईत्वं प्रसज्येत ।

लुङ्लृङोर्वा ॥ १२२ ॥

लुङ्लृङोः परत इङो वा गाङादेशो भवति । लुङि । अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । गाङ्कुटादेरिति ङित्वं घुमास्थागेत्यादिनेत्वम् । पक्षे अध्यैष्ट । अध्यैषाताम । अध्यैषत । लृङि अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त । पक्षे अध्यैष्यत । अध्यैष्येताम् । अध्यैष्यन्त ।

णौ सन्कचोः ॥ १२३ ॥

णौ सन्परे कच्परे च परतः इङो वा गादेशो भवति । अध्यापयितुमिच्छति अधिजिगापयिषति । प्रकल्प्यापवादविषयं तत उत्सर्गोऽभिनिविशत इति गाङादेशपक्षे क्रीङ्जेणाविन्यात्वं न भवति । अन्यत्र अध्यापिपयिषति । अच इति द्वितीयस्यैकाचो द्वित्वम् । कच्परे

अध्यजीगपत् । अन्यत्र अध्यापिपत् । माङ्योगे मा भवानध्यपिपदिति भवति । णौ कच्युङ इति प्रादेशे कृते द्वित्वं कथं ज्ञायते ओणतेः ऋदित्करणं ज्ञापकं यदि द्वित्वं प्रागेव स्यात् ओण उकारस्यानुद्धृतत्वात् प्रादेशप्रतिषेधार्थं ऋदित्करणमनर्थकं स्यात् ।

अस्तिब्रूञोर्भूवची ॥ १२४ ॥

अस्तिब्रूञित्येतयोर्यथासंख्यं भू वचि इत्येतावादेशौ भवतः । भविता । भवितुम् । भवितव्यम् । अस्तीति तिपा निर्देशः किमर्थः यस्य केवलस्य अस्तीति रूपं तस्य यथा स्यात् अनुप्रयोगस्य लिड्परस्य मा भूत् । ईहामास । ब्रूञ् । वक्ता । वक्तुम् । वक्तव्यम् । वचेरिकार उच्चारणार्थः स्थानिवद्भावाद्दः । ऊचे ।

चक्षः ख्शाञ् ॥ १२५ ॥

चक्षः ख्शाञित्ययमादेशो भवति अगे । आख्शाता । आख्याता । ख्शो यो वा इति वा यकारादेशः । पर्याख्यान-मित्यत्र यकारादेशस्यासिद्धत्वात् शकारेण व्यवहितत्वात् कृत्यच इति णत्वं न भवति । स्थानिवद्भावेन ऽनुदात्तेतो द इति नित्यं दो मा भूत् इति ञि क्रियते ।

न वर्जने ॥ १२६ ॥

वर्जनेऽर्थे चक्षः ख्शाञादेशो न भवति । गां संचक्ष्व । वर्जयित्वेत्यर्थः । कण्टकाः संचक्ष्याः । नेति योगविभागा-दसि युचि च प्रतिषेधः । नृचक्षाः राक्षसः । विचक्षणः ।

वा लिटि ॥ १२७ ॥

लिटि परतो वा चक्षः ख्याञादेशो भवति । आचख्यौ । आचख्ये । आचचक्षे । पूर्वेण नित्ये प्राप्तेऽयमारम्भः ।

व्यजोऽघञचोः ॥ १२८ ॥

अजेर्धोः वी इत्ययमादेशो भवति अघञचोः परतः । अनुदात्तोऽयमादेशः । प्रवेता । प्रवायकः । अघञचोरिति किम् । समाजः । उदाजः । समजः । उदजः । पशुष्वजः समुदोरिति पशुविषयेऽच् अन्यत्र घञ् । अजिति सामान्यग्रहणं तेन पचादिलक्षणेऽप्यचि प्रतिषेधः । अजतीत्यजः ।

बहुलं खौ ॥ १२९ ॥

खुविषये बहुलमजेर्वीभावः । प्रवयणो दण्डः । बहुलग्रहणाद्यबलादौ च विकल्पः । प्रवेता । प्राजिता । प्रवेतुम् । प्राजितुम् । प्रवयणम् । प्राजनम् । अजिरमित्यौणादिकः शब्दः समासमजनिषदित्यादिना क्यप् । अत्र बहुलवचनान्न भवत्येव ।

ञिण्यराजार्षाद्वृन्ध्युबभिञोः ॥ १३० ॥

ञिदन्तात् ण्यन्तात् राजविशेषवाचिवृद्धात् ऋष्यणन्ताच्च परयोरणिञोः यूनि उब् भवति । ञितः । तिकस्यापत्यं वृद्धं तैकायनिः । तैकायनेरपत्यं प्राग्द्रोरण उपि तैकायनिः पिता तैकायनिः पुत्रः । बिदस्यापत्यं वैदः । वैदस्यापत्यं युवा इञ उपि वैदः पिता वैदः पुत्रः । रायः । कुरोरपत्यं कौरव्यः । कुर्वादेर्ण्य इति ण्यः । कौरव्यस्यापत्यं इञ उपि कौरव्यः पुत्रोऽपि । इहोब्वचनसामर्थ्यात् कौरव्यशब्दादिञ् तिकादौ पाठात् फिञपि भवति कौरव्यायणिरिति । राज्ञः । स्वफल्-

कस्यापत्यं श्वाफल्कः । कुर्वृष्ण्यन्धकवृष्णेरित्यण् । तदन्ता-दिञ उपि श्वाफल्कः पिता । श्वाफल्कः पुत्रः । एवं कलिङ्ग-स्यापत्यं कालिङ्गः । द्व्यञ्मगधकलिङ्गसूरमसादणित्यण् तदन्तादिञ उपि कालिङ्गो युवाऽपि । इह पाञ्चालः पिता पाञ्चालः पुत्रः इति ञितः इति वा राज्ञि इति वा उप् । आर्षात् । वशिष्ठस्यापत्यं कुर्वृष्ण्यन्धकवृष्णेरित्यण् वाशि-ष्ठः । तदन्तादिञ उपि वाशिष्ठः पुत्रोऽपि । ञिण्यराजार्षा-दिति किम् । कुहडस्यापत्यं कौहडः शिवादिभ्योऽणित्यण् तस्याप्यपत्यं कौहडिः । यूनोति किम् । वामरथस्यापत्यं वामरथ्यः कुर्वादेर्ण्यः । तस्य शिष्या वामरथाः । वामर-थ्यस्य सकलादिवदित्यतिदेशात् सकलादिभ्यो वृद्ध इति शैषिकोऽण् क्यच्च्यनेत्यादिना यत्वम्।आणञोरिति किम्। दक्षस्यापत्यं दाक्षिः । दाक्षेरपत्यं दाक्षायणः ।

## पैलादेः ॥ १३१ ॥

पैलादेः परस्य युवत्यस्योब् भवति । पीलाया अपत्यं पैलः । पीलाया वेत्यण् पैलस्यापत्यं द्व्यचोऽण इति फिञ् तस्योप् पैलः पुत्रोऽपि । अन्य इञन्तास्तेभ्यः परस्य फणः प्राचामिञो तौल्वलिभ्य इति प्राप्ते उपि अप्रागर्थमिदम् । पैलः।सालङ्किः।सात्यकिः पिता। सात्यकिः पुत्रः।सात्यका-मिः। औदञ्चिः । वाह्वादिषु उदञ्चु शब्दः सनकारः पठ्यते औदमज्जिः। औदव्राजिः । औदमेघिः। औदशुद्धिः । दैव-स्थानिः । पैंगलायनिः । राणियनिः। रैहक्षितिः। भौलि-ङ्गिः । राजाऽयं शाल्वावयवः । सैमिनिः । उद्वाहमानिः। औज्जिहानिः । औज्जहायिनिः द्विसंज्ञाद्वाणः परस्य युव-त्यस्योप्। आङ्गः । द्व्यचोण इति फिञ् । तस्योप् । आकृतिग-

णोऽयम् । तेन वैविजावालिऔदम्बरि एतेभ्यः साल्वावयकत्त्वादिञ् भाडोजंघिः इत्यादि द्रष्टव्यम् ।

प्राचामिञोऽतौल्वल्भ्यिः ॥ १३२ ॥

प्राचां वृद्धे य इञ् तदन्तायुवत्यस्योब् भवति तौल्वलिप्रभृतीन् वर्जयित्वा । पान्नागारिः पिता । पान्नागारिः पुत्रः । मान्थरेषणिः पिता । मान्थरेषणिः पुत्रः । क्षैरकलम्भिः पिता । क्षैरकलम्भिः पुत्रः । यञिञोरित्यस्य फण उप् । प्राचामिति किम् । दाक्षिः पिता । दाक्षायणः पुत्रः । अतौल्वलिभ्य इति किम् । तौल्वलिः पिता । तौल्वलायनः पुत्रः । तौल्वलिः । धारिणिः । स्वालिंपिः । दैलोपिः । दैवोतिः । दैवमित्रिः । दैवमतिः । दैवयज्ञिः । प्रावाहणिः । माधातकिः आनुराहतिः बाह्वादिरयम् । आनुतिः आदितिः । आसुरिः । नैमषिः । आसिवन्धकिः । वैह्विपौष्यपौ । पौष्करसादिः । अयं बाह्वादौ वैरकिः । वैलकिः । वैहतिः । वैकर्णिः । कारेणुपालिः ।

द्रेर्बहुषु तेनैवास्त्रियाम् ॥ १३३ ॥

द्रिसञ्ज्ञकस्य त्यस्य बह्वर्थेषु वर्त्तमानस्य उब् भवति तेनैव द्रिसञ्ज्ञकेन कृतं बहुत्वं भवति अस्त्रियाम् । आङ्गः । आङ्गौ । अङ्गाः । ऐक्ष्वाकः । ऐक्ष्वाकौ । इक्ष्वाकवः । अणः अञ इञद्रिरित्यधिकारेण द्रिसञ्ज्ञा स्वार्थिकानामपि ते द्रय इति द्रिसञ्ज्ञा । लौहध्वज्यः । लौहध्वज्यौ । लोहध्वजाः । व्रैहिमत्यः । व्रैहिमत्यौ । व्रीहिमताः । पूगाञ्ज्योग्रामणीपूर्वादिति ञ्यः । द्वन्द्वेऽपि सामान्येन द्रिसञ्ज्ञा कृते बहुत्वे भवति अङ्गवङ्गसुह्माः । द्रेरिति किम् । औपगवाः । बहुष्विति किम् । आङ्गः । आङ्गौ । तेनैवेति किम् । प्रियो वाङ्ग एषामिति प्रिय-

वाङ्गाः । अत्र वृत्त्या बहुत्वं गम्यते । अतोऽनुवर्हत्यांतानां अन्येषां च द्वन्द्वे तेनैव कृतं न बहुत्वमित्युब् भवति । गार्ग्यवात्स्यौपगवाः । ज्ञापकादुबप्यत्र भवतीति केचित् । गर्गवत्सोपगवाः । किं ज्ञापकमिति चेत् शरद्वच्छुनकदर्भा भृगुवत्साग्रायणेष्विति वचनम् । भार्गववात्स्याग्रायणेष्विति निर्देशः स्यात् उभयथाऽपि साधुः प्रयोगः । अस्त्रियामिति किम् । आङ्ग्यः वाङ्ग्यः स्त्रियः ।

## यस्कादिभ्यो वृद्धे ॥ १३४ ॥

यस्क इत्येवमादिभ्यः परस्य वृद्धत्यस्य बहुषु वर्तमानस्योब् भवति अस्त्रियां तेनैव चेत् कृतं बहुत्वम् । उभयगतिरिह शास्त्रे लौकिकमपि वृद्धं गृह्यते तेनानन्तरापत्येऽप्युब् भवति । यास्कः । यास्कौ । यस्काः । शिवादिभ्योऽणित्यागतस्याण उप् । यस्क लुह्य द्रुह्य अयस्थूण तृणकर्ण भलन्दन एतेषां शिवादिषु पाठः । कम्बलहार अहियोग कर्णाढक पर्णाढक सदामत पिण्डीजङ्घ बकरक्षोमुख जथारथ उत्कास कटुक मन्थर पुष्करसत् अस्य न गोपवनादेरिति प्रतिषेधः प्राप्तः । विषपुट उपरिमेखल पदक भटक भडिल भण्डिल एतेभ्योऽश्वादेः फञिति फञ् । क्रुद्रि अजवस्ति विश्रि मित्रयु एतेभ्यो गृष्ट्यादेरिति ढण् । वृद्ध इति किम् । यस्को देवता एषां यास्काः बहुष्वित्येव । यास्कौ । तेनैव चेत्येव । प्रिययास्काः । अस्त्रियामित्येव यास्क्यः ।

## यञञोः ॥ १३५ ॥

यञश्च अञश्च वृद्धे बहुषु वर्त्तमानस्योब् भवति तेनैव चेद्बहुत्वमस्त्रियाम् । गर्गाः । वत्साः । अत्राः । विदाः । ऊर्वाः ।

विदादिभ्योऽनृष्यानन्तर्ये इञिति अञ् । बहुष्वित्येव । गार्ग्यः । वैदः । तेनैवेत्येव । प्रियगार्ग्याः । वृत्त्या तत्र बहुत्वं गम्यते । यत्र वृत्त्यैकत्वं गम्यते यञा बहुत्वं तत्रापि भवति । गर्गानतिक्रान्तः अतिगर्गः । अस्त्रियामित्येव । गार्ग्यः स्त्रियः । यञ इति ङीविधिः । यस्य ङ्याश्चेत्यखम् । हलोहृतोङ्यमिति यकारस्य खम् । यञादीनामेकत्वद्वित्वयोर्वार्ता से इति वक्तव्यम् । गार्ग्यस्य कुलं गर्गकुलम् । गार्ग्ययोः कुलं गार्ग्यकुलम् । गर्गकुलम् । वैदस्य कुलं वैदकुलम् । विदकुलम् । वैदयोः कुलं वैदकुलम् । विदकुलम् । न वक्तव्यं यदा यञादयो न श्रूयन्ते तदा मूलप्रकृतेस्तासः नियतविषयत्वात् शब्दानां तत उभयं सिध्यति ।

भृग्वत्रिकुत्सवसिष्ठगोतमाङ्गिरोभ्यः ॥ १३६ ॥

वृद्ध इति वर्तते । भृग्वादिभ्यः परस्य वृद्धत्यस्य बहुषूब्भवति । भार्गवः । भार्गवौ । भृगवः । आत्रेयः । आत्रेयौ । अत्रयः । एवं कुत्साः वसिष्ठाः गोतमाः अङ्गिरसः । अत्रिशब्दादितोऽनिञ इति ढण् । अन्येभ्य ऋष्यण् । बहुष्वित्येव । भार्गवः । आङ्गिरसः । तेनैवेत्येव । प्रियभार्गवाः । अस्त्रियामित्येव । भार्गव्यः स्त्रियः । वृद्ध इत्येव । भृगुर्देवता एषामिति भार्गवाः ॥

इञो बह्वचः प्राच्यभरतेषु ॥ १३७ ॥

बह्वचो मृदो य इञ् तस्य प्राच्यभरतेषु वृद्धं बहुषूब्भवति । पान्नागारिः । पान्नागारी । पन्नागाराः । एवं मान्थरेषणिः । मान्थरेषणी । मन्थरेषणाः । बह्वच इति किम् । पैष्ययः । प्राच्यभरतेष्विति किम् । वालाकयः । हास्तिदासयः ।

ननु भरतः प्राच्य एव तेषां पृथग्ग्रहणं किमर्थं ज्ञापकार्थ मन्यत्र प्राच्यग्रहणे भरतग्रहणं न भवतीति । तेन प्राचामिञो तौल्वलिभ्य इति अत्र भरतानां युवत्यस्योप्न भवति। यौधिष्ठिरिः पिता यौधिष्ठिरायणः पुत्रः । ननु युधिष्ठिरादिभ्य इञेव नास्ति कुर्वृष्ण्यन्धकवृष्णेरित्यणा भवितव्यम्। इह तर्हि उप्न भवति औद्दालकिः पिता औद्दालकायनः पुत्रः। अत्र प्राचामिञो तौल्वलिभ्य इति युवत्यस्योप्प्रसज्येत एतद्धि प्राच्यभरतगोत्रम् ।

**न गोपवनादेः ॥ १३८ ॥**

विदाद्यन्तर्गणो गोपवनादिः । गोपवन इत्येवमादेः परस्य वृद्धत्यस्योब् न भवति । गोपवनस्यापत्यानि गौपवनाः । यञञोरित्युप्प्राप्तः । गोपवन शिग्रु पिण्ड भाजन अश्वावूतान शम्याक श्यामाक श्यापर्ण एते गोपवनादयः। प्राग्घरितशब्दात् परत उब्भवति । हरिताः । किंदासाः । तौल्वलिप्रभृतयोऽत्र पठ्यन्त इति केचित । तौल्वलयः अनन्तरेण उप्प्राप्तः ॥

**वोपकादिभ्यः ॥ १३९ ॥**

उपक इत्येवमादिभ्य उत्तरस्य वृद्धत्यस्य वा बहुषूब्भवति । उपकस्यापत्यानि उपकाः । उपकायनाः । लमकाः । लामकायनाः । एतौ नडादी । भ्रष्टकाः । भ्राष्टकयः । कपिष्ठलाः । कापिष्ठलयः । कृष्णाजिनाः । कार्ष्णाजिनयः । कृष्णसुन्दराः । कार्ष्णसुन्दरयः । वेति व्यवस्थितविभाषा । तेनैषामद्वन्द्वे विकल्पः । परिशिष्टानां द्वन्द्वे चाद्वन्द्वे च । सुपिष्ट मयूरकर्ण कर्णक पर्णक पिङ्गलक जटिलक बधिरक एतेषां शिवादिषु पाठः । अनुलोमप्रतिलोम एतौ बाह्वादी।

वडारक अकडारक अभुक्तक उद्दक सुपर्य्यक सुपर्चक सुवर्मक खरीजङ्घ शलाजङ्घ शलाथल पतञ्जल कमन्दक कण्ठेरणि कुषीतक कासकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल जन्तुक अविरग्घ कपिञ्जलक प्रतान अनभिहित ॥

## तिककितवादिभ्यो द्वन्द्वे ॥ १४० ॥

वेति नानुवर्तते। तिककितव इत्येवमादिभ्यो द्वन्द्वे वृद्धस्य बहुषूब् भवति। तैकायनयश्च कैतवायनयश्च तिककितवाः। तिकादिलक्षणस्य फिञ उप्। वांखरयश्च भाण्डीरथयश्च इञ उपि वंखरभण्डीरथाः। पाटकयश्च नारकयश्च पटकनरकाः। वाकनखयश्च श्वागुदपरिणद्धयश्च वकनखश्वगुदपरिणद्धाः। औब्जयश्च काकुभाश्च ककुभशब्दः शिवादिषु विदादिषु वास्ति उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च लङ्कशान्तमुखाः। उरसशब्दस्तिकादौ। औरसायनयश्च लाङ्कटयश्च उरसलङ्कटाः। अग्निवेशशब्दो गर्गादौ। अग्निवेशाश्च दासेरकयश्च अग्निवेशदासेरकाः। औपकायनाश्च लामकायनाश्च फण उपि उपकलमकाः। आष्टकयश्च कापिष्टलयश्च अष्टककपिष्टलाः। कार्ष्णाजिनयश्च कार्ष्णसौन्दरयश्च कृष्णाजिनकृष्णसुन्दराः॥

## कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती ॥ १४१ ॥

कौण्डिन्य आगस्त्य इत्येतयोर्बृद्धत्यस्य बहुषूब् भवति कुण्डिन अगस्ति इत्येतौ चादेशौ यथासङ्ख्यं भवतः। अगस्त्यशब्दात् ऋष्यण्। कुण्डमस्यास्तीति कुण्डिनी नाम

काचित् गर्गादौ पठ्यते । कौण्डिन्यः । कौण्डिन्यौ । कुण्डिनाः। आगस्त्यः। आगस्त्यौ। अगस्तयः। यद्यपि यञञोरिति यञ उप् सिद्धस्तथापि कुण्डिनशब्दोऽकारान्त आदेशो विधीयमानो बाधकं स्यादिति पुनर्वचनम्। अगस्तीनां छात्रा आगस्तीया इत्यत्र अगस्तिरादेशो भवति। प्राग्द्रवोविषये वृद्धे चानुवृत्ति अनुपि सति दोश्च इति छः सिद्धः। कौण्डिनाश्छात्राः ॥

## सुपो धुमृदोः ॥ ४२ ॥

धुमृदोरन्तस्यावयवस्य सुप उब्भवति । पुत्रमिच्छत्यात्मनः पुत्रीयति । पटीयति। मृदः। राजपुरुषः। धर्मं श्रितो धर्मश्रितः । तदन्ता धव इति धुसंज्ञायां कृद्वृत्सा मृत्संज्ञायां च सुप उप् । एवं तस्मात्ततः । तस्मिन् तत्र । धुमृदोरिति किम् । वृक्षः । अत्र कृद्वृत्सा इति नियमात् विभक्त्या मृत्सञ्ज्ञा नास्ति ॥

## शपोऽदादिभ्यः ॥ १४३ ॥

अदादिभ्यो धुभ्यः परस्य शप उब्भवति । अत्ति । हन्ति । दोग्धि ॥

## यङोऽचि ॥ १४४ ॥

यङ उब्भवति अचि परतः। लोलूय पोपूय मरीमृज्य इत्येतेभ्यः पचाद्यचि लोलुवः पोपुवः मरीमृजः। नधुखेग इति एवैपोः प्रतिषेधः। यङो वेत्यत्र वक्ष्यत्यविशेषेण यङ उब् भवति तेन वावदीति इत्येवमादि सिध्यति ॥

## उब् जुहोत्यादिभ्यः ॥ १४५ ॥

शप इति वर्तते। जुहोत्यादिभ्यः परस्य शप उब् भवति।

जुहोति । नेनेक्ति । बिभर्ति । उचिति वर्तमाने उच्ग्रहण द्वित्वाद्यर्थम् ॥

स्थेणिपबभुभूभ्यः सेर्मे ॥ १४६ ॥

स्था इण् पिब भुसंज्ञक भू इत्येवमादिभ्यः परस्य सेर्वा-रुम्भवति मे परतः । अस्थात् । अस्थाताम् । अस्थुः । आत इति झेर्जुस् । अगात् । इणिति प्रश्लेषनिर्देशात् इकोऽपि ग्रहणम् । अध्यगात् । अपात् । पिब इति विकृतनिर्देशात् शोषणार्थस्य निवृत्तिः । प्रतिपदोक्तपरिभाषा चानित्या तेन गामादाग्रहणेष्वविशेष इतीदं लब्धम् । भु इति संज्ञानिर्देशः दाधाभ्वपिदिति । अदात् । अदाताम् । अदुः । भु इति भवतेरस्त्यादेशस्य च ग्रहणम् । अभूत् । सूभवत्यो-र्मिङीत्येषप्रतिषेधः । म इति किम् । उपास्थिषत । उपान्मन्त्र करणे धेरिति दविधिः । भुस्थोरिदित्याकारस्येत्वं सेः कित्वम् ॥

वा घ्राधेट्छाशासः ॥ १४७ ॥

घ्रा धेट् छा शा सा इत्येतेभ्यः परस्य सेर्वा उम्भवति मे परतः । अघ्रात् । अनुप् पक्षे यमरमनमातः सक्वेति सगिटौ भवतः । हल्यः सेरितीट् । इटोट इति सेः खम् । अघ्रासीत् । अच्छात् । अच्छासीत् । न्यशात् । न्यशा-सीत् । असात् । असासीत् । धेटो भुसंज्ञात्वात् पूर्वेण प्राप्ते इतरेषामप्राप्ते विकल्पः । म इत्येव । अघ्रासाताम् । अघ्रासत । स्तुसुधूञ्भ्यो म इत्यधिकारात् सगिटौ न भवतः ॥

तनादिभ्यस्तथासोः ॥ १४८ ॥

तनादिभ्य उत्तरस्य सेर्वा उव्भवति तथासोः परतः । थासा सहचरितो दसंज्ञष्टो गृह्यते । अतत । अतनिष्ट । उप्पक्षे अनुदात्तोपदेश इत्यादिना ङखम् । अतथाः । अतनिष्ट । षण् । असात । असनिष्ट । उपपक्षे जनसनखनामित्त्यात्वम् । असाथाः । असनिष्टाः ॥

आमः ॥ १४९ ॥

आम उत्तरस्य संभवाल्लकारस्योव् भवति । ईहांचक्रे । लकारस्य कृत्वात् मृत्त्वे सति स्वाद्युत्पत्तिः । सुपो झेरिति सुप उप् । आमन्तस्य पदसंज्ञा । वा पदान्तस्येत्येतत् प्रयोजनम् ॥

सुपो भेः ॥ १५० ॥

झिसंज्ञादुत्तरस्य सुप उव्भवति । च वा अह कृत्वा कर्तुम् । इदमेव ज्ञापकम् । असंख्याद्‌पि सुपो भवन्ति यदि वा कर्मणो विवेमादिषु अर्थनियमपक्षे विभक्तीनामनियतत्वात् झिसंज्ञेभ्योऽप्युत्पत्तिः ॥

हात् ॥ १५१ ॥

हसादुत्तरस्य सुप उव्भवति । अधिस्त्रि । अधिकुमारि । हसस्य झिसंज्ञा नास्तीत्युक्तं तेनायमारम्भः ॥

नातोऽम् त्वकाय्याः ॥ ५२ ॥

हसस्य संख्यायोगात् कर्मादियोगाच्च सर्वासां विभक्तीनां सम्भवः हाद्‌कारान्तात् रस्य सुप उम्न भवति । अमादेशस्तु भवति सुप कां विभक्तिं वर्जयित्वा । उपकुम्भं तिष्ठति । उपकुम्भं पश्य । उपकुम्भं देहि । अत

इति किम् । उपाग्नि । अकाया इति किम् । उपकुम्भादानय ॥

**ईब्भयोर्विभाषा ॥ १५३ ॥**

ईप् भा इत्येतयोर्विभाषा अमादेशो भवति । उपकुम्भेन कृतम् । उपकुम्भं कृतम् । उपकुम्भाभ्यां कृतम् । उपकुम्भं निधेहि । व्यवस्थितविभाषेयम् । तेन ऋद्धिनदीससंख्यावयवेभ्यो नित्यममादेशः । ऋद्धौ । सुमद्रं कृतम् । सुमगधं कृतम् । नदीसे । नदीभिश्चेति हसः। उन्मत्तगङ्गम् । द्वियमुनम् । संख्यावयवः संख्या वंश्येनेति हसः । द्विकौशलम् । त्रिकौशलम् । एकविंशति भारद्वाजम् ॥

**लुटोऽन्यस्य डारौरसः ॥ १५४ ॥**

लुटोऽन्यसंज्ञस्य त्रिकस्य डा रौ रस् इत्येते आदेशा भवन्ति । अर्थद्वारकमत्र यथासंख्यम् । श्रोता । श्रोतारौ । श्रोतारः । अध्येता । अध्येतारौ । अध्येतारः । डा इत्यन्तादेशः । डा आ इति प्रश्लेषनिर्देशाद्वानेकाल् सर्वादेशः । ङित्यभस्यापि डित्करणसामर्थ्याट्टित्वम् । रौरसोः परतः रीति सत्वम् ॥ * ॥

इत्यभयनन्दिमुनिविरचितायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥

---

**त्यः ॥ १ ॥**

अधिकारेण संज्ञेयमा कपो यदित ऊर्ध्वमनुक्रमिष्यामः अपूर्वं शब्दोपजननं प्रकृतिवाग्विशेषणविकारागमवर्जं यत् त्यसंज्ञः स वेदितव्यः । प्रकृतिर्गुपादिः । वाक्

कर्मण्यण इत्येवमादावीपा निर्दिष्टं विशेषणं दृतिनाथयोः-पशौ ह्ञ इत्येवमादौ पश्वादि। विकारः सतो भावान्तरावाप्तिः। दुहो घश्चेत्येवमादिषु घकारादिः। आगमः परतन्त्रः। त्रपुजतुनोः षुगित्येवमादिः। युक्तिरुच्यते निमित्ति कार्यन्न निमित्तस्येति प्रकृतिवागुपाधीनामग्रहणम्। अथवा भाव्यमानविभक्तिनिर्दिष्टं सञ्ज्ञादिप्रधानं भूतविभक्तीनिर्दिष्टं प्रकृत्याद्यप्रधानं प्रधाने च कार्यसम्प्रत्ययः विकारागमयोस्तु पर इत्यनेन निरासः नहि तयोः परत्वसम्भवः। वक्ष्यति तव्यानीयौ। कर्तव्यः। करणीयः। प्रतियन्ति तेनार्थमिति प्रत्ययः। पुंखौघः प्रायेणेति घः। एवं यद्यन्वर्था संज्ञा क्रियेत तदा प्रकृतेः सविभक्तिकस्य वा पदस्य त्यसंज्ञा स्यात्। त्यप्रदेशाः यस्येत्यदादिगुरित्येवमादयः॥

## परः॥ २॥

परिभाषेयं नियमार्था। पर एव भवति धोर्मृदो वा यस्त्यसंज्ञः। कर्त्तव्यः। करणीयः। औपगवः। धोरित्येवमादौ दिग्योगलक्षणकानिर्देशेऽपि पूर्वशब्दस्याध्याहारः स्यादिति परत्वं न लभ्यते ईप्केत्यव्यवाये पूर्वपरयोरित्यत्र यदि कार्यं परमुच्यते ततानिर्दिष्टस्येति न च सनादयस्तानिर्दिष्टाः अथासतः प्रादुर्भावः पर उच्यते एवं सति नियमार्थमिदं त्यपरैव प्रकृतिः प्रयोक्तव्या न केवला॥

## गुप्तिज्किद्भ्यः सन्॥ ३॥

त्य इति वर्तते। गुप् तिज् कित् इत्येतेभ्यः परः सन् भवति। जुगुप्सते। तितिक्षते। चिकित्सति। धुसंशब्द-

नेनाविधानात् अगसंज्ञा नास्ति । तेन नेडागमः । निन्दाक्षमारोगापनयेषु यथाक्रमं सन्निष्यते । गोपननिशाननिवासादिषु न भवति । गोपनं गोपायति । तेजनं तेजयति । निकेतनं निकेतयति । भुवादिषु पाठः किमर्थः अस्त्यादित्यकारो यथा स्यात् । जुगुप्सा । तितिक्षा । चिकित्सा । सनोऽकारोपदेशः प्रतीषिषलीत्यादौ श्रवणार्थः । एकदेशकृतं लिङ्गं समुदायविशेषणम् । अनुदात्तेत्त्वमाद्याभ्यां तेनायं दो विधीयते ॥

## मान्वधदान्शान्भ्यो दीश्चस्य ॥ ४ ॥

मान् वध दान् शान् इत्येतेभ्यः सन् भवति दीश्च स्येकारस्य । मीमांसते । बीभत्सते । दीदांसते । शीशांसति । शीशांसते । आद्यावनुदात्तेतौ । परौ स्वरितेतौ च । विकारेष्वपवादा उत्सर्गान्न बाधन्त इति कृतेऽकारस्य चस्य दीत्वम् । अत्रापि जिज्ञासावैरूप्यार्जवनिशामनेषु यथाक्रमं सन्निष्यते । पूजाबन्धनावखण्डनतेजनेषु भवति । मानयति । बन्धयति । निशानयति । दान उत्तरत्र वेति व्यवस्थितविभाषा । तदवलोकनादयं विभागः ।

## तुमीच्छायां धोर्वीप् ॥ ५ ॥

इच्छायां तुमि यो धुस्तस्मात् सन् वा भवति तुमश्चोऽभवति यदा सन् । कर्तुमिच्छति चिकीर्षति । बुभूक्षते । अयं ह्येच्छायां तुम् विहितः । हेतुफलयोरित्यधिकृत्य इच्छार्थे लिङ्लोटौ तुमेककर्तृक इतिवचनात् । इहापि सामान्यविशेषभावेन हेतुफलभावोऽस्ति । एषितुमिच्छति एषिषिषति । तुमिति किम् । इच्छायामित्युच्यमाने इच्छार्थानामिषिवाञ्छयादीनां ग्रहणं स्यात् । तुम्ग्रहणे सति इच्छायामित्येत

दूरस्थत्वात् । शीघ्रोच्चकक्षायास्त्वासन्नत्वात् । तत्रैव तन्मन्दोच्चभ्रमोऽपि । ननु स्वकक्षायां यत्र लगति तत्रैव तौ तिष्ठत इति कल्पना वस्तुतोऽभावादन्यग्रहवत् तयोः स्फुटत्वेन स्वतन्त्रकक्षाया विद्यमानत्वादित्याद्युक्तप्राया । ननु दृश्यमानग्रहाणां स्पष्टत्वेन तद्भ्रमणानुसृतस्य प्रत्यक्षेण भेदात् कक्षाभेदः स्वतः सिद्धो युक्त इति सूर्यकक्षातो भिन्नकक्षास्थितत्वमन्यग्रहवद्बुधशुक्रयोर्युक्तम् । परन्तु मध्यग्रहाणामाकाशे वस्तुतो दर्शनाभावाद्गणितानुरोधेन सूर्यकक्षायां मध्यमबुधशुक्रयोरवस्थानकल्पने बाधकाभावात् । तदन्यकक्षावस्थानकल्पनमयुक्तं गौरवात् । किञ्च 'खेटा व्रजन्त्यनुदिनम्'-इत्यादिना सामान्यतो ग्रहाणां तुल्यगतिरित्यभिमतार्थस्य बुधशुक्रयोर्भिन्नकक्षास्थत्वेन तत्तुल्यगतियोजनभोगाभावादसंगतित्वापत्तेः । शीघ्रोच्चानयनकक्षा स्वाधःस्थितेत्यस्यान्यग्रहवदनुपपत्तेश्च । तयोः स्वशीघ्रोच्चानयनकक्षायामवस्थानकल्पनात् । अत एव ।

"मध्यमकक्षावृत्ते मध्यमया गच्छति ग्रहो गत्या ।
उपरिष्टात् तल्लब्ध्या तदधिकगत्याऽस्त्वधःस्थः स्यात्" ॥

इत्यापाततः साधारणं तल्लोक्तं युक्तम् । न च सूर्यबुधशुक्राणां मध्यमैककक्षास्थत्वकल्पनेऽपि बुधशुक्रयोः शीघ्रोच्चकक्षाया व्यर्थत्वं स्यात् । आकाशे शीघ्रोच्चस्य ग्रहवद्दर्शनाभावेन तस्य काल्पनिकत्वादिति वाच्यम् । मध्यमग्रहवत् तस्य कक्षास्थत्वकल्पने बाधकाभावात् । न च तथाऽपि शीघ्रोच्चबुधशुक्राणामेककक्षास्थत्वानुपपत्तिरिति वाच्यम् । ग्रहस्य कक्षैव हि तुङ्गपातयोरित्यादिना बुधशुक्रयोः स्वशीघ्रोच्चेन सह रविकक्षायामवस्थानकल्पनेन तद्भिन्नकक्षायास्तदानयनोपयुक्तत्वाच्च नोक्तत्वकल्पनेनैकप्रदेशस्यैव त्रयाणामुच्चत्वसिद्धेरुच्चतुल्यत्वेन गणितागतोच्चभेदस्यासंगतत्वापत्तेः । तत्कक्षायां गणितागतोच्चप्रदेशस्यानेकत्वसंभवेऽपि उच्चत्वव्याघातात् । न ह्येककक्षायामनेकप्रदेशानामुच्चत्वसंभवः ।

अन्यथा ग्रहप्रदेशस्यैवोच्चत्वापत्तेः । तस्मात् सूर्यकक्षायां सूर्योच्चस्थिति-कल्पनसंभवाद्बुधशुक्रोच्चावस्थानत्वं स्वरूपनिर्वाहार्थमन्यकक्षायां कल्प्यम्। तत्र शीघ्रोच्चकक्षाया आनयनोपयुक्तायाः क्लृप्तत्वात् सैवावस्थानकक्षा कल्प्या। एवं सति बुधशुक्रयोः स्वोच्चयोरेककक्षावस्थानाभावाद्ग्रहस्य कक्षैव हीत्याद्युक्तस्यासंगततापत्तेरिति। बुधशुक्रयोः स्वोच्चकक्षावस्थानकल्पनेन सर्वं समञ्जसं प्रामाणिकगौरवस्य दोषाभावात् । शीघ्रोच्चस्य तुल्यगतियोजनभोगसंभवेनैककक्षास्थत्वसम्बन्धेन तयोस्तद्भोगापपत्ते-श्चेति सुष्ठूक्तमर्कस्य कक्षैव सितज्ञयोरित्यादीनि चेन्न । मध्यमकक्षाप्रदे-शस्य भूमध्यात् सर्वतस्तुल्यान्तरेणोच्चत्वाभावात् । प्रतिमण्डलप्रदे-शस्य तदुच्चसंभवेन बुधशुक्रसूर्याणां मध्यमैककक्षास्थत्वकल्पनेऽपि तदु-च्चभेदेन तत्कक्षाणां प्रतिमण्डलभेदात् तत्प्रदेशस्योच्चतुल्यदर्शनेन तेषा-मुच्चानां प्रतिमण्डलद्वारैककक्षास्थत्वे बाधकाभावात् । नीचोच्चवृत्तानामे-ककक्षाप्रदेशकेन्द्राणां भेदात् तत्रापि त्रयाणां तदुच्चभेदसंभवेनादोषाच्च । अन्यथा शीघ्रोच्चमन्दोच्चभेदेन तयोरेककक्षात्वानुपपत्तेः । तस्मात्कथा-श्रुतेऽन्यग्रहवद्बाधकाभावेनार्कस्य कक्षैव सितज्ञयोरित्यादिपद्योक्ताचार्य-कल्पितविशेषो व्यर्थ इति भातीति चेत् उच्यते । त्रिज्यातुल्यशीघ्रकर्ण-मध्यमकक्षावृत्तपरिभ्रमणशुक्रतारायाः सूर्यमध्यमकक्षास्थत्वं दर्शनाभावे-नोर्ध्वाधोऽन्तरदर्शनाद्भिन्नकक्षास्थत्वं शुक्रस्य कल्पितम् । एवमेतदनुरोधेन-बुधस्यापि सूर्यमध्यमकक्षामार्गादधः शुक्रतारादर्शनाच्चोच्चकक्षावस्थान क्लृप्तत्वात् कल्पितं महर्षिभिः । न त्वस्माद्दृशैर्बुधस्य सदा दर्श-नाच्छुक्रस्य तदानीं सूर्यबिम्बादधःस्थत्वाभावात् । अन्यथाऽस्तंगतत्वा-पत्तेरिति ऊर्ध्वाधोदर्शनस्य मनुष्याणामस्मादृशामशक्यत्वात् । मध्यम-गत्या स्पष्टकक्षायामेव ग्रहो भ्रमति मध्यमासन्नगत्या कदाचिन्मध्यमक-क्षायां भ्रमतीत्यर्थे बहुधा प्रतिपादे तत्प्रोक्तमुपेत्यम् ।

तथा च सूर्यसिद्धान्ते—

"तन्मध्ये भ्रमणं भानामधोऽधः क्रमशः स्थिताः।
मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः॥
परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः"*।

इत्युक्त्वा कक्षानिबन्धने चन्द्रकक्षाग्रे बुधशीघ्रोच्चकक्षा तदग्रे शुक्रशीघ्रोच्चकक्षा तदग्रे सूर्यादिकक्षा इत्यनुक्तेन बुधशुक्रयोः स्वशीघ्रोच्चकक्षायां भ्रमणं प्रतिपादितमिति दृश्यते। "भार्गवेन्दुसुतयोरधःस्थयो-"विवस्वतोऽधःस्थितयोः"इति लल्लश्रीपतीभ्यां स्फुटं प्रतिपादितम्-अत एव सुन्दरसिद्धान्ते—

"सितोदयाद्यातघटीप्रमाणं स्वच्छाययोत्थं गणितेन यस्मात्।
तद्भूमिगर्भस्थनरद्युयातं तथा घटीयन्त्रसुसाधितं स्वम्॥
अन्तरेण दिनपातयोर्यदा योजनानि कुदलोन्मितानि चेत्।
किं तदा द्युनिशनाडिकामितः कक्षिकाफलमिहानुपाततः॥
तन्महत्त्वलघुतैक्यखण्डकं मध्यमा ज्ञचलकक्षिकाऽनया।
भाजिता गगनकक्षिका भवेच्छुक्रतुङ्गचलपर्ययोन्मितिः॥"

इति शुक्रशीघ्रोच्चभगणोत्पादनप्रतिपादनं युक्तं निबद्धमिति संक्षेपः॥ ९॥

---

अथायिमग्रन्थस्यासंगतोक्तत्वपरिहारार्थमध्यायसमाप्तिं फक्किकया सूचयति। इति कक्षाध्याय इति कक्षाप्राधान्येन ग्रहानयनप्रतिपादनं पूर्णं जातमित्यग्रिमग्रन्थस्याभिन्नविषयत्वात् संगतमेवेति भावः।



* द्रष्टव्यौ भूगोलाध्याये ३०–३१ श्लोकौ।

# इदानीं प्रत्यब्दशुद्धिः ।

तत्रादौ सावनदिनाद्यमाह ।

अधोऽधस्त्रिधा कल्पयाताब्दवृन्दात्
करावयां कृतैः पावकैः संगुणाच्च ।
भुजङ्गैरवाप्तं फलं स्याद्दिनाद्यं
तदब्दान्वितं भास्करादब्दपः स्यात् ॥ १ ॥

**वा.भा.**–स्पष्टार्थम् ।

अत्रोपपत्तिः । एकस्मिन् रविवर्षे सावनाहाः प्राक् प्रतिपादिताः । तेभ्यः पञ्चषष्ट्यधिकं शतत्रयं ३६५ प्रोज्झ्य शेषं दिनस्थाने पूर्णं पञ्चदश नाड्यस्त्रिंशत् पलानि तथा सार्धानि द्वाविंशतिर्विपलानि ० । १५ ३० । २२ । ३० । एतदष्टभिः सवर्णितं जातम् ४ । अतोऽनुपातः । यद्यष्टाभिर्वर्षैरेतावद्दिनाद्यं तदा कल्पगतैः किमिति फलं दिनाद्यम् । तदनष्टं संस्थाप्यम् । ततो गताब्दैर्युतं सदब्दपतिः स्यादिति यदुक्तं तदतः । यतः पञ्चषष्ट्यधिकशतत्रये सप्तभिर्भक्ते एकोऽवशिष्यते । अत एकगुणाब्दसंख्या तस्मिन् दिनाद्ये निक्षिप्ता । तस्मिन् सप्ततष्टेऽर्कादिकोऽब्दपतिः । यतो यस्मिन् वारेऽब्दादिः सोऽब्दपतिः स्यादित्युपपन्नम् ॥ १ ॥

**वा.वा.**–प्रत्यब्दशुद्धौ ग्रहानयनमारभ्यते । तत्राब्दपानयनमाह । अधोऽधस्त्रिधेति । सौरवर्षान्ते यः सावयवो वारः सोऽब्दप इत्युच्यते । अहर्गणाद्धि आनीयेते ।

"मासाब्ददिनसंख्याप्तं द्वित्रिघ्नं रूपसंयुतम् ।
सप्तोद्धृतावशिष्टौ च विज्ञेयौ मासवर्षपौ" * ॥

इत्यादिना मासाब्दपती तौ फलादेशायोपयुज्येते । अत्रानीयमानोऽयमब्दपः स तु वार्षिकग्रहानयनाद्युपयोगाय । मन्दादधःकक्षाक्रमेण कालहोरेशा उक्ताः सौरे । मन्दादधःक्रमेण चतुर्थाश्च वारा उक्ताः । कथ-

---

* सूर्यसिद्धान्ते मध्यमाधिकारे ५२ श्लो० ।

मत्राब्दपो ज्ञातव्य इत्यत्राह । भास्करादिति । कल्पादौ रविरेवाब्दपः । अत्राचार्यैर्वर्षसमासैरहोरेशा नोक्ता दिनेश उक्तस्तेनैव क्रमेणाब्दपो भविष्यतीति भाष्येऽभिहितं सावयवो वार इति ।

अत्र वासना । तत्रैवर्षसावनेषु सप्ततष्टेषु शेषं दिनाद्यम् १ । १५ । ३० । २२ । ३० । सौरे १ । १५ । ३१ । २४ । कल्पादित आनीयमाने बह्वन्तरं पतति । येन पक्षेण दृग्गणितैक्यं भवति स एव पक्षोऽङ्गीकार्यः । "भवतु योऽपि कोऽप्यागमो ग्रहगणिते इति कर्त्तव्यतायामस्माभिः कौशलं दर्शयितव्यम्" इति वदतो भाष्यकारस्य न कोऽपि दोषः । प्रकृतमनुसरामः । १ । १५ । ३० । २२ । ३० । अत्रानुपातः । एकेन वर्षेणेदं तदेष्टवर्षैः किमिति सावयवेनेष्टवर्षाणि गुणनीयानि । एवं क्रियमाणे शिष्याः क्लिश्येरन्निति सुगमोपायः कृतः । अत्र कल्पितमिष्टम् । ० । १५ । ३० २२ । ३० । इष्टोनेन गुणेन निघ्नो गुण्य इति यावन्तोऽब्दास्तावन्तो वारा इत्युक्तम् । इष्टघ्नगुण्ययुक्तास्ते कर्त्तव्याः । एकेन भाज्याः । अत्र संचारः यद्यनेन हरेणायं गुण-० । १५ । ३० । २२ । ३० स्तदा ग्रुमितेन किमिति लब्धो वाराद्यो गुणः २ । ४ । ३ । अयं स्वरूपेणैव खण्डत्रयात्मकः ।

"गुण्यस्त्वधोऽधो गुणखण्डतुल्यस्तैः खण्डकैः संगुणितो युतः"*

इति प्रकारेणाधोऽधस्त्रिधा कल्पयाताब्दवृन्दात् काराभ्यां कृतैः पावकैः संगुणादित्युक्तम् । भुजङ्गैर्भागे कृते दिनाद्यं लभ्यते ॥ १ ॥

**मरीचिः**—अथ पर्यान्तःपात्यहर्गणेन लाघवार्थं ग्रहानयनं वक्तुं प्रथमतस्तदुपयुक्तोपकरणानयनं विवक्षुरब्दपानयनं भुजङ्गप्रयातेनाह अधोऽध इति। त्रिधाऽधोऽधःस्थापितकल्पगतवर्षसमूहाङ्कात् । क्रमेण द्वाभ्यां चतुर्भिस्त्रिभिर्गुणितात् षष्ट्या भक्तफलोर्ध्वयोजनसिद्धाच्चेति चकारार्थः । अष्टाभिर्भक्तादत्राप्तं फलं दिनाद्यं दिनघटीपलात्मकादि यत् तत् उपरि कल्पगतवर्षयुक्तं सप्ततष्टं च । भास्करात् सूर्यादितः क्रमेण वारगणनया वर्षपतिः सावयवः स्यात् ।

---

* भास्क-लीलावत्यां गुणनप्रकारः ।

भुजङ्गैरिति पदेन तत्प्रयातं छन्दोऽपि सूचितम् । तदर्थस्तु-पावकैस्त्रिभिर्वर्णैः प्रमितस्य वृत्तपादस्य अधोऽर्धस्त्रिधा वर्णौ । कल्पनं कल्पः । प्रस्तारकल्पनेनाष्टगणानां सिद्धत्वात् । यथा—म ऽऽऽ, य ।ऽऽ, र ऽ।ऽ, स ।।ऽ, त ऽऽ।, भ ऽ।।, न ।।।, प्रस्तारकल्पनेन योऽव्धवृन्दो यगणः । य उद्कं पुत्र ददातीत्यादित इत्युक्तत्वात् । वृन्दस्य गणवाचकत्वाच्च । तस्मात् कृतैश्चतुर्भिर्गुणितात् । चतुःसंख्याद्यगणात् कराभ्यां द्वाभ्यां गुणाच्च सिद्धं यत् फलम् । चतुर्यगणात्मकं दिनाद्य-लक्षणया वृत्तस्य प्रथमार्धं तद्भुजङ्गैरवाप्तं स्यात् । भुजङ्गप्रयातस्यार्धं भवति । तत् प्रथमार्धम् । अब्दैर्यगणैः प्रथमार्धस्यतुल्यैरन्वितम् । एवमर्धाभ्यां भास्करात् कवेरब्दपः । अब्दानां गणानां षोडशसंख्यकानां स्वामी तादृशवर्णसंनिवेशात्मकमेकं पद्यं स्यादिति मदुक्त इति ।

अत्रोपपत्तिः । सौरवर्षादौ सावयवो वारोऽब्दपः । तद्वारे गते वर्तमाने मध्यमसूर्योदयाद्गतघटिकादिषु च मध्यवर्षारम्भात् तत्कालीन-वारादिकस्याब्दप इति संज्ञाव्यपदेशात् । अयं 'वासराद्यं तत्सावनात्'-इत्युक्तत्वात् सावनः । एतज्ज्ञानं तु कल्पसौरवर्षैः कल्परविसावन-दिनानि तदा कल्पगतवर्षैः कानीत्यनुपातेनागतं दिनादि सावय-वफलम् । सप्ततष्टमिति प्रकारेण । अत्राङ्कलाघवार्थमेकवर्षस्याब्दप आनीतः सावयः १ । १५ । ३० । २२ । ३० । तत एकवर्षेऽयं तदेष्टवर्षैः क इत्यनु-पातेन गतवर्षाणि पञ्चस्थानेषु क्रमेण गुणानीति गौरवदर्शनेन खण्ड-गुणनं कृतम् । तत्र वारस्थानीयैकमितं खण्डमेकम् । द्वितीयं तदून-दिनाद्यतन्त्रम् ० । १५ । ३० । २२ । ३० । द्वितीयखण्डेनापि गुणने पूर्वोक्तगौरवभयेन लाघवार्थं गुणः सवर्णितो रूपमितो हरश्च । तद्गुणस्य हरसिद्ध्यर्थम् । ३३४९३५० । १२९६०००० । अत्रापि गुणहरौ लाघवार्थम-युतघ्नद्विनृपै १६२०००० रपवर्तितौ जातौ गुणः सावयवः स्थानत्रये २ । ४ । ३ । हरश्च ८ । अतो दिनाद्यमित्यन्तमुपपन्नम् । अस्य पूर्वखण्डागत-

फलं योज्यम् । तत्र पूर्वखण्डस्य रूपमितत्वादनुपातेन गतवर्षाणि योज्यानीति जातम् । वाराणां सप्तसंख्यात्वात् सप्ततष्टं शेषं कल्पादौ रविवारसत्त्वात् तदादिगणनयाऽब्दपः सावयवः सिद्धो भवत्यत उक्तं तदब्दान्वितमित्याद्युपपन्नम् ॥ १ ॥

इदानीं प्रकारान्तरेणाह ।

**निजाशीति-८० भागेन युक्तं समार्धं**
**खषड्-६० भक्तमब्दाङ्घ्रियुग्वा दिनाद्यम् ।**

**वा. भा.**—अत्र वर्षाणामर्धं निजेनाशीतिभागेन युक्तं षष्ट्या हृतं सर्वं चतुर्थांशेन युक्तं सद्दिनाद्यं वा ।

अत्रोपपत्तिः । पूर्वस्मिन् दिनाद्ये पञ्चदश घटिकाः स एकस्य दिनस्य चतुर्थांशः । यानि त्रिंशत् पलानि तद्घटिकाया अर्धम् । एतदनष्टमधघटिकाया अधस्तनेनावयवेन यावद्धियते तावदशीतिर्लभ्यते । अतो वर्षार्धं निजाशीतिभागेन युक्तं घटिका भवन्ति । तत्षष्ट्यंशो दिनानि । तानि पूर्वकथितवर्षचतुर्थांशेन युतानि दिनानि भवन्तीत्युपपन्नम् ।

**वा. वा.**—प्रकारान्तरेणाह । निजाशीतिभागेनेति । अत्राब्दान्वितमिति सम्बध्यते । इदं तु केवलं दिनाद्यशब्देन व्यवह्रियते दिनाद्यं त्रिनिघ्नमित्यादिवक्ष्यमाणोपयोगाय । तत्रेदं दिनाद्यम् ० । १५ । ३० । २२ । ३० । अस्यापि खण्डत्रयम् ० । १५ । द्वितीयम् ० । ० । ३० । तृतीयम् ० । ० । ० । १२ । ३० । घटिका तु दिनस्य षष्ट्यंशो भवति । तस्मात् पञ्चदश घटिकाः पञ्चदशदिनषष्ट्यंशाः ।

"समेन केनाप्यपवर्त्य हारभाज्यौ भवेद्वा सति संभवे तु * ।"

प्रकारेणानेन भागहारौ भाज्यौ भागेनैवापवर्त्य जातो दिनचतुर्थांशः । अब्दाङ्घ्रियुगिति त्रिंशत्पलानि घटिकायास्त्रिंशत्षष्ट्यंशाः । अत्राप्यपवर्त्तन घटिकार्धं जातम् । तृतीये तु सार्धद्वाविंशत्यक्षराणि । अत्र

* भास्क-लीलावत्यां भागहारप्रकारः ।

"छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेत् * ।"

इति पञ्चचत्वारिंशदक्षराणामर्धम् । अक्षरं तु पलषष्ठ्यंशः । एवं पञ्चचत्वारिंशदर्धपष्ठ्यंशा इति ।

"अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात्" † ।

इति जाताः पलस्य पञ्चचत्वारिंशत् खार्कांशाः । अत्र सार्धपलेन हरांशावपवर्त्य हरस्थाने जातमशीतिः । अंशस्थाने च

"छेदं लवं च परिवर्त्य हरस्य शेषः कार्योऽथ भागहरणे गुणनाविधिश्च" ‡

इति त्रिंशत्पलानि इदं तु घटिकार्धमेव । तस्मादिनाशीतिभागेन युक्ताः सार्धा घटिका भवन्ति । इदं षष्ट्या भक्तं दिनीकरणायेति सर्वं शोभनम् ।

पुनः प्रकारान्तरेणाह ।

**गताब्दा विभक्ताः समुद्रैः ४ खसूर्यैः १२०**
**खखाङ्काङ्कै-९९०० र्वा फलैक्यं दिनाद्यम् ॥२॥**

वा-भा- अत्रोपपत्तिः । एकं दिनं पञ्चदशघटिकाभिर्यावद्वर्ध्यते ताव-च्चत्वारो लभ्यन्ते । यावदर्धघटिकया तावत् खसूर्याः १२० । यावद्द-घस्तनेनावयवेन ० । ० । ० । २२ । ३० तावत् खखाङ्काङ्काः ९९०० । एवं प्रत्यब्दम् । अतो गताब्दा एभिर्विभक्ताः फलैक्यं दिनाद्यं स्यादित्यु-पपन्नम् ॥ २ ॥

वा.वा.-प्रकारान्तरमाह गताब्दा विभक्ता इति । अत्र पूर्ववद्दिनाद्यानि खण्डत्रयाणि कृत्वा वारस्वरूपमेभिः पृथक् भवेत् । यल्लभ्यते त एव हराः । समानामिति योगे दिनाद्यं भवति । अयमर्थः । यद्यनेन खण्डेन रूपमितो हरस्तदाऽऽचार्यकल्पितरूपमितदिनेन किमिति सर्वमुपपद्यते ॥ २ ॥

* भास्क-लीलावत्यां भागानुबन्धापवाहौ ।

† भास्क-लीलावत्यां भिन्नगुणनविधिः ।

‡ भास्क-लीलावत्यां भिन्नभागहारः ।

**मरीचिः**—अथ प्रकारान्तरद्वयेन लाघवाद्दिनाद्यानयनं भुजङ्गप्रयातेनाह निजाशीतिभागेनेति गताब्दा विभक्ता इति च । स्पष्टार्थम् ।

अत्रोपपत्तिः । अब्दपस्य द्वितीयं खण्डं दिनाद्यसंज्ञम् । एकवर्षे० १५ । ३० । २२ । ३० । अनेन गतवर्षाणां गुणनार्थमस्य खण्डत्रयं कृतम् । यथा प्रथमम् १५ । द्वितीयम् ० । ३० । तृतीयम् ० । ० । २२ । ३० । तत्र लाघवार्थं प्रथमखण्डं दिनस्थाने एकस्थम् । षष्टिगुणनेन तदधो हरश्च $\frac{१५}{६०}$ । द्वितीयं खण्डं घटीस्थाने $\frac{३०}{६०}$ । तृतीयं च घटीस्थाने सवर्णितम् $\frac{१३५०}{२१६०००}$ । अत्र खण्डत्रयेषु गुणहरौ गुणेनापवर्त्तितौ जातं खण्डत्रयं स्वस्वस्थाने $\frac{१}{४}, \frac{१}{२}, \frac{१}{१६०}$ । अत इष्टवर्षेष्वनुपातेन खण्डान्यानीय तद्योगो दिनार्थम् । तत्र घटीस्थाने स्थितयोरेव साजात्याद्योगे क्रियमाणे वर्षार्धं वर्षषष्ठ्यधिकशतभागेन युक्तं कार्यमिति सिद्धेऽत्रापि लाघवार्थं वर्षार्धमेव स्वाशीतिभागयुक्तमिति सिद्धम् । प्रथमखण्डस्य दिनस्थानीयत्वात् तद्योजनार्थमिदं सिद्धं दिनस्थाने कार्यमिति षष्टिभक्तम् । ततः प्रथमखण्डं वर्षाङ्घ्रिमितं युतमत उपपन्नं निजाशीतिभागेनेत्याद्यर्थम् । एवं द्वितीयप्रकारे तान्येव खण्डत्रयाणि । यथा प्रथमम् ० । १५ । द्वितीयम् ० । ० । ३० । तृतीयम् ० । ० । २२ । ३० । एतानि दिनस्थाने सवर्णितानि तदधः स्वस्वहराश्च यथा $\frac{१५}{६०}, \frac{३०}{३६००}, \frac{१३१५०}{१२९६००००}$ । स्वगुणापवर्त्तितानि जातानि $\frac{१}{४}, \frac{१}{१२०}, \frac{१}{९६००}$ । अत्र रूपगुणस्याविकृतत्वेन नाशाद्गताब्दास्त्रिः स्थाप्या हरभक्ताः फलानां योगो दिनाद्यम् । अत उपपन्नं गताब्दा विभक्ता इत्याद्यर्थम् ॥ २ ॥

इदानीं तयाहानाह ।

**स्वषष्ट्यंशयुक्तानि वर्षाणि वर्षैः**
**खरामाहतैः संयुतान्यभ्रभूपैः १६० ।**
**विभक्तानि तान्यत्र लब्धं विशुद्धं**
**समाभ्यो गताभ्यो भवन्ति तयाहाः ॥ ३ ॥**

**वा.भा.**—अत्रोपपत्तिः । यदि कल्पवर्षैः कल्पतयाहा लभ्यन्ते तदैकेन किमिति । फलमेकस्मिन् वर्षे तयाहाद्यम् ५ । ४८ । २२ । ७ । ३० ।

अस्मात् पञ्च विशोध्य शेषेणाब्दा गुणिता अवमाद्यं भवति । तत्र लाघवार्थं शेषं रूपाद्विशोध्यावशिष्टमभ्रभूपैः १६० सवर्णितं जातम् ३१ । १ ततोऽनुपातः । यद्यभ्रभूपैर्वर्षैरेकत्रिंशद्दिनानि घटिकयाऽधिकानि लभ्यन्ते तदा गताब्दैः किमिति । अत्र स्वपञ्चांशयुक्तानि वर्षाणि खरामाहृतवर्षयुतानि एकत्रिंशता नाड्याधिकया गुणितानि भवन्ति । अत्राभ्रभूपै—१६० र्लब्धिफलेन गताब्दा अतो वर्जिताः कृताः । यतः प्रत्यब्दं षष्ठेऽवमे यत्र पूर्यते तद्गृहीत्वा कर्म कृतमिति सर्वमुपपन्नम् ॥ ३ ॥

वा.वा.—क्षयाहानाह स्वपञ्चांशयुक्तानि वर्षाणीति । तत्रैकवर्षेऽवमदिनानि ५ । ४८ । २२ । ७ । ३० । अत्र कार्यान्तरवशेनैभ्यः पञ्च दिनानि त्यक्त्वा यच्छेषं तदेव क्षयाहपदेनोच्यते । तस्मात् क्षयाहाः ० । ४८ । २२ । ७ ३० । अत्र दिनस्थाने रूपं गृहीत्वा यावन्ति वर्षाणि तावन्तः क्षयाहा इति जातम् । अत्रेदमधिकम् ० । ११ । ३७ । ५२ । ३० गृहीतमासीदिति शोध्यम् । यदेव शोध्यते तदेवास्वमिति व्यवह्रियते । न हि स्वरूपेणाङ्कानामृणत्वं धनत्वं वाऽस्ति किन्तु कार्यान्तरवशात् यथास्थितेषु गृह्यमाणेषु यावत् तेभ्योऽल्पं गृह्यते तदेव धनमिति यावदधिकं गृह्यते तदृणमिति । प्रकृतेऽधिकत्वादृणम् । ततोऽनुपातः । यद्येकेन वर्षेणेदमृणं ० । ११ । ३७ । ५२ । ३० तदेष्टवर्षैः किमिति यदायाति तत् क्षयाहेभ्यः शोध्यं "धनर्णयोरन्तरमेव योगः"* इति । इदमपि खण्डानि कार्याणि धनर्णखण्डानि वा ।

"गुण्यस्त्वधोऽधो गुणखण्डतुल्यस्तैः खण्डकैः संगुणितो युतो वा"।

इति प्रकारस्यैवेष्टोनयुक्तेन गुणेनेति प्रकारोऽन्तर्गत इति "द्विधा भवेद्रूपविभाग"† इत्युक्तम् । खण्डगुणनस्य द्वैविध्यमुक्तं रूपविभागस्थानविभागाभ्यां चेति । तस्मादनेन गुणेन ० । ११ । ३७ । ५२ । ३० । इष्टवर्षाणि धनगतानि गुणनीयानि यदायाति तच्छोध्यत्वादृणम् । अत एव "स्वर्णघाते क्षयः"‡ इत्युच्यते । वस्तुतस्तु ऋणगुणकानां विप-

* भास्करीयबीजगणिते ।

† भास्क-लीलावत्यां गुणनविधिः ।

‡ भास्करीयबीजगणिते ।

रीतस्य विपरीतापवर्त्तने क्रियमाणे धनगतत्वमेव युक्तम् । अभावाभावस्य भावत्वनियमात् । ऋणयोर्घातो धनम् । ऋणस्य शोध्यत्वे धनत्वमिति स्फुटम् । तत्र शोध्यस्यास्य खण्डद्वयं कृतम् ० । ११ । १५ । द्वितीयम् ० । ० । २२ । ५२ । ३० । प्रथममभ्रभूपैः सवर्णितं जाता दिनस्थाने त्रिंशदत उक्तं खरामाहतैरिति । द्वितीयमपि तैरेवाभ्रभूपैः सवर्णितं जातं दिनस्थाने १ । १ । अत उक्तं स्वषष्ठ्यंशयुक्तानि वर्षाणीति । " योगोऽन्तरं तुल्यहरांशकानाम्* " इति पूर्वद्वितीफलयोग एव हरेण हृत इति सर्वं निरवद्यम् ॥४॥

**मरीचिः**—अथ क्षयाहाख्योपकरणानयनं भुजङ्गप्रयातेनाह स्वषष्ठ्यंशयुक्तानीति । वर्षपदेन कल्पगतवर्षाङ्को ग्राह्यः । तानि सिद्धानि । अत्राब्दपकाले मध्यमसौरवर्षादाविति यावत् । क्षयाहाः कल्पादिष्टकालपर्यन्तं दिनावमसंख्याखण्डकं मध्यमं भवतीत्यर्थः । शेषं स्पष्टम् ।

अत्रोपपत्तिः । कल्पवर्षैः कल्पावमानि तदेष्टवर्षैः कानीत्यनुपातेन गतदिनक्षयाः सावयवा भवन्तीत्यत्र लाघवार्थमेकवर्षस्य क्षयाहमानं दिनादिकमानीतम् ५ । ४८ । २२ । ७ । ३० । अत्राहर्गणानयने एते दिनक्षयाः सावयवा भवन्तीत्यत्र लाघवार्थमेकवर्षस्य क्षयघटिकादेरावश्यकत्वात् पञ्चोनितैतस्य ० । ४८ । २२ । ७ । ३० क्षयाहसंज्ञाऽऽचार्यैः पूर्वदिनादिसंज्ञावत् कृता । अत एकवर्षे इदं सावयवं तन्मानं तदेष्टवर्षेषु किमित्यनुपातेन गताब्दानां गुणानां पञ्चस्थानेष्विति गौरवं दृष्ट्वा लाघवार्थं क्षयाहाङ्के उपरि सम्पूर्णाङ्क एव धृतः । तेन गुणनेऽविकृतत्वादृगवर्षाण्येव क्षयाहा इति सिद्धम् । अथ वास्तवज्ञानार्थमिष्टगताब्दानीतान्तरं हीनं कार्यम् । तदानयनार्थमेकवर्षे क्षयाहोनरूपमन्तरम् ० । ११ । ३७ । ५२ । ३० तदेष्टवर्षेषु किमित्यनुपातेनात्रापि गौरवदर्शनादन्तरस्य खण्डत्रयं कृतम् । यथा प्रथमम् ० । ११ । १५ । द्वितीयम् ० । ० । २२ । ३० तृतीयम् ० । ० । ० । २२ । ३० । अत्रापि सुखार्थं षष्ट्या एकीकृतान्येतानि प्रत्येकं हराश्च । यथा $\frac{६७५}{३६००}$, $\frac{१३५०}{२१६०००}$, $\frac{१३५०}{१२९६०००}$ । अथ लाघवार्थं प्रथमस्थाने गुणहरौ सार्धद्वाविंशत्या २२ । ३०

* भास्क-लीलावत्यां भिन्नयोगवियोगौ ।

ऽपवर्त्तितौ जातौ गुण—३० हरौ १६० । अपरत्र गुणहरौ गुणेनापवर्त्त्यौ हरस्थाने १६० । ९६०० । अथैतदानीतानामिष्टकाले योगस्तत्र द्वितीय तृतीयखण्डयोर्योगः स्वषष्ठ्यंशयुक्तानि वर्षाणि । तृतीयखण्डे षष्टिहर स्याधिकत्वात् । प्रथमखण्डमपि तुल्यहरत्वाद्योजितं खरामाहतैर्वर्षै संयुतानीति जातम् । सिद्धस्याधः षष्ट्यधिकशतमितहरस्य सत्त्वादभ्रभूपै र्विभक्तानि । फलमिष्टकालेऽन्तरमिति तद्गताब्देषु हीनं कार्यमित्युपपन्न स्वषष्ठ्यंशयुक्तानीत्यादि ॥ ३ ॥

इदानीं प्रकारान्तरेण क्षयाहानाह ।

**दिनाद्यं त्रिनिघ्नं समाभ्राब्धिवेदां- ४००**
**शकोनं समात्रिंशदंशेन युग्वा ।**

वा. भा. यत् प्रागानीतं दिनाद्यं तत् त्रिगुणं वर्षचतुःशतांशोनं वर्षत्रिंश दंशेन युतं वा क्षयाहा भवन्ति ।

अत्रोपपत्तिः । अत्रैकवर्षे दिनाद्यम् ० । १५ । ३० । २२ । ३० तथाऽवमाद्यम् ० । ४८ । २२ । ७ । ३० । दिनाद्ये त्रिगुणितेऽवमाद्ये द्विशोधिते जातं शेषम् ० । १ । ५१ । इदं त्रिगुणे दिनाद्ये यदि क्षिप्यते तदाऽवमाद्यं भवति । इदं शेषं खखार्कै-१२०० र्गुणितं जातं सप्तत्रिंशत् ३७ । अब्दाः सप्तत्रिंशता गुण्याः खखार्कैर्भक्तास्त्रिगुणे दिनाद्ये यदि क्षिप्यन्ते तदा गतावमानि भवन्ति । अत्र गुणके रूपत्रयं प्रक्षिप्य सुखार्थं चत्वारिंशद्गुणकः कृतो रूपत्रयमृणं गुणकश्च । ४०, ३ । आभ्यामब्दा गुण्याः खखार्कैर्भाज्याः । तत्र प्रथमगुणकश्चत्वारिंशताऽपवर्त्तितो जातः १ । हरश्च ३० । द्वितीयो गुणकस्त्रिभिरपवर्तितः १ । तत्र हर-श्चतुःशती ४०० । अतो गताब्दाः पृथक् त्रिंशता चतुःशत्या च हृताः प्रथमफलं त्रिगुणदिनाद्ये धनं द्वितीयमृणमेवमवमाद्यं भवतीत्युपपन्नम् ।

**वा. वा.**—अत्रापि प्रकारान्तरमाह । दिनाद्यं त्रिनिघ्नमिति दिनाद्यं त्रिगुणितं सत् क्षयाहासन्नं भवतीति दिनाद्यं त्रिनिघ्नमित्युक्तम् । अस्मिन्

क्षयाहादेः शोधिते शेषम् १ । ५१ । अत्र घटीस्थाने सुखार्थं द्वयमेव धृत्वा समात्रिंशदंशेन युगिति । इदमेव द्विच्युतं जातम्० । ९ । चतुःशत्या सवर्णितं जातं समाधाभ्रवेदांशकोनमिति ।

अथ प्रकारान्तरेणावमान्याह ।

**स्वषष्ट्यंशहीनाऽब्दखाङ्केन्दु–१६० भागः**
**स्वपञ्चांशहीनाऽब्दयुग्वा क्षयाहाः ॥ ४ ॥**

**वा.भा.**–अत्रोपपत्तिः । एकस्मिन् रविवर्षेऽवमशेषमष्टचत्वारिंशद्घटिकाः । तत् पञ्चांशोनं दिनम् । अतः पञ्चांशोना अब्दाः कृताः । अथ तदधस्तना अवयवाः ० । ० । २२ । ७ । ३० । एते खाङ्केन्दुभि-१६० गुणिता जाताः ० । ५९ । एतत् षष्ठ्यंशोनं रूपमतः स्वषष्ठ्यंशोनाब्दाः खाङ्केन्दुभिर्भक्ताः पञ्चांशोनाब्दयुता अवमाद्यं भवतीत्युपपन्नम् ॥ ४ ॥

**वा.वा.**–प्रकारान्तरमाह । स्वषष्ठ्यंशहीनाब्देति । अत्राष्टचत्वारिंशद् घटिकास्तत्पञ्चांशोनं दिनम् । शेषम् ० । २२ । ७ । ३० । खाङ्केन्दुभिः सवर्णितं जातम् ० । ५९ । इदं तु स्वषष्ठ्यंशोनदिनम् । अस्य खाङ्केन्दुभाग इति सुगमम् ॥ ४ ॥

**मरीचिः**–अथ भुजङ्गप्रयातवृत्तनिबद्धलघुभूतप्रकारद्वयेनेदमेवाह दिनाद्यमिति । पूर्वानीताब्दपोपयुक्तदिनाद्यमित्यर्थः । अन्यत् स्पष्टम् ।

अत्रोपपत्तिः । एकवर्षे क्षयाहमानम् । ० । ४८ । २२ । ७ । ३० । अनेन गताब्दगुणनेऽस्य खण्डद्वयं कृतम् । एकम् ० । ४६ । ३१ । ७ । ३० । द्वितीयम् ० । १ । ५१ । अथ प्रथमखण्डस्यैकवर्षजत्रिगुणितदिनाद्यतुल्यत्वादिष्टकालेऽप्यानीतं दिनाद्यं त्रिगुणितं प्रथमखण्डासन्नफलं स्यात् । द्वितीयं सवर्णितम् १११ । तदधो हरश्च ३६०० । अनेन गुणने 'इष्टोनयुक्तेन गुणेन*' इत्याद्युक्तगुणनप्रकारेण नवमितिप्रयुक्ते गुणे विंशत्यधिकशतम् १२० जातम् । अत्रापि गुणहरौ १२०, ३६०० गुणेनापवर्त्य हरस्थाने त्रिंशत् । तथा च वर्षैस्त्रिंशदंशो योज्य इति सिद्धम् । अथ गुणकेऽधिककर-

* भास्क–लीलावत्यां गुणनविधिः ।

गादिगुणितगताब्देभ्यः षट्त्रिंशच्छत-३६०० भक्तफलं हीनं कार्यम् । पूर्वहरेण फलग्रहणात् । अत्रापि गुणहरौ गुणेनापवर्त्य हरस्थाने चतुःशतमिति समाश्राभ्रवेदांशकोनं सिद्धमत उपपन्नं दिनाद्यमित्याद्यर्थम् । एवं द्वितीयप्रकारेऽपि । प्रथमखण्डम् ० । ४८ । द्वितीयम् ० । ० । २२ । ७ । ३० । प्रथमखण्डस्य लाघवार्थमेकग्रहणेन गताब्दतुल्याः क्षयाहाः । अथ प्रथमखण्डवास्तवफलार्थमन्तरम् ० । १२ । इदं सवर्णितं षष्टिर्हरश्च तदधः $\frac{12}{60}$ । अत्र गुणहरौ गुणेनापवर्त्य हरस्थाने पञ्च । ते वर्षपञ्चांशोनहीनाब्दा इति प्रथमखण्डं सिद्धम् । द्वितीयखण्डमप्येकस्यं तदधो हरश्च $\frac{18660}{12960000}$ । एतौ गुणहरौ स्वेशविश्वै-१३११ रपवर्तितौ जातौ ६०, ९६०० अत्रैकमितेष्टकल्पनेन इष्टयुक्तगुणेन गुणने गुणहरौ हरेणापवर्त्य हरस्थानेऽभ्रभूपाः १६० । अथ गुणनफलसिद्ध्यर्थं गताब्दानां खखाङ्काङ्कैः—९६०० शो हीनस्तत्र पूर्वं रूपमितगुणगुणितवर्षाण्यत्र स्वषष्ट्यंशहीनानि कृतानि । षष्टिमितहरस्य पृथक्करणेनोभयत्र हरसमत्वाच्चलितत उपपन्नं स्वषष्ट्यंशहीनाब्देत्याद्यर्थम् ॥ ४ ॥

अथ गताधिमासांश्शुद्धिं चाह ।

**दिनादिक्षयाहादिदिग्घ्नाब्दयोगः**
**खरामै-३० र्हृतः स्युः प्रयाताधिमासाः ।**
**भवेच्छुद्धिसंज्ञं यदत्रावशिष्टं**
**तदूनं सदूनाहनाड्यादिकेन ॥ ५ ॥**

**वा-भा-** अनन्तरानीते ये दिनादिक्षयाहाद्ये तयोर्योगो दशघ्नैर्गताब्दैर्युतास्त्रिंशता हृतः फलं गताधिमासा भवन्ति । यदत्रावशिष्टं तच्छुद्धिसंज्ञम् । परं क्षयाहानां नाड्यादिकेन वर्जितं सत् ।

अत्रोपपत्तिः । अत्रैकवर्षसावनाना—३६५ । १५ । ३० । २२ । ३० नवमानां च ५ । ४८ । २२ । ७ । ३० योगतुल्या वर्षे चान्द्राहा भवन्ति ३७१ । ३ । ५२ । ३० । तथा वर्षे षष्ट्यधिकशतत्रयं ३६० सौराहाः ।

दभिन्नाश्चान्द्राहाः प्रत्यब्दमधिमाससंबन्धिन एकादश भवन्ति घटी-त्रयं च सार्धानि द्विपञ्चाशत् पलानि ११ । ३ । ५२ । ३० । एवमेक-स्मिन् वर्षे दिनादिक्षयाहादियोगो दशाधिकोऽधिदिनानि भवन्ति । अधिदिनैस्त्रिंशद्भिरधिमासो भवतीत्युपपन्नमधिमासानयनम् । अथाधिशे-षदिनान्यहर्गणानयने शोध्यत्वाच्छुद्धिसंज्ञानि । अत्राधिमासशेषतिथिभ्यो यदवमघटिकाः शोधितास्तत्कारणमपि कथयिष्यामः ॥ ५ ॥

**वा.वा.**–अथ गताधिमासाद्यमाह दिनादिक्षयाहादीति । यथा सौरवर्षान्तःपातिसावनचान्द्राणामन्तरं क्षयाहास्तथैव सौरचान्द्राणामन्तर-मधिदिनानि । तान्येकस्मिन् वर्षे ११ । ३ । ५२ । ३० । वार्षिकं दिना-द्यम् । ० । १५ । ३० । २२ । ३० सावनमिदम् । वार्षिकक्षयाहाद्यम् ० । ४८ । २२ । ७ । ३० । अनयोर्योगे जातं चान्द्रमिदम् ११ । ३ । ५२ । ३ । अत्र चेद्दश योज्यन्ते तदा वार्षिकाधिदिनानि । एवं खण्डत्रयेण सा-ध्यमानेष्वधिदिनेषु दिनादिक्षयाहादिदिग्घ्नाब्दयोग इति लब्धहर्गणोप-योगित्वेनावमघटीशोधनमिति प्रतिपादयिष्यते ॥ ५ ॥

**मरीचिः**–अथाधिमासपूर्वकशुद्ध्याख्योपकरणानयनं भुजङ्गप्रयातेनाह दि-नादिक्षयाहादिदिग्घ्नाब्दयोग इति । पूर्वानीताब्दपोपयुक्तदिनादि प्रागा-नीतक्षयाहादि दशगुणितकल्पगतवर्षाणि । एषां योगस्त्रिंशता भक्तः फलं गताधिमासाः । यच्छेषं सावयवं स्थितं तत् क्षयाहस्य पूर्वानीतस्याधोऽव-यवेन घटीपलाद्यात्मकेन यथास्थाने ऊनं न्यूनं कृतं सत् तदेवात्र अब्दपकाले मध्यममेषसंक्रान्तिकाल इत्यर्थः । शुद्धिसंज्ञं वक्ष्यमाणाहर्गणा-र्थमेतच्छोध्यत इति शुद्धिसंज्ञा युक्ता भवेत् । अत्र शुद्धेः प्रयोजनादपि फलस्याधिमासस्यापि प्रयोजनात् तष्ट इति पदं विहाय हृत इति पदोपा-दानं युक्तम् ।

अत्रोपपत्तिः । एकवर्षेऽनुपातानीतसौरचन्द्रदिनमानान्तरमधिमा-साभावाद्दिनाद्यधिशेषमिदम् । तच्च कल्पवर्षैः कल्पाधिमासदिनानि

तदैकर्णेण कानीत्यनुपातेन वा जातम् ११ । ३ । ५ । ३० । अनेन चन्द्र-वर्षान्तात् सौरवर्षं शुद्धं संपूर्णं भवतीत्यस्य शुद्धिसंज्ञा कृता । अत एकवर्षे इयं शुद्धिस्तदा गतवर्षैः केत्यनुपातेनास्य गुणस्य खण्डद्वयेन गुणनं कृतम् । एकं खण्डं दश । द्वितीयं च १ । ३ । ५ । ३० । अथ द्वितीय-स्यापि चान्द्रावयत्वाद्दिनादिक्षयाहाद्योः सावनावमांशयोर्योगे संभवा-दिष्टकालेऽप्यानीतदिनादिक्षयाहाद्योर्योगो द्वितीयखण्डसिद्धम् । एकवर्षे सावनदिनमानोर्ध्वादिपञ्चनामधिकत्वात् क्षयाहे पञ्चानां सत्त्वाच्चेत् योगो दश चान्द्रदिनानि प्रथमखण्डमिति । इष्टकाले दशगुणितवर्षाणि द्वितीयखण्डम् । तद्योगः कल्पादितः सौरवर्षादावधिदिनानीति त्रिंशद्भक्त फलमधिमासा गताः शेषं तदवयवम् । चान्द्रवर्षादिरूपचैत्रादितः सौर-वर्षान्त एतदन्तरेणाग्रे इति शुद्धिसंज्ञाऽस्य युक्ताऽप्यस्य चान्द्रत्वेनैतद्-घटीनामपि तत्त्वादहर्गणानयने एतत्सावनघटीनां प्रयोजनात् तत्सिद्ध्यर्थ क्षयाहाद्योऽवयवेन घट्यादिना हीनस्य शेषस्य शुद्धिसंज्ञा कृता । चान्द्रा-वमांशान्तरे सावनांशत्वादिति संक्षेपः ॥ ५ ॥

अथ प्रकारान्तरेणाधिमासानयनमाह ।

**द्विधाब्दा द्विरामैः ३२ खरामै-३० श्च भक्ताः**
**फलैक्यं शिवघ्नाब्दयुक्तं विभक्तम् ।**
**खरामैस्तु ते वाऽधिमासाश्च शेषं**
**भवेच्छुद्धिरूनाहनाडीविहीनम् ॥ ६ ॥**

**वा-भा-** स्पष्टार्थम् ।

अत्रोपपत्तिः । प्रत्यब्दं यात्यधिमासशेषसम्बन्धिदिनानि ११ । ३ । ५२ । ३० । एभिः किलाब्दा गुण्यास्त्रिंशता ३० हृता अधिमासा भवन्ति । तत्र लाघवार्थमेभ्य एकादश विशोध्य शेषम् ० । ३ । ५२ । ३० । खाष्ट-वेदै-४८० र्भाजितं जातमेकत्रिंशत् ३१ । अनेनाब्दा गुण्याः किल खाष्ट-वेदै-४८० र्भाज्याः । तत्राचार्येण रूपविभागाद्गुणकस्य खण्डद्वयं कृतम् ।

ॐ नमः परमात्मने ।

# महाभारततात्पर्यप्रकाशः ।

सटीकः

## श्रीसदानन्दव्यासविरचितः ।



श्रीगणेशाय नमः ।

नमः सरस्वत्यै नमो गुरवे शिवाय सपरिवाराय ॥

यः कर्त्ता सर्वसृष्टेरपरिमितकलः सर्ववित्सर्वशक्ति ।
योऽन्तःसर्वं सहेतुं नियमयति विभुर्विश्वमाविश्य नित्यम् ॥
यं ब्रह्मेशानशक्रप्रमुखसुरगणा नित्यमाराधयन्ति ।
यस्मिन्नन्ते लयोऽस्य प्रभुमवनरतं तं प्रपद्ये मुकुन्दम् ॥ १ ॥
नन्दनन्दनमाराध्य सच्चिदानन्दविग्रहे ॥
सर्वभारततात्पर्यं दर्शयामि यथामति ॥ २ ॥
भारते सर्ववेदार्थो भारतार्थो हरिः स्वयम् ।
तस्माद् भारतमेवाहं वन्दे वेदैकविग्रहम् ॥ ३ ॥
वेदतत्त्वं यथा कृष्णो भारतार्थो यथा स्वयम् ।
सतां हार्दो यथाकृष्णस्तथा बुद्धौ विभातु मे ॥ ४ ॥
क्वाहं मन्दमतिः क्वेदं भारताम्बुधिमन्थनम् ।
तथापि हरिकारुण्यं प्रेरयत्येव मामिह ॥ ५ ॥
मादृशोऽप्यल्पधीर्यस्य कृपापाङ्गैकवीक्षणात् ।
कर्त्तुं प्रवर्त्तते सारं भारतस्य नमामि तम् ॥ ६ ॥
अहो यस्य कृपालेशो वरीवर्त्त्यखिलोपरि ।
तं हरिं परमानन्दं संश्रये सर्वसिद्धये ॥ ७ ॥
हरिरात्मा मम स्वामी पिता माता गुरुः सखा ।
सर्वस्वं निश्चितं भाति यथा देयात्तथा मतिम् ॥ ८ ॥
ये स्वयं मानदक्षाः स्युर्लोके वामीश्वरा अपि ।
तेऽपि नो यत्कृपालेशं विना कर्त्तुं क्षमा मनाक् ॥ ९ ॥

तमहं सकलाध्यक्षं ब्रह्मरुद्रादिवन्दितम् ।
ध्येयं ज्ञेयं समर्च्यं च संश्रये हरिमीश्वरम् ॥ १० ॥
पूज्यमादौ ततो ध्येयं ज्ञेयं श्रीकृष्णमादरात् ।
भारते प्रतिपाद्यं हि दर्शयिष्यामि तत्तथा ॥ ११ ॥
काण्डत्रयात्मको वेदो भारते दृश्यते ह्यतः ।
वेदो भारतरूपेण व्याख्यायतेऽर्थतो मुदा ॥ १२ ॥
धर्मो निष्काम एवात्र प्रतिपाद्यतया मतः ।
सकामस्य यतो निन्दा श्रूयते बहुधा किल ॥ १३ ॥
तेन निष्कामधर्मेण सदाचारयुतेन च ।
आराध्यो हरिरेवात्र मतं तत्सम्मतं सताम् ॥ १४ ॥
उपास्यो हरिरेवात्र प्रतिपाद्यत आदरात् ।
द्वितीयस्येश्वरस्यैवाभावादन्यो न विद्यते ॥ १५ ॥
ज्ञेयः स एव भगवान् सर्वात्मा प्रत्यगन्तरः ।
अखण्डानन्दरूपत्वात्पुरुषार्थविदां मतः ॥ १६ ॥
उपक्रमोपसंहाराद्यैक्यवाक्यतया स्फुटम् ॥
प्रदर्श्यतें मयार्थोऽतः पुरुषार्थोपपत्तये ॥ १७ ॥
वासुदेवाश्रयो योगी भगवत्तत्त्वतत्परः ।
तत्प्रेमप्रेरितः सम्यक् प्रवृत्तोऽहं महत्फले ॥ १८ ॥
यं वेदाः प्रवदन्ति देवनिवहा जाता यतो यद्रता ।
ब्रह्माद्याः सनकादियोगिभिरहोरात्रं य आस्वाद्यते ॥
यं संश्रित्य शरण्यपादकमलं प्रेम्णाञ्जसा संसृते ।
मुक्ताभ्रान्तिमपोह्य सोऽत्र मधुहा दद्यात्परां मे मतिम् ॥ १९ ॥

इह खलु भगवान् पाराशर्यः परमकारुणिकः सर्वजनाननुग्रहीतुं चतुर्दशविद्यास्थानरहस्यान्येकत्र प्रददर्शयिषुर्महाभारताख्यमितिहासं प्रणेष्यन्प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनायच कृतं मङ्गलं शिष्यशिक्षायै श्लोकरूपेण निबध्नन् तत्र प्रेक्ष्यावत्प्रवृत्त्यङ्गमभिधेयादि दर्शयति ।

नारायणमिति

**ओँ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥**

तस्य संक्षेपेण तात्पर्यार्थोऽत्र श्रोतृबुद्धिसौकर्याय प्रदर्श्यते पद्यैः

पिण्डब्रह्माण्डनेतृत्वान्नरौ जीवेश्वरावुभौ ।
तयोश्च जयनाच्छुद्धः ब्रह्मापि नर उच्यते ॥ १ ॥
नरजानामपां कार्यं नारं ब्रह्माण्डमिष्यते ।
तद्यस्य वसति स्थानं तेन नारायणो विभुः ॥ २ ॥
अनिरुद्धः स भगवानुपास्यो मोक्षकाङ्क्षिभिः ।
तदुपासक एवात्राधिकारी नर उत्तमः ॥ ३ ॥
क्षरोपाधितया जीवो नर इत्यभिधीयते ।
अक्षरोपाधिको ह्रीशो नारायणपदाभिधः ॥ ४ ॥
क्षराक्षराभ्यामुत्कृष्टो भगवान्पुरुषोत्तमः ।
ज्ञेयो ध्येयः समर्च्योऽत्र नरोत्तमपदाभिधः ॥ ५ ॥
तद्द्योतिकां गिरं नत्वा ततो व्यासस्तयैव सन् ।
संसारजायिनं ग्रन्थं जयनामानमीरयेत् ॥ ६ ॥

अयमत्र संबन्धः नरेणानाद्यविद्यावता जीवेन स्वकर्मद्वारा सृष्टं नारं शरीरं तदेव अयनं प्रवेशस्थानं यस्य सः तं नारायणं जीवान् नियमयितुमतः प्रविष्टं शास्तारम् । तथा च श्रुतिः अन्तः प्रविष्टः शास्ता जनानामिति तथा नरं जीवं हिरण्यगर्भं तत उत्तमं हिरण्यगर्भं तत उत्तमोहिरण्यगर्भा द्धि उत्कृष्टतरोऽन्तर्यामी तत उत्कृष्टतमस्तु शुद्धश्चिदात्मा गीतासु पुरुषोत्तमशब्दशब्दितः ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति ।
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।

इति च तं नमस्कृत्येति संबन्धः एवशब्दस्तेषामवश्यं नमस्कार्यत्वमाह चशब्दः समुच्चयार्थः एतेषां नरनारायणनरोत्तमानां तत्त्वप्रद्योतनीं सरस्वतीं च नमस्कृत्यैव ततो व्यासस्तयैव सरस्वत्या लोकानुग्रहार्थम् आविष्टो जयत्व विद्यामनेनेति जयसंज्ञामविद्याध्वान्तनाशनं ग्रन्थमुदीरयेदुच्चारयेदित्यर्थः ॥१॥

एवं मङ्गलाचरणमिषेण सर्वशास्त्रप्रमेयभूतं पुरुषोत्तमतत्त्वं ग्रन्थादौ भगवता बादरायणेन प्रदर्शितं तेन जीवाविद्याकल्पितत्वात्संसृतेर्मिथ्यात्वं पुरुषोत्तमाख्यस्य ब्रह्मणश्च तत्र सत्तास्फूर्तिप्रदत्वेन सत्यत्वं जीवस्य तदभिन्नत्वं चेति विषयो दर्शितः । भगवत्पुरुषोत्तमपूजनध्यानाभ्यां त्यक्तदोषजातस्य जीवस्य तत्प्रसादाल्लब्धतदभेदज्ञानेनाविद्यानिवृत्तौ तत्कृतायाः संसृतेस्त्रैकालिकबाधादात्यन्तिकी अनर्थनिवृत्तिः स्वस्वरूपभूतपरमानन्दावाप्तिश्च

प्रयोजनम् अथास्तिकामोऽधिकारी ग्रन्थस्य उक्तविषयस्य च ज्ञाप्यज्ञापक भावः संबन्ध इति च दर्शितम् ।

**ओं नमो भगवते वासुदेवाय ॥ २ ॥**

पाराशर्यो मुनिर्ग्रन्थप्रतिपाद्यं स्वरूपतः ।
मङ्गलव्याजतः सम्यक् प्रदर्श्यादौ पुनः स्वयम् ॥ १ ॥
प्रमेयं भारतस्येति स्वोपास्यं परमं पदम् ।
श्रीवासुदेवमानन्दं भगवन्तं सनातनम् ॥ २ ॥
कृष्णं नमस्करोत्यद्धा द्वादशाक्षरविद्यया ।
तेनाभ्यासोऽपि शास्त्रस्य भगवत्युच्यते स्फुटम् ॥ ३ ॥
वेदान्तवेद्यं ब्रह्मैव भगवच्छब्दशब्दितम् ।
स्वेच्छयाविष्कृतं येन षाड्गुण्यं परमाद्भुतम् ॥ ४ ॥
परा विद्येयमत्रोक्ता द्वादशाक्षररूपिणी ।
तदुपासनया भक्तैः सुलभं हरिदर्शनम् ॥ ५ ॥
अनया भगवज्ज्ञानं विना यत्नान्तरं भवेत् ।
वेदमौलिरहस्यत्वादित्यादौ मुनिराह ताम् ॥ ६ ॥
विश्वतैजसप्राज्ञानामहङ्कारविलापनम् ।
प्रणवेनान्वितः प्रदुर्भाव आह विचारणात् ॥ ७ ॥
अनिर्देश्यस्य चिद्धातोः पूजायां संप्रयुज्यते ।
आविष्कृतः षाड्गुण्येन भगवच्छब्द उत्तमः ॥ ८ ॥
तत्रापि षड्गुणानां स्वस्वरूपाभिन्नभावतः ।
गौण्याभेदाविवक्षायां मत्वर्थीयः प्रयुज्यते ॥ ९ ॥
परे ब्रह्मण्यसङ्गे त्वचिन्त्यैश्वर्य स्वभावतः ।
वर्तते भगवच्छब्दः सर्वकारणकारणे ॥ १० ॥
आधारपोषकत्वाभ्यां भकारोऽत्र प्रयुज्यते ।
आधारो दृश्यमात्रस्य पोषको हरिरेव हि ॥ ११ ॥
सृष्टावुद्गमयितृत्वात्कार्यमात्रस्य कारणात् ।
कर्मज्ञानफलप्राप्तिकर्तृत्वेन स्थिता तथा ॥ १२ ॥
प्रलये गमयितृत्वात्कार्याणां कारणं प्रति ।
श्रीहरेर्भगवच्छब्दे गकारः संप्रयुज्यते ॥ १३ ॥
वसन्ति यत्र भूतानि सर्वभूतेषु यः पुमान् ।
वसतीत्येष तत्रैव वकारार्थो मतो भवेत् ॥ १४ ॥
एवमेष महाशब्दो भगवानिति युज्यते ।

परमब्रह्मभूतस्य वासुदेवस्य तान्यतः ॥ १५ ॥
सर्ववासौ समस्तं च वसत्यत्रेति वै ततः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ १६ ॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भगवतीङ्गना ॥ १७ ॥
नित्यमप्रतिवन्धेन वर्त्तते यत्र षड्विधम् ।
स एव भगवानत्र नमस्कार्यतया मतः ॥ १८ ॥
विशुद्धे हृदये यस्माच्छ्रीसुदेवनन्दनः ।
विभाति तत एवासौ वासुदेवपदाभिधः ॥ १९ ॥
वाच्यो लक्ष्यश्च व्यङ्ग्यश्च भगवान्हारिरीश्वरः ।
भारते मुख्यतया योऽसौ श्रीमुकुन्दः सतां मतः ॥ २० ॥
वेदे रामायणे पुण्ये पुराणे भारते तथा ।
आदौ मध्ये तथान्ते च हरिः सर्वत्र गीयते ॥ २१ ॥ २ ॥
इममेवार्थं पुनर्मङ्गलाचरणपूर्वकं सूतमुखेन वक्तुं प्रतिजानीते ।
आद्यमित्यादिचतुर्भिः ॥

**आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।**
**ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ ३ ॥**
**असच्च सदसच्चैव यद्विश्वं सदसत्परम् ।**
**परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ ४ ॥**
**मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ॥**
**नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ ५ ॥**
**महर्षेः पूजितस्येह सर्वलोके महात्मनः ॥**
**प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥ ६ ॥**

हरिं नमस्कृत्य महर्षेर्मतं प्रवक्ष्यामीति तृतीयचतुर्थयोरन्वयः अत्र भूबीजाङ्कुरतरुफलोपमाः पञ्च ईश्वरपुरुषाः शुद्धशबलसूत्रविड्विष्णुसञ्ज्ञाः निरुपाधिमायोपाधिमायाकार्यापञ्चीकृतमहाभूतोपाधिपञ्चीकृतमहाभूतोपाधिपुरुषाकारमूर्त्युपाधिविशिष्टचैतन्यरूपाः तत्र तत्रोदिशति नमस्कार्यत्वेन आद्यं पुरुषं निरुपाधिचैतन्यम् ईशानं मायिनं तु महेश्वरमिति श्रुतिप्रसिद्धं मायोपहितचैतन्यं पुरुहूतं यज्ञे पुरुभिर्बहुभिर्होतृभिर्हूतं पुरुभिः सामगैःस्तुतम् अध्व

र्युभिरिष्टं चेत्यपि द्रष्टव्यं तद्यादिदमाहुरमुं यजामुं यजेत्येतस्यैव सावि-ष्टिरिति हिरण्यगर्भाख्ये सूत्रे सर्वयष्टव्यदेवतात्मत्वश्रुतेः यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिस्तुवन्तीति स्मृतेश्चपुरुहूः पुरुभूयिष्ठमित्यमरः एतदेव त्रयं व्युत्क्रमेण विशिनष्टि व्यक्ताव्यक्तं सनातनमिति । व्यक्तं सूत्रात्मा हविर्भोक्तृत्वफलप्रदातृत्वादियोगात् अव्यक्त ईशानः सुप्तिप्रलययोः सर्वलया-त्मत्वात् सनातनमखण्डदण्डायमानम् एतेन तस्मादव्यक्तमुत्पन्नमिति स्मृते-श्चेतरयोरुत्पत्तिमत्त्वेन लयो दर्शितः ऋतं यथाभूतं यथास्फटिके स्वतः शुद्धे हिङ्गुलाश्रयत्वेन रक्तत्वं तत्रैव स्फटिकांशप्रकर्षे पद्मरागत्वं तत्रैव चन्द्रिका यामिन्द्रनीलत्वं चाध्यस्यते तथा चैतन्ये मायायोगादीशत्वम् ईशेऽप्यविद्यायो गात्सूत्रत्वं सूत्रेऽप्यविद्यादार्ढ्याद्विराड्त्वं चाध्यस्यते तत्रोत्तरोत्तरापेक्षया पूर्वम् ऋतं परमर्त्तत्वाद्यः पुरुष एकमिति मायाद्युपाधिकृतभेदनिरासः । अक्षरं व्यापकमाकाशात्पृथिव्यादेरिव नास्मात्पृथगुपाधेरपि सत्त्वमस्तीति दर्शि तम् अत एव ब्रह्मनिरवधिकबृहत्वाद्देशतः कालतो वस्तुतश्च परिच्छेद-शून्यम् ॥३॥

चतुर्थं विराजमाहासच्चेति । यत्सदसत्परं सदसद्भ्यां कार्यकारणाभ्यां सूत्रेशाभ्यां परम् अन्यत् सनातनाख्यं तदेव वस्तु विश्वं विराड्रूपमित्यर्थः ब्रह्मैवेदं सर्वमित्यादिश्रुतेः किंभूतं विश्वं सद् दृश्यमानत्वात् असच्च नेह नाना स्ति किञ्च नेति तत्त्वज्ञानबाध्यत्वश्रुतेः नन्वाद्यन्तयोरसत् मध्ये च सत् घटा-दिकं दृष्टं नेत्याह सच्चेति रज्जूरङ्गवत्प्रातिभासमानबाध्यत्वश्रुतेः नन्वाद्यन्तयोर सत् मध्ये च सत् घटादिकं दृष्टं नेत्याह सच्चेति मध्येऽपि कालत्रयेऽपि नास्ती-त्यर्थःफलोपमं पञ्चमं विष्णुमाह परेति परे सूत्रात्मानःअवरे विराडादिघटान्ताः बहुत्वम् अनन्तशक्तिसूचनार्थं तेषां स्रष्टारम् ॥ नन्वण्डान्तरुत्पन्नस्य कथं परा-दिस्तद्द्रष्टृत्वमत आह पुराणमिति पुरापि नवमनादिरेव सन् ब्रह्माण्डान्तश्च-तुर्भुजेन रूपेणाविर्भूतोऽनन्तशक्तिः परिणतबीजगर्भं फलमङ्कुरादीनामिव परा-वराणां स्रष्टा भवतीत्यर्थः अत एव परमव्ययम् अत्यन्तव्ययशून्यं संसारस्या नन्त्यात्तत्कारणीभूतस्य व्ययो न युज्यत इत्यर्थः; ननु सोऽयमात्मा चतुष्पादि-त्यादिना निरुपाधितुर्यप्रतिपत्तये परमात्मनस्त्रीण्येव सोपाधिकानि रूपाणि वि श्वतैजसप्राज्ञसंज्ञानि माण्डूक्यादिषु श्रूयन्ते ननु चतुर्थमिति चेत्सत्यम् तथापि य एषोऽन्तरादित्ये हिरण्मयःपुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशःअरश्चण्य-श्चार्णवौ तृतीयस्यामितो दिवीत्यादिप्रभुविमितं हिरण्मयं वेश्मेति छान्दोग्ये-पुरुषाकृतेर्ब्रह्मणस्तल्लोकादेश्च श्रवणात् तद् ब्रह्म हे देवेभ्यो विजिग्ये इत्यादिकेनो

पनिषदि अग्निवाय्वादिना सहसंवादादेश्च श्रवणात्। कौषीतकिब्राह्मणे च पर्यङ्कस्थस्य ब्रह्मणस्तेन सह संवादादेश्च दर्शनात्तदप्यस्तीति गम्यते यत्स्थानं प्राप्यानावृत्तिः स्मृता तत्र गत्वा पुनर्नेमं स्थानमायान्ति भारतेत्यारण्यके स्थानान्तरेभ्यश्चावृत्तिर्गीतासूक्ता आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेति तस्माच्छास्त्रान्त्यन्यायेन यदधीनं जगद्व्यापारवर्जमितरेषामुपासनासिद्धानां हिरण्यगर्भादीनामैश्वर्यं येन सह तेषां भोगसाम्यं यल्लोकं प्राप्तानामनावृत्तिरतद्भृत्यभूतचतुर्वक्त्रेण सह मुक्तिराधिकारिकाणामभुक्तविद्याफलानां तल्लोकगतानामपि यावदाधिकारिकल्पान्तरेऽप्यवस्थितिश्चेति श्रूयते तस्य विग्रहादिकं सर्वशास्त्रप्रामाण्यादभ्युपेयम् एकं सतं बहुधा कल्पयन्ति यो देवानां नामधी एक एवेति तं यथायथोपासते तथेतः प्रेत्य भवतीति श्रुतेस्तद्भावनावतां तत्सारूप्यप्राप्तिः कीटभृङ्गन्यायेन भवति तस्मादस्ति चतुर्भ्यः आत्मनः पादेभ्योऽतिरिक्तो विष्णवाख्यः पञ्चमः पुरुषः सोऽयं प्रतिपाद्यते परावराणां स्रष्टारमित्यादिना ॥ ४ ॥

मङ्गल्यं मङ्गलावहं मङ्गलस्वरूपेणैव एष ह्येवानन्दयतीति आनन्दो ब्रह्मेति च श्रुतिभ्यां विष्णुं यज्ञात्मानं यज्ञो वै विष्णुरिति श्रुतेः वरेण्यं वरणीयं भोगमोक्षकाङ्क्षिभिरवश्यमादरणीयम् अनघम् आगन्तुकदोषास्पर्शनं शुचिस्वभावशुद्धं हृषीकेशं हृषीकाणामिन्द्रियाणामीशितारं चराचराणां गुरुं विद्याप्रदम् अत एव हरिं संसारहरणम् ईदृशं हरिं ग्रन्थप्रतिपाद्यं नमस्कृत्य व्यासस्य मतं सर्वं वेदरहस्यं प्रकर्षेण नानोपाख्यानोपबृंहणेन वक्ष्यामि तत्र श्रद्धोत्पादनार्थं महर्षेरित्यादि व्यासविशेषणं ऋषीणां मन्त्रद्रष्टॄणां मतम् इति तन्मतस्य श्रौतत्वमुक्तम् अद्भुतकर्मण इति कृष्णाख्यब्रह्माद्वैतप्रतिपत्त्युपायभूतेन नानाख्यानदृष्टान्तप्रणयनेन विचित्रग्रन्थकारित्वमुक्तम् ॥ ५ ॥ ६ ॥

इदानीं भारतोपाख्यानतात्पर्यसंग्राहकौ द्वौ श्लोकौ पठति ।

**दुर्योधनो मन्युमयो महाद्रुमः**
**स्कन्धः कर्णः शकुनिस्तस्य शाखा ।**
**दुःशासनः पुष्पफले समृद्धे**
**मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ७ ॥**
**युधिष्ठिरो धर्ममयो महाद्रुमः**

स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ ८ ॥

दुर्योधनः तेन सहात्यन्तमैक्यं प्राप्ताः कर्णशकुनिदुःशासनास्तस्य स्कन्धशाखापुष्पादितुल्यास्तादृशा एव तस्य मूलं राजा धृतराष्ट्रः स चामनीषी मनोनिग्रहासमर्थः तनैव हि पुत्रस्नेहान्धेन दत्तावसरो दुर्योधनो दृढमूलोऽभवत् अन्यथा बाल्य एव विदुरादिवचसा तस्य त्यागे कृते सति गराग्निदानद्रौपदीकचग्रहणादिमूलः कुलक्षयो न जातः स्यात् एतेन दृढाज्ञानमूलोऽधर्माद्यङ्कुरो दैन्यतरुः क्रोधलोभादिस्कन्धो हिंसास्तेयादिशाखा बधबन्धनरकादिफलपुष्पः पुरुषार्थकामैर्मूलाज्ञानोच्छेदेन नाशनीय इति सूचितम् ॥ ७ ॥

एवं हेयत्वेनासुरीसंपदमभिधायाधुनोपादेयत्वेन दैवीसंपदमाह युधिष्ठिर इति धर्मः पुण्यं तेन तत्कारणीभूतशमदमसत्यादिकं ग्राह्यं तन्मयो महाद्रुमः युधिष्ठिरस्तदेकात्मानोऽर्जुनभीममाद्रेयास्तस्य स्कन्धादितुल्यास्तादृशा एव तस्य मूले कृष्णः सच्चिदानन्दविग्रहः भगवान् देवकीनन्दनः परमात्मा तेन हि दृढंज्ञानेन धर्मो दृढमूलो भवेत् अन्यथा कामादिभिरुपहतः स्यात् यो वा एतदक्षरं गार्ग्यविदित्वास्मिं लोके यजति ददाति तपस्तप्यते बहूनि वर्षसहस्राण्यत एव देवास्य तद्भवतीति श्रुतेः ज्ञानस्य मूलं ब्रह्म वेदः वेदाद्धि यागक्रत्वाख्यपरापरधर्मज्ञानं जायते धर्मस्य शब्दमूलत्वादिति न्यायात् वेदस्यापि मूलं ब्राह्मणास्तत्संप्रदायप्रवर्तकत्वात् एवं च ब्राह्मणानामुपदेष्टृत्वेन वेदस्य प्रमाणत्वेन परमात्मनोऽनुग्राहकत्वेन च धर्ममूलत्वम् एतेन वेदब्राह्मणभक्तेन संपाद्यमानो वेदोक्तो भगवदाराधनलक्षणो यागादिधर्मवृक्षोऽहिंसासत्यादिस्कन्धो धारणाध्यानादिशाखस्तत्त्वसाक्षात्कारफलः पुरुषार्थकामेन भगवदाराधनबलेन संपादनीय इति सूचितस्य सूत्रभूतस्यैव श्लोकद्वयस्य वृत्तिरूपोऽष्टादशपर्वात्मकोपाख्यानरूपो ग्रन्थः पर्वसंग्रहस्तु आदौ सभारण्यविराड् उद्यमे भीष्मे गुरौ सूर्यजशल्यसौप्तिके स्त्रीशान्तिदानाश्वमखाश्च धर्मस्थितौ मौसल्ययानद्युगमेऽखिलेषु च अत्र प्रायसस्ततदाख्यानतात्पर्याणि तु पद्यैर्व्याख्यायते तेन च धर्मज्ञानवैराग्यभगवद्भक्तिप्रमुखगुणनिष्ठतया भवितव्यमिति तथाहि

संसारतापशमनैकनिविष्टचेतो
वृत्युक्तितत्क्रमगृहीतपदार्थकानाम् ॥
आविर्भवेद्य उचितैकगुणाम्बुराशि

स्तं नन्दसूनुमनिशं हरिमानतोऽस्मि ॥ १ ॥
सत्त्वशुद्धिमतः पुंसो भवेदेवं विचारणा
कथं संसारपाथोधेः समुद्धारो भवेन्मम ॥ २ ॥
तत्र शास्त्रं समालोक्य पूर्वापरविचारतः ।
तत्त्वज्ञानमृतेनैव तरणं भववारिधेः ॥ ३ ॥
विनिर्श्चित्येति तस्यापि साधनं सर्वभोगतः ।
वैराग्यं भगवद्भक्तियुतं तत्रापि निर्णयः ॥ ४ ॥
साधनं भगवद्भक्तिः श्रवणादिमयी पुरा ।
प्रेमभक्तिः फलं तस्या वैराग्यं त्वानुषङ्गिकम् ॥ ५ ॥
प्रेमभक्तेस्तु तत्त्वाप्तिः स्वतः सिद्धा महात्मनः ।
यतः प्रेमार्द्रचित्तस्य कृष्णेक्षणमयत्नतः ॥ ६ ॥
प्रेमशून्यस्य विहितकर्मानुष्ठानतो ऽपि च ।
बहुजन्मभिरद्वैतनिष्ठा स्याद्दुर्लभागमात् ॥ ७ ॥
अतः स्वधर्मसंसिद्धिर्भगवत्परितोषणम् ।
यस्य स्यात्स उदारात्मा ज्ञानवैराग्यवान्भवेत् ॥ ८ ॥
तस्माद्भगवतः श्रीमत्कृष्णस्याङ्घ्रियुगे सदा ।
भक्तिरत्युज्ज्वला येन सिद्ध्येत्तत्सर्वथाश्रयेत् ॥ ९ ॥
अन्यथा धृतराष्ट्राख्यनृपस्येव कुटुम्बिनः ।
वृथा शोकविलापेन क्षपणं वितथायुषः ॥ १० ॥
एतदर्थं भगवता व्यासेन करुणात्मना ।
महाभारतनिर्माणं कृतं लोकहिताय च ॥ ११ ॥
सर्ववेदेतिहासानां पुराणानां च सर्वशः ।
संगृह्य सर्वमेकत्र तात्पर्यं तेन दर्शितम् ॥ १२ ॥
गूढं वेदार्थमालोच्य तद्विबोधनहेतवे ।
उपाख्यानमुखेनात्र शास्त्रार्थो दर्शितोऽञ्जसा ॥ १३ ॥
तदुपाख्यानतात्पर्यं यथामति मया मुदा ।
पद्यैः प्रदर्श्यते कृष्णपदाम्भोजैकभक्तये ॥ १४ ॥
आदावुपक्रमे कृष्णतत्त्वं मङ्गलरूपतः ।
सर्वशास्त्रप्रमेयत्वाद्दर्शितं मुनिनादरात् ॥ १५ ॥
जगत्सृष्टेः पुरा कृष्णतत्त्वमेकमनामयम् ।
आसीत्तस्माज्जगत्सर्वं जातं ब्रह्ममुखं हरेः ॥ १६ ॥

स्थूलसूक्ष्मविभागेन विश्वं निर्माय केशवः।
स्वयं ब्रह्मादिरूपेण कार्यकारणतां ययौ ॥ १७ ॥
बृहद्व्योममयत्वेन श्रोत्रमिन्द्रियमुच्यते।
द्रव्याणां भासनाद्धानुशब्देनोक्तं त्वगिन्द्रियम् ॥ १८ ॥
चक्षुः प्रसिद्धमात्मा तु प्रेयस्त्वाद्रसनेन्द्रियम्।
वागग्निदैवतत्वेन विभावसुपदोदिता ॥ १९ ॥
कर्मणां प्रसवात्पाणी मतौ सवितृशब्दितौ।
विशिष्टगतिमत्त्वादप्यर्कः पादेन्द्रियं मतम् ॥ २० ॥
उपस्थः स्याद्दचीकाख्य ऋचां सर्वाङ्गतेजसाम्।
संभोगरतिकालेऽत्रेत्येवमेव मरीचिकः ॥ २१ ॥
वायुराशावहः प्रोक्तो भासनादवनाच्च सः।
भानूरविश्चोच्यते तौ घ्राणपायुपदोदितौ ॥ २२ ॥
एवं गूढपदार्थानां भावो भारतसारतः।
ज्ञेयः कृष्णप्रसादेन कृष्णतत्त्वैकगोचरः ॥ २३ ॥
प्रतिपाद्यं मतं तस्मात्कृष्णाख्यं ब्रह्मभारते।
वाच्यत्त्वेन क्वचिल्लक्ष्यं तथा व्यङ्गतया क्वचित् ॥ २४ ॥
महत्त्वेनास्य शास्त्रस्य गूढार्थस्य विभागशः।
संक्षेपाद्वर्णनं श्रोतृबुद्ध्या दोहाय दृश्यताम् ॥ २५ ॥
लोकद्वयहितज्ञानाभावेऽप्यज्ञाः स्तुवन्त्यपि।
स्वात्मानं स्मृतिमात्रेण लौकिकस्येति दर्शितम् ॥ २६ ॥
धृतराष्ट्रनृपव्याजाद्यदाश्रौषमितिस्थले।
संगृहीतोऽर्थतस्तेन भारतार्थः समासतः ॥ २७ ॥
आत्मज्ञानाद्विशोकित्वं वैराग्याज्ज्ञानमात्मनः।
कालादृष्टाद्यधीनत्वदृष्ट्या तत्सिद्धिरिष्यते ॥ २८ ॥
अतः कालाद्यधीनत्वं सर्वस्य जगतीतले।
प्राहासौ सञ्जयोक्त्यादौ भगवान्बादरायणः ॥ २९ ॥
प्रमेयं भारतस्यापि श्रीकृष्णं सर्वरूपतः।
वर्णयामास वेदान्तसिद्धान्तत्वादुपक्रमे ॥ ३० ॥
पुनर्वैराग्यसिध्यर्थं कुलक्षयप्रसङ्गतः।
सूत्रतार्थप्रकरणविभागेनाह तत्पुनः ॥ ३१ ॥
भगवत्तत्त्वविज्ञानं गुरुभक्तस्य जायते।

अत आह गुरोर्भक्त्यै तदाख्यानमुपक्रमे ॥ ३२ ॥
कुड्यवद्वृषवद्भूत्वा ऽव्यग्रो यः सेवते गुरुम् ।
तद् विद्या देवताश्चानुगृह्णन्तीत्याह पौषकृत् ॥ ३३ ॥
ब्रह्माध्यस्ताश्विने देवादिधर्मेण स्तूयते हरिः ।
स्तुत्यं कल्पितधर्मेणाधिष्ठानमिति युक्तितः ॥ ३४ ॥
समारोप्य स्वरूपेण विषयो रूपवान्भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥ ३५ ॥
आश्विनौ गुर्वनुज्ञात उपमृत्युर्दृगीप्सया ।
तुष्टाव वेदगैर्मन्त्रैस्तत्तात्पर्यमिहोच्यते ॥ ३६ ॥
ऋचां ब्रह्मपरत्वात्स्यात्तदधिष्ठानगा स्तुतिः ।
भीषत्वादिभिरारोप्य धर्मैरज्जुर्यथोच्यते ॥ ३७ ॥
सदेवेति श्रुतौ ब्रह्म पुरासीदेकमेवहि ।
तद्ध्यानज्ञानसन्तुष्टं दिशत्यात्मदृशं नृणाम् ॥ ३८ ॥
कालो ब्रह्मप्रवर्त्यत्वाद्दिवारात्रादिरूपधृक् ।
संवत्सरोऽखिलायूंषि क्षिणोतीत्येष बोधितः ॥ ३९ ॥
देहाद्यात्मत्वधीर्हेया त्यक्त्वा रागादिदूषणम् ।
ब्रह्मानुग्रहतो जीवो मुच्यते भवसङ्कटात् ॥ ४० ॥
यथाकालोक्तयज्ञादिधर्मानुष्ठानतः पुमान् ।
जिज्ञास्यं ब्रह्मविज्ञाय सुखमेति निरन्तरम् ॥ ४१ ॥
स्वस्वरूपप्रमादेन जातो मृत्युरनर्थदः ।
हिनस्ति जीवनं यस्माज्ज्ञेयः कालः समाहितैः ॥ ४२ ॥
वस्तुतत्त्वानुसन्धानं समाधानेन चेतसः ।
कर्त्तव्यमिति कालोऽयं नेयः साफल्यमञ्जसा ॥ ४३ ॥
तत्त्वं पदार्थयोः सम्यग्विवेकेन परं पदम् ।
अखण्डं सच्चिदानन्दं परब्रह्मैव लक्ष्यते ॥ ४४ ॥
देहेन्द्रियादिसङ्घातं जडं मायाविनिर्मितम् ।
यो भासयति चिद्धातुः ससाक्षीत्वपदार्थकः ॥ ४५ ॥
अस्य द्वैतप्रपञ्चस्य सत्तास्फूर्त्तिप्रदो हरिः ।
सर्वाधिष्ठानभावेन तत्पदार्थः स ईश्वरः ॥ ४६ ॥
तद्भक्त्या शुद्धसत्त्वस्य पुंसः साधनसंपदा ।
जायते ब्रह्मतत्त्वैकाज्ञानविज्ञाननाशकम् ॥ ४७ ॥

सद्धर्मश्रद्धानुष्ठानं यज्ञादेः सत्त्वशुद्धिता ।
वैराग्यज्ञानमोक्षाश्च हरिभक्तितरोः फलम् ॥ ४८ ॥
एवमश्विस्तुतौ भावो मया व्यासप्रसादतः ।
दर्शितः पुनरुत्तङ्ककथाभावो विविच्यते ॥ ४९ ॥
खलो न प्रार्थनासाध्यः स च दैवेन ताडितः ।
अभ्येति मृदुतां पश्चादुतङ्के तक्षको यथा ॥ ५० ॥
कुण्डलं वस्तुतत्त्वं स्यात्पाखण्डी तक्षकः स्मृतः ।
तत्तेनापहृतं पुंस उत्तङ्कस्य प्रमादतः ॥ ५१ ॥
परमेशप्रसादाप्तविवेकपवितेजसा ।
पाखण्डमतपातालं विदार्यानात्मभावनम् ॥ ५२ ॥
आन्तरमान्तरं कोशं नागराजविलोपमम् ।
पूर्वं पूर्वतरात्कोशाद्रमणीयतरं परम् ॥ ५३ ॥
प्रविश्य योगबलतस्तत्रत्यामनुभूय च ।
सत्यसङ्कल्पभावादिसंपदं विविधाकृतिम् ॥ ५४ ॥
तत्रापि सर्पतुल्यानामिन्द्रियेषु मनोधियाम् ।
बहुधानुनयेनापि तत्त्वरत्नं न लब्धवान् ॥ ५५ ॥
सङ्कटस्थः सदा पूर्वं पुण्यपुञ्जादपिस्वयम् ।
प्रेरितो वन्हिगुरुणा मुकुन्दैकानुराधने ॥ ५६ ॥
तदाराधनतः सर्वे प्राणेन्द्रियमनोधियः ।
भुजगा वशगास्तेभ्यस्तत्त्वरत्नं पुनर्हृतम् ॥ ५७ ॥
तेनात्मविष्णुतङ्कोऽपि कृतार्थोऽभूदितीरितम् ।
उपमन्युर्यथा तत्त्वज्ञाननेत्रैकलाभतः ॥ ५८ ॥
शास्त्रोल्लङ्घनतो वन्हिपुलोमानाववापतुः ।
शापमृत्यू इति पुनः पौलोमे तुर्य ईरितम् ॥ ५९ ॥
आयुर्हानिर्महान्छोको हिंसायां चातिसम्भ्रमः ।
रुरोरिव भवन्त्येव दारसक्तस्य दुर्मतेः ॥ ६० ॥
प्रजया पैतृकमृणं छेत्तुं दारान्करोति चेत् ।
तदा जरत्कारुरिव कार्यान्ते प्रव्रजेद् गृहात् ॥ ६१ ॥
अन्याय्यमपि मात्रोक्तं सद्यो यो नानुतिष्ठति ।
तं भस्मीकुर्वते विप्रा वेदाश्चाहिगणं यथा ॥ ६२ ॥
मिथ्यावादेन ये दासीकृतास्तत्सन्ततिः स्विकाम् ।

सन्ततिं नाशयत्येव गरुत्मानिव पन्नगान् ॥ ६३ ॥
पदं महत्प्राप्तुमिच्छुर्नीचो नीचतरं व्रजेत् ।
अमृतप्रेप्सवो याता भुजङ्गास्तार्क्ष्यभक्ष्यताम् ॥ ६४ ॥
विप्रस्यावज्ञया शक्रो मातुः सर्पा विपद्गताः ।
सुपर्णस्त्वभयः प्रीत्या हरेरप्युपरिस्थितः ॥ ६५ ॥
मृषाभिसन्धिनी माता त्याज्या पूज्यतमापि चेत् ।
शरण्यो हरिरेवात्र शेषनागनिदर्शनात् ॥ ६६ ॥
घोरायामापदि प्राप्तौ शरणं ब्राह्मणो भवेत् ।
नचेद्धि वैभवं वान्यदित्यास्तीकसमाश्रमे ॥ ६७ ॥
पुत्रानपि शपन्तीनां दौष्ट्यमालक्ष्य योषिताम् ।
कथं तत्सङ्गिनां सौख्यमिति चिन्ता विधेरपि ॥ ६८ ॥
पापिष्ठान्हन्ति मातापि किमुतान्ये भुजङ्गमान् ।
मातृशासानपि ब्रह्मा प्रार्थितोऽप्यन्वमोदत ॥ ६९ ॥
अनुभूतमिहाकूतं मृगया पदमापदम् ।
विष्णुरात्तोऽपि यद्रागाद् ययौ तक्षकभक्ष्यताम् ॥ ७० ॥
तत्त्वामृतं शास्त्रसिन्धोःसमं लब्धं सुरासुरैः ।
आस्वादितं विष्णुभक्तैः सुरैर्नान्यैः श्रिया जितैः ॥ ७१ ॥
देवपङ्क्त्यां सुरां लेभे दैत्यो देहच्छिदा समम् ।
सूचितः स्वान्तचक्षुर्भ्यां काश्यामिव महेश्वरात् ॥ ७२ ॥

अमृतमथनगुह्यं यत्नतः प्राप्य दैवै-
रमृतमसुरसङ्घः स्त्रीमनस्को न लेभे ।
अपि फणिमखगोप्यं साध्वसाध्वोरपीतं
भयमयमवश्यं विप्रहेलाश्रयाणाम् ॥ ७३ ॥
रहस्यं सौपर्णे कुमतिसुमती कद्रुविनते-
भुजङ्गाः कामाद्याः सुकृतमरुणस्तापशमनः ।
सुपर्णः प्रत्यग्धीः कृतकममृतं नेच्छति फणी-
तदिच्छंश्लाघ्यस्तो ह्य जनि हरिशक्रौ परतरौ ॥ ७४ ॥

लोकान्मन्त्रान् महेन्द्राच्च ब्राह्मणे वीर्यमद्भुतम् ।
तक्षको येन खेतस्थावित्यास्तीकेऽनुवर्णितम् ॥ ७५ ॥
श्रिया माद्यन्ति सन्तोपि व्यासोद्भूतावितीरितम् ।
देवासुरानरेष्वेव सन्तीत्यंशावतारणे ॥ ७६ ॥

अत्यल्पस्यापि पापस्य विपाकमतिदारुणम् ।
अन्वभूतां चिरं ब्रह्मन्नणी मण्डव्यडुण्डुभौ ॥ ७७ ॥
शिष्टानां चेतसस्तुष्टिर्धर्मे प्रामाण्यमश्नुते ।
शाकुन्तलामीहमानं दुष्यन्तस्य मनो यथा ॥ ७८ ॥
पितुर्दुःखं हरन्पुत्रः श्रेयो लक्ष्मीं च विन्दति ।
भीष्मवत्पूरुवन्मानात् पतन्ति च ययातिवत् ॥ ७९ ॥
विद्यातपोऽभिमानेन पतितो यस्त्रिविष्टपात् ।
सतस्तस्य गतिर्लोके ययातेरिव दृश्यताम् ॥ ८० ॥
तत्त्वज्ञानं विना नास्ति संसृतेर्वारणं नृणाम् ।
तत्संपाद्यमिति प्राहोत्तरया यातनिर्णये ॥ ८१ ॥
भाव उत्तरया याते संक्षेपेण प्रदर्श्यते ।
स्वोत्कर्षख्यापनादन्यपराभूतेः फलं कटु ॥ ८२ ॥
विदुषा नावमन्तव्यास्तिर्यञ्चोऽपि गिरापि हि ।
किमुत्कृष्टाः समाना वा ययातेः स्मरतां गतिम् ॥ ८३ ॥
पापमूलतया गर्वं न कुर्वन्ति विपश्चितः ।
तपोविद्यामहत्त्वेऽपि सन्तः सद्भिः समागमे ॥ ८४ ॥
दैवाधीनं सुखंदुःखं बुध्वा धीरो न शोचति ।
अनित्यत्वं मृषात्वं च संपदां विपदामपि ॥ ८५ ॥
स्वर्गं प्राप्याथ ब्राह्मं वा पतन्त्योकः सुभक्षयात् ।
न स्वपुण्यं विना कश्चित् त्रायते पतनान्नृणाम् ॥ ८६ ॥
प्राज्ञः स्वर्गं न काङ्क्षेत नेमं लोकं विनश्वरम् ।
तापत्रयविपर्यस्तं कामकर्मादिनिर्मितम् ॥ ८७ ॥
स्थूले नष्टेऽपि नो नश्येत्सूक्ष्ममामोक्षमावृतम् ।
कामकर्मादिभिस्तस्मात्तत्त्वबोध इहेष्यते ॥ ८८ ॥
उषित्वा स्वर्ग आपातं सुकृतस्य क्षये ततः ।
भौमं नरकमाविश्य गर्भभूता भन्त्यमी ॥ ८९ ॥
यथास्थूलात्पृथग्जीवो देहात्सुक्ष्मात्तथापृथक् ।
तदध्यासाद्भ्रमत्यत्र देहाद्देहान्तरं व्रजन् ॥ ९० ॥
रसं रेतो घनीभावं पिण्डं सर्वाङ्गसंयुतम् ।
याति स्वर्गात्पतन्मूढो बालवृद्धादिभावनाम् ॥ ९१ ॥
सज्जते विषयेष्वेव पुनः कामादिदोषतः ।

न विचारयति स्वात्मतत्त्वं मोक्षपराङ्मुखः ॥ ९२ ॥
देहं त्यक्त्वा शुभं पापं गृहीत्वा क्षयमेत्यसौ ।
स्वर्गं वा नरकं मिश्रान्मानुष्यं माययावृतः ॥ ९३ ॥
ततो दानादिद्वाराणि स्वर्गस्य न तु मानिनः ।
मानेनाध्ययनं यज्ञो मौनं नश्यन्त्वमी नृणाम् ॥ ९४ ॥
अहङ्कर्तेति बुद्ध्या ये कुर्वन्ति तप आदिकम् ।
तत्फलं भयमित्याहुः स्वर्गादिकमपि क्षरम् ॥ ९५ ॥
निरहङ्कारिणां श्रेयः साधनानि फलन्त्यपि ।
यज्ञादीनि शमादीनि सर्वाण्यपि सुमेधसः ॥ ९६ ॥
ब्रह्मचारी गृही भिक्षुर्वनस्थश्च स्वकर्मतः ।
अगर्वेण प्रकुर्वाणाः सिद्धिमायान्ति नान्यथा ॥ ९७ ॥
वैराग्यपूर्वकं योगं ज्ञानमभ्यसतो वने ।
गृहे वा कृष्णभक्तस्य पुंसः सिद्धिरविघ्नतः ॥ ९८ ॥
संतोषात्कामसंत्यागात्कृष्णभक्तेर्मनः स्थितेः ।
तत्त्वैक्यवीक्षणात्पुंसः स्वयं मुक्तिरुपस्थिता ॥ ९९ ॥
ज्ञानिनः श्रुतियुक्तिभ्यां जगन्मिथ्यात्वनिश्चयात् ।
साक्षात्कारेण तत्त्वस्य सद्यो मुक्तिरुदीरिता ॥ १०० ॥
योगिनस्तदभावे तु निर्विकल्पसमाधितः ।
द्वैतविस्मरणेनापि विलम्बाद्भक्तिरिष्यते ॥ १०१ ॥
आर्जवेन परब्रह्म ज्ञात्वा ज्ञानी विमुच्यते ।
जिह्मेन तु श्रमेणापि न योगी मुच्यते भयात् ॥ २ ॥
सर्वभूतानुकूलो यो न कञ्चिदवमन्यते ।
साधूननुसरञ्छीलयुक्त्या आनन्त्यमश्नुते ॥ ३ ॥
भगवद्भक्तिसिद्ध्यै यत्कर्म कृष्णार्पणं कृतम् ।
तस्यानन्त्यफलं मोक्षसुखं शिवविदस्तु ते ॥ ४ ॥
सत्यं श्रेयस्करं शान्तिरमानित्वमदम्भिता ।
श्रद्धा भक्तिरिहामुत्र सर्वेऽमी सुखदा नृणाम् ॥ ५ ॥
इत्येवोत्तरया याले तात्पर्यं मुनिसद्गिराम् ।
यथामति मयादर्शि प्रीयतां तेन माधवः ॥ ६ ॥
ब्रह्मलोकगतानां चेत्पातं योषिदीक्षणात् ।
अत्रत्यानां कथा केति महाभिष निदर्शनात् ॥ ७ ॥

परार्थेप्सा महातीर्थदायिनी स्यात्सतामपि ।
वसवो योनिमापन्ना मुनिधेनुपरीप्सया ॥ ८ ॥
सन्तःशान्ता महान्तोऽपि लोभिनामतिदुःखदा ।
क्षमासारो वसिष्ठोऽपि शशाप वसुदेवताः ॥ ९ ॥
सतां न दुष्करं किञ्चिद्ब्रह्म तत्त्वविदामहो ।
ब्रह्मचर्यप्रतिज्ञाय भीष्मो भीष्मामचीकरत् ॥ १० ॥
अनियोगे न युञ्जीत सङ्गं स्वाथार्य धर्मवित् ॥
अन्यथा स्वार्थहानिः स्यात्सत्यवत्याः पितुर्यथा ॥ ११ ॥
न सतां प्रतिबन्धेन योगामिच्छेद्विचक्षणः ।
इच्छतोऽपत्यहानिः स्यात् सत्यवत्याः पितुर्यथा ॥ १२ ॥
अत्यन्तकामसक्तस्य मृत्युरभ्येत्यकालतः ।
विचित्रवीर्यदृष्टान्तात्तन्न कार्यं विपश्चिता ॥ १३ ॥
गुरुशास्त्रानुमत्यापि न त्यजेत्स्वां प्रतिश्रुतिम् ।
राज्योद्वाहार्थमाज्ञप्ते मात्रा भीष्मो न चाचलत् ॥ १४ ॥
अत्युग्रपुण्यपापानामिहैव फलमश्नुते ।
पाण्डुर्हत्वा मृगं भार्यासक्तं तद्वत्स्वयं मृतः ॥ १५ ॥
अचिन्त्यं महतां जन्म भगवद्भावितात्मनाम् ।
कुन्त्यां माद्र्यां यथा पञ्चपाण्डवानां वपुर्जनिः ॥ १६ ॥
क्षेत्रबीजं विना द्रोणधृष्टद्युम्नवपुर्जनिः ।
कर्मणा केवलेनेति प्रोक्तं संभवपर्वणि ॥ १७ ॥
विषवार्यग्निभिर्लुब्धा घातयान्ते स्म बान्धवान् ।
ईश्वरस्तानवत्येवेत्युक्तं जातुषपर्वणि ॥ १८॥
यस्मिन् गेहे पुरे वापि वसेत्पुण्यतमो जनः ।
उपकुर्यात्तमप्येव मुक्तं बकबधेऽपि च ॥ १९ ॥
ब्राह्मणानुग्रहादेव क्षत्रं जयति नान्यथा ।
इति तापत्यदृष्टान्तात्प्राह चैत्ररथे मुनिः ॥ २० ॥
सूर्यस्य कन्यां तपन्तीं नष्टं सज्यं च लब्धवान् ।
वशिष्ठस्य प्रसादेन राजा संवरणो यथा ॥ २१ ॥
वसिष्ठस्य शतं पुत्रान्नाशयामास कौशिकः ।
नैनं ववाधिरे ब्रह्महत्यास्तास्तपसोबलात् ॥ २२ ॥
प्राज्ञः खलादितो देहं तितिक्षति न तु क्षमाम् ।

एतद्वैवाहिके व्यासो नानाख्यानोपबृंहणैः ।
दर्शयामास लोकानां संशयस्यापनुत्तये ॥ ३९ ॥
प्रणमन्ति जिघांसतोऽप्यनुकूले विधातरि ।
पाण्डुपुत्रान् धार्तराष्ट्रा इत्युक्तं विदुरागमे ॥ ४० ॥
यान्बलाद्दग्धुमिच्छन्ति तान्वर्धयति केशवः ।
निरस्ताः पाण्डवा दारान् कीर्त्तिं राज्यं च लेभिरे ॥ ४१ ॥
एकात्मानोऽपि भिद्यन्ते स्त्रीभिः सुन्दोपसुन्दवत् ।
तस्मात्सख्युरपि स्त्रीभिर्न सम्भाषेत बुद्धिमान् ॥ ४२ ॥
विप्रार्थान् पालयेज्ज्ञात्वाप्यापदं द्वादशाब्दिकीम् ।
इति दर्शितवान् व्यास आर्जुन्या तीर्थयात्रया ॥ ४३ ॥
न ज्ञातीनां वचः प्रेक्ष्यं वरे श्रेयस्युपागते ।
इतीव कृष्णो विजयं स्वस्वसारमहारयत् ॥ ४४ ॥
मातुलस्य सुतां पार्थो धर्मतो भगिनीं सतीम् ।
कथं जहार धर्मात्मा प्रीतिश्चेत्तच्छृणुष्व मे ॥ ४५ ॥
भ्रातृस्वस्रोः सुतौ भ्रातृस्वसारौ यदि सम्मतौ ।
सप्तमादूर्ध्वमप्येष सम्बन्धश्छिद्यतां कथम् ॥ ४६ ॥
तस्मात्तयोः स्वसृभ्रातृभावो भाक्तो विगोत्रयोः ।
दाम्पत्यभावस्तु तयोर्मन्त्रलिङ्गात्परिस्फुटः ॥ ४७ ॥
आयाहीन्द्र पथिभि रीलिर्यज्ञमिमन्नो भागधेयं जुषस्व ।
तृप्ताञ्जकुर्मातुलस्येव योषाभागस्ते पैतृष्वसेयी वपामिवेति श्रुतिः ॥४८॥

अस्यार्थः—

योषापत्यं मातुलीयं यथा भागः पितृष्वसुः ।
पुत्रस्यैव वपान्तेऽशञ्जुषस्वेन्द्रेत्यृषिर्जगौ ॥ ४९ ॥
मानघ्नस्यापि जामातुर्मानं सम्वर्द्धयेद् बुधः ।
स्वसुर्हर्त्रेऽर्जुनायापि ददुर्वित्तानि वृष्णयः ॥ ५० ॥
देवोऽपि जैह्मदुःखार्त्तो मातुलादेस्तु का कथा ।
शरणं करणीयोऽतः सर्वदुःखापहो हरिः ॥ ५१ ॥
अग्निमप्यग्निमान्द्यार्त्तं नरनारायणावृषी ।
षण्डवौषधदानेन नीरोगं चक्रतुर्यथा ॥ ५२ ॥
पित्र्याहृणादमुक्तस्य सकलं सुकृतं वृथा ।
वियोनावप्यतः पुत्रान् जनयेन्मन्दपालवत् ॥ ५३ ॥

शांजाऽकान्स्वतपोरक्षन्नागं मानार्जुनोपमम् ।
भवाग्निं तर्तुकामोऽतः श्रीकृष्णं शरणं व्रजेत् ॥ ५४ ॥
इत्यादि पर्वतात्पर्यं संक्षेपेणोपवर्णितम् ।
धर्मवैराग्यसद्भक्तिज्ञानसाधनबोधकम् ॥ ५५ ॥
तत्राप्यनुक्रमस्त्वेवमुपाख्यानार्थनिर्णये ।
उपायोपेयनिष्ठत्वं यतः शास्त्रस्य सम्मतम् ॥ ५६ ॥
पूर्वपुण्योदयात्कश्चिदादौ धर्मेऽधिकारभाक् ।
श्रद्दधानो भवेच्छास्त्रे भगवत्करुणेक्षितः ॥ ५७ ॥
तापत्रयमहाज्वालासन्तप्तमभितो जनम् ।
वीक्ष्य स्वात्मसमुद्धारे यतते शास्त्रतत्परः ॥ ५८ ॥
तदुद्धारप्रकारं तु वेत्ति सत्सम्प्रदायतः ।
पौर्वापर्येण सच्छास्त्रं विचार्यैवं सुधीः स्वयम् ॥ ५९ ॥
श्रीवासुदेव एवास्ति सर्ववेदार्थगोचरः ।
तदर्चनाच्च तद्ध्यानात्कीर्तनाच्छ्रेय इष्यते ॥ ६० ॥
तदर्चनादिविज्ञानं गुरुभक्त्यैव जायते ।
सापि शास्त्रैकनिष्ठस्य भोगवैराग्यतो भवेत् ॥ ६१ ॥
यात्रामात्रार्थभोगोऽपि स्वधर्मार्जितवित्ततः ।
व्यसनस्य परित्यागाद् द्यूतस्त्रीमृगयादितः ॥ ६२ ॥
मृषाभिसन्धिसन्त्यागात् कामक्रोधविवर्जनात् ।
पापभीतेरसंसर्गात्खलस्याद्यरतस्य च ॥ ६३ ॥

**अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।**
**विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ॥ ८ ॥**
**भारताध्ययनं पुण्यमपि पादमधीयतः ।**
**श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ ९ ॥**
**भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।**
**स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥ १० ॥**

धर्मतो गुरुसन्तोषान्मानत्यागाददम्भतः ।
परार्थेप्सापरित्यागात्प्रतिज्ञापरिपालनात् ॥ ६४ ॥
आनृशंस्यादहिंसातः परोपकृतितोऽपि च ।

तपसो ब्रह्मचर्याश्च क्षान्तेर्भगवदीक्षणात् ॥ ६५ ॥
विप्रभक्त्या पितृभक्त्या धर्मवैराग्य सिद्धयः ।
जायन्ते भगवत्प्रेमभक्तिसिद्धिस्ततो भवेत् ॥ ६६ ॥
भगवद्भक्तियुक्तस्य पुंसः सर्वगुणक्षितेः ।
न किञ्चिदिह लोके वा परत्र परिशिष्यते ॥ ६७ ॥
एवमादिगुणास्तेऽत्र तत्र व्यासेन भारते ।
आदिपर्वण्युपाख्यानैर्दर्शिता गूढभावतः ॥ ६८ ॥
तत्तात्पर्यं मयादर्शि भगवद्भक्तिसिद्धये ।
आदिपर्वणि संक्षेपात्प्रीयतां तेन केशवः ॥ ६९ ॥
एवं प्रदर्श्य तात्पर्यं संक्षेपेणादिपर्वणि ।
सारोद्धारं विविच्यैव लिख्यते कृष्णतत्परम् ॥ ७० ॥
शुद्धमायाविरूपात्मविराडाकृतितो हरिः ।
भारते सर्ववेदान्तसिद्धान्तत्वेन कीर्त्यते ॥ ७१ ॥
अर्चनोपासनज्ञानसिद्ध्यै भगवतो हरेः ।
भारते सकलाख्यानदर्शनं मुनिना कृतम् ॥ ७२ ॥
एवं विचार्य तत्सारं श्रीकृष्णं शरणं व्रजेत् ।
तेनैव संसृतेः पुंसो निस्तारो भवति ध्रुवम् ॥ १७३ ॥

अत्र संसारानर्थनिवर्त्तने शोकार्त्तानां स्वास्थ्यकरणे विषये उपनिषदं उपनीय समात्मानं ब्रह्माध्यस्तद्वयं यतः निहत्य विद्यां तज्जं च तस्मादुपनिषद्भवेदिति यथोक्तविद्याहेतुत्वाद्ग्रन्थोऽप्युपनिषद्भवेदिति च वचनात् । पुरुषोत्तमशब्दाभिधेयब्रह्मात्मैकत्वविद्याप्रतिपादकं ग्रन्थं पूर्वोक्तस्य सूत्रस्य वार्त्तिकस्थानीयं विवरणं उपनिषच्छब्दवाच्यमब्रवीत् । यद्यप्यत्र पुरुषार्थचतुष्टयप्रतिपादनं दृश्यते तथाऽप्यर्थकामयोर्लोकप्रसिद्धयोरेव स्वरूपव्याक्रियैव पराक्रियेति न्यायेन हानार्थमनुवादम् । धर्मस्य च विविदिषन्ति यज्ञेनेत्यादि श्रुत्या भगवत्पुरुषोत्तमतत्त्वसाक्षात्काररूपविद्याशेषत्वस्याभ्युपगमात्परमतात्पर्यं भगवत्तत्त्वज्ञाने एवेति ध्येयम् । अस्याः साम्प्रदायिकत्वमाह विद्वद्भिरिति । कथ्यते अनादिसिद्धमेव कीर्त्यते । ननु कादम्बर्यादिवदभिनवकथा कल्प्यते । कविसत्तमैः पूर्वकल्पीयैर्व्यासादिभिः । एवं च व्यासादिशब्दानां सेनापत्यादिशब्दवदाधिकारिकवचनत्वेन व्यक्त्यनित्यत्वेऽपि तदर्थानां नित्यत्वान्न पुराणानां सकर्तृकत्वमात्रादनित्यत्वमिति भावः । अतः पुराणे पुरापि नित्यत्वमेव ॥ ८ ॥

भारतेति अस्य श्लोकस्य चतुर्थांशस्योच्चारणमात्रादपि सर्वकिल्बिषनाशः । किं वाच्यं कृत्स्नाध्ययनात्तदर्थस्य साक्षात्काराद्वेति भावः ॥ ९ ॥

एवं ग्रन्थस्य भगवत्तत्त्वसाक्षात्कारेण स्वास्थ्यं मुख्यं फलं पापक्षयं गुणफलं चोक्त्वात्र सकलवेदार्थसंग्रहे भारते प्रतिपाद्यं विषयमाह भगवानिति। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तरूपषड्गुणैश्वर्यवान् परमात्मा वासुदेवः वसुदेवनन्दनः स सर्वानुस्यूतस्य प्रकाशचिदानन्दपरिपूर्णपरब्रह्मात्मामितेन विग्रहणानि मानुषाणि वन्हिपानादीनि कर्माणि कृतवानिति तदुपादानम् । तथा हि ब्रह्माणं प्रति भगवद्वाक्यम् ।

विधेऽहं सर्वोस्मि व्रजपृथुकगोवत्सवदहम् ।
बिभर्मि ब्रह्माण्डं गिरिवदहमास्मि ज्वलनवत् ॥
सृजामि द्रौपद्या वसनवदहं प्राणभृदहम् ।
यदत्ताहं तृप्तो मुनिरिति मदन्यन्न किमपीति ॥

भगवान् वासुदेवोऽत्र कीर्त्यते इति मुख्यो विषयो भारतस्य कृष्ण एवेति तद्गुणकथनपरोऽयं सकलोऽपिभारताख्यो ग्रन्थ इति दर्शितम् ।

देवा देवर्षयोह्यत्र तथा ब्रह्मर्षयोऽमलाः ।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षमहोरगाः ॥

इति तु तत्स्वातन्त्र्येण विषयत्वकीर्त्तनं किं तु भगवतो वासुदेवस्य विभूतिकत्वेनैव तेषां कीर्त्तनं तेनाश्विनीकुमारेन्द्राग्निसूर्यगरुडादिस्तुतयो भगवति वासुदेव एव पर्यवस्यन्ति तद्विभूतित्वात्तद्गुणाभिधानं सङ्गच्छते तस्माद्विषयो भगवान् वासुदेव एवात्राभिधीयते तस्य वास्तवं रूपमाह सनातन इति आकाशादिवत्प्रवाहनित्यतया वा मायाया आद्यन्तशून्यत्वाद् वा तन्मयस्य भगवच्छरीरस्य नित्यत्वापरपर्यायं सनातनत्वं युज्यत इत्यर्थः । यद्वा सनातनो भगवानेव वासुदेवरूपेणाविर्भूतोऽत्र कीर्त्यते तेन सर्वाण्यपि विशेषणानि तत्रैव सामानाधिकरण्येन समन्वितानीति दर्शितम् । स वासुदेवो हि प्रसिद्धं सत्यमनुष्ठीयमानं कर्म ऋतं तदेव वेदाज्ज्ञायमानं पवित्रं पापनाशकं पुण्यम् । अभ्युदयहेतुः सर्वकर्मफलभूतं ब्रह्माण्डं स एवेति भावः ॥ १० ॥

**शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।**

**यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥११॥**
**असच्च सदसच्चैव यस्माद्विश्वं प्रवर्त्तते ।**
**सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥ १२ ॥**

अस्यैव निर्विशेषत्वमाह शाश्वतमिति । शश्वत् निरन्तरं भवं शाश्वतं तेन वस्तुतो देशतश्चापरिच्छिन्नम् । अत एव ब्रह्म बृहत् परमं कार्यकारणातीतं ध्रुवं कूटस्थं ज्योतिः स्वप्रकाशस्य भावस्सनातनं कालतोऽपरिच्छिन्नं यस्येदृशस्यापि भगवतो वेदमव्याशक्त्या विग्रहवतो दिव्यान्यत्यन्तमलौकिकानि ईश्वरैकधारणानि गोकुले वृन्दावने मथुरायां द्वारवत्यां हस्तिनापुरे कुरुक्षेत्रादौ नाना लीलास्पदानि शरण्यकारुण्यसौन्दर्यमाधुर्यमार्दव सौष्ठवादि गर्भितानि कर्माणि चरितानि मनीषिणः तत्प्रसादलब्धदिव्यज्ञाना मुनयः सनत्कुमारनारदादयः कथयन्ति ब्रह्मसभादिषु लोकेऽपि सत्सभासु वर्णयन्तीत्यर्थः ॥ ११ ॥

तस्यैव सर्वकारणत्वमप्याहासदिति यस्मादीदृशादपि वासुदेवाद्भगवतः । असत् अनिर्वाच्यं सदसच्च कार्यं कारणं च तदुभयात्मकं विश्वं जातं सन्ततिः ब्रह्मादिः प्रवृत्तिर्यज्ञादिः ॥ १२ ॥

**अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम् ।**
**अव्यक्तादि परं यच्च स एव परिगीयते ॥ १३ ॥**
**यत्तद्यतिवरा मुक्ता ध्यानयोगबलान्विताः ।**
**प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥१४॥**

तस्यैव सर्ववेदान्तप्रतिपाद्यत्वमाह । अध्यात्ममिति आत्मनीत्यध्यात्मं देहे यत्पञ्चभूतकार्यरूपा गुणाः श्रोत्रादयस्तदात्मकं सप्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यं श्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मन इत्यादि श्रुतौ यच्छ्रुयते जीवरूपमिति पदार्थमनूद्य तत्पदार्थमाह । अव्यक्तादीति अव्यक्तस्यादिभूतं यत्परं निर्विशेषं च तयोरभेदमाह स एवेति । परिगीयते वेदे अयमा ब्रह्माहं ब्रह्मास्मीत्यादौ । नन्वन्तः प्रविष्टः शास्ता जनानामिति शास्तृशास्यभावेन श्रुतयोरीशजीवयोः राजभृत्यवद् औपचारिकः ननु तात्त्विक इति चेन्न अन्तः प्रविष्ट इति श्रुतेः किं जीवोऽणुर्विभुर्वा नाद्यः अणूदरे शास्तुः प्रवेशायोगात् प्रवेशे च सान्तरालस्याणुत्वायोगात् मध्यमस्य च सावयव.

त्वेन घटादिवदनित्यत्वाऽवश्यम्भावात् विभुत्वे विभ्वोश्च तयोः कालाकाशादेरिव तुल्यत्वेन मिथः शास्यशास्तृत्वायोगात् तस्मादुपादानोपादेयभावेन चाधिष्ठाताध्यस्तभावेन वा ईशजीवयोः प्रवेष्टृप्रवेश्यभावेन शास्तृशास्यभावः तेनेशस्यान्तः प्रविष्टत्वं सङ्गच्छते तथा च तयोरभेदोऽपि तात्विक एव एतेन कृष्णाद्वैतमेव भारतप्रमेयमिति दर्शितम् ॥ १३ ॥

अत्र विद्वदनुभवं प्रमाणयति यदिति । आत्मनि हार्दाकाशे पश्यन्ति प्रत्यगभेदेन प्रतिविम्बमिव आदर्शे इत्यसन्दिग्धत्वे दृष्टान्तः ननु दृश्यते अन्यथा दृश्यस्य जडत्वापत्त्या वाङ्मनसातीतत्वश्रुतिव्याकोप एव तेन कृष्ण एव परं तत्त्वं मुक्तजनप्राप्यं सर्ववेदान्तवेद्यं नातः परं किमपि सगुणं निर्गुणं वा तत्त्वमस्तीति दर्शितम् ॥ १४ ॥

**अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।**
**वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥ १५ ॥**

सकलनिगमवेद्यं कृष्णतत्त्वं विशुद्धम्
प्रकृतिविकृतिभिन्नं शान्तचित्तैकगम्यम् ।
निरवधिसुखरूपं भारतोपक्रमे ऽसौ
मुनिवरदिहान्ते वक्ष्यतीदं पुनस्तत् ॥ १ ॥

ऋतं सत्यं पुण्यं जनिमृतिभयत्राणमुदितम्
ध्रुवं ज्योतिर्ब्रह्माद्वयममलमध्यात्ममिति यत् ।
तदेवाव्यक्तादः परमपि जनानाम्परमुदे
यदूनां वीरो धाता प्रकटितवपुर्नन्दतनयः ॥ २ ॥

जगत्सूक्ष्मं स्थूलं प्रभवति ततो गच्छति लयम्
यतो ब्रह्मादीनां व्रजति बहुतां सन्ततिरियम् ।
प्रवृत्तिर्यज्ञादेर्यत इह जनानां निजधियाम्
मुदे प्रादुर्भूतो व्रजभुवि स कृष्णोऽद्भुतवपुः ॥ ३ ॥

यस्योदारधियः पवित्रचरितान्यद्यापि शेषादयो
गायन्तो न च पारयन्ति परया भक्त्या मुदा तत्पराः ।
मुक्ता योगबलान्विता यतिवरा ध्यायन्ति यं योगिनः
सोऽयं सर्वमयो व्रजेशतनयः सङ्कीर्त्यते भारते ॥ ४ ॥

अभ्यासाख्येन लिङ्गेन भारते हरिरीश्वरः ।
सम्भवं पर्वणादीनां तात्पर्यार्थो निरूप्यते ॥ ५ ॥

अश्वावतरणे सर्वविभूतीनां स्वयं हरिः ।
प्रादुर्बभूव लोकानां हितैषीत्याह सन्मुनिः ॥ ६ ॥
विष्णुर्व्यापनशीलो यः पुरुषोत्तमसंज्ञितः ।
लोकैर्ब्रह्मादिभिः सर्वैर्नित्यमेव नमस्कृतः ॥ ७ ॥
लोकानां सर्वभूतानां नभःस्थलजलौकसाम् ।
यथा योग्यतयाभीष्टप्रदानार्थं महायशाः ॥ ८ ॥
तत्राग्रयशसो भूमिर्मङ्गलानां परोऽवधिः ।
विशुद्धसत्त्वमय्यां श्रीदेवक्यां वसुदेवतः ॥ ९ ॥
शुद्धसत्वात्स्वयं प्रादुरभूदानन्दसागरः ।
अनन्तकल्याणगुणः क्षराक्षरविलक्षणैः ॥ १० ॥
आविर्भूतस्य देवस्य स्वरूपं सद्विशेषणैः ।
निरूप्यते यथा सद्भिर्ज्ञेयो ध्येयोऽर्च्य आदरात् ॥ ११ ॥ १५ ॥

**अनादिनिधनो देवः स कर्ता जगतः प्रभुः ।**
**अव्यक्तमक्षरं ब्रह्म प्रधानं त्रिगुणात्मकम् ॥ १६ ॥**

अनादिनिधन इति । स्थूलदेहधर्मयोर्जन्ममरणयोर्व्यावृत्तिः देवः दीव्यमानः जगत्कर्ता किं तेजसः न प्रभुः जीवस्य स्वप्नेऽपि जगत्कर्तृत्वाभावात् । अन्यथा स्वप्ने प्रतिकूलसुषुप्त्यनुपपत्तिः । एतेन कर्मद्वाराऽपि जगत्कर्तृत्वं जीवस्य लाङ्गलं गवादीनुद्वहतीतिवन्निमित्तत्वमात्रेण नत्वीश्वरत्वेनेति दर्शितम् । अव्यक्तम् अव्याकृतं किं सुषुप्तं कारणं यथोक्तं सुषुप्त्याख्यं समोज्ञानं यद् बीजं स्वप्नबोधयोरिति तद्व्यावर्तयति अक्षरमिति न क्षरत्यपरिणामित्वात् तत् तु क्षयोद्भवम् एतेन व्यष्टिस्थूलसूक्ष्मकारणदेहव्यावर्त्तने तत्त्वं पदार्थशोध उक्तः अन्यथा भगवति जन्माद्यप्रसक्तेस्तद्वारकमनादिनिधनेति विशेषणमनुपपन्नम् । तत्पदार्थमाह ब्रह्मेति बृहत्प्रधानं प्रधीयतेऽस्मिन् सर्वमिति लयस्थानं त्रिगुणात्मकं सत्त्वरजस्तमोमयम् । अस्य सांख्याभिमतम् । अनात्मत्वं परिणामित्वं वारयन्नुक्तैर्विशेषणैः सामानाधिकरण्येन सर्वाधिष्ठानत्वं दर्शयति ॥ १६ ॥

**आत्मानमव्ययं चैव प्रकृतिं प्रभवं प्रभुम् ।**
**पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरम् ॥ १७ ॥**

तदेव आत्मानम् । अव्ययमिति विशेषणाभ्यां पुनर्दृढयति प्रधानत्वादेव प्रकृतिम् उपादानं प्रभवम् उत्पत्तिनिमित्तं प्रभुम् । अधिष्ठातारम् । ननु घटा-

देर्मृदुपादानं चैत्रो निमित्तं कुलालः कर्त्ता अत्र तु त्रयमपि देव एवेत्युक्तं तत्कथमित्याशङ्क्य तत्सद्वा तदेवानुप्राविशदिति श्रुत्यर्थमाह पुरुषं पूर्षु वसतीति पुरुषः पुरश्च ज्ञानेन्द्रियाणि खलु पञ्च तथापराणि कर्मेन्द्रियाणि मन आदि चतुष्टयं च प्राणादिपञ्चकमथो विपदादिपञ्च कामं च कर्म च तमः पुनरष्टमी पूरित्युक्ताः। आत्मानमेव स्वमायया पुर्यष्टकाकारं कृत्वा तत्र प्रविष्ट इत्यर्थः। एवं ऐश्वरी प्रवेशान्तां सृष्टिमुक्त्वा जाग्रदादिविमोक्षान्तां सृष्टिं तदनुप्रविश्य सच्च यत्राभवदित्यादिश्रुत्युक्तां संगृह्णाति विश्वकर्माणमिति विश्वं पृथिव्यप्तेजोरूपं सच्छब्दवाच्यं वाय्वाकाशादिरूपं त्यच्छब्दवाच्यं चेत्येवमादिरूपं कर्मघटादिवत् क्रियाफलभूतं यस्येति विश्वकर्मा तम्। एवं विशेषणैरेव ब्रह्मण एव जीवभावं प्रदर्श्य तन्निवृत्त्युपायमपि तैरेव प्रत्याययति सत्त्वयोगं सत्त्वेनैव धर्मज्ञानवैराग्यमूलेन योगः प्राप्तिरस्य तम् सत्त्ववतः। ब्रह्मभाव प्राप्तावालम्बनमाह ध्रुवाक्षरं प्रणवाख्यवर्णस्वरूपं वाच्यवाचकयोर भेदात्। प्रणवमात्राभिरकारोकारमकारार्धमात्राभिरुपासिताभिस्तदर्थभूता विराट् सूत्रान्तर्यामितुरीयाख्या· प्राप्यन्ते इति भावः॥ १७॥

**अनन्तमचलं देवं हंसं नारायणं प्रभुम्।**
**धातारमजमव्यक्तं यमाहुः परमव्ययम्॥ १८॥**

एतेषु कतमो मुख्यः प्राप्य इत्यत आह अनन्तमिति देशादिपरिच्छेदशून्यं तुरीयमित्यर्थः ननु तत्तदवस्थायां सर्वेषामानन्त्यमविशिष्टमित्याशङ्क्याह अचलमिति अबाधितम्। इतरेषां बाधोऽस्तित्यापेक्षिकमनन्तत्वमिति भावः। नन्वेवं कारणत्वादिनिषेधे शून्यतैव स्यान्नेत्याह देवमिति द्योतमानं चिद्रूपमित्यर्थः। एवं तवङ्कुरबीजद्वारा तुरीयप्राप्तिमुक्त्वा तत्रैव द्वारान्तरमाह हंसमिति संन्यासाश्रमरूपं तत्र ह्यविक्षेपेण श्रवणादिकं सिद्ध्यतीति सोऽपि द्वारं नारायणं फलस्थानीयं महाविष्णुम्। एतद्विग्रहध्यान द्वारिवाहि विराडादिभावमारोहन्ति ध्यायिनः फलगर्भे बीजानीवास्य गर्भेऽनन्तानि कारणानि सन्तीत्येनं तुरीयविशेषणैरेव विशिनष्टि प्रभुमिति प्रभवत्यस्मात्कार्यमिति जगद्भ्रमाधिष्ठानं धातारं कार्ये सत्तास्फुर्त्योः समर्पकम् अजम् उरगोपादानभूतरज्जुवदजातम् अव्यक्तम् अप्रकटम् अधिष्ठानव्यक्तौ हि अध्यस्तमेव लुप्येतातो व्यक्तं परम् आदित्यवर्णं तमसः परस्तादित्यादयो मन्त्राः यं कारणात्परं प्राहुः अत एवाव्ययं नाशबाधाभ्यां हीनम्॥ १८॥

कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम् ।
पुरुषः स विभुः कर्ता सर्वभूतपितामहः ॥ १९ ॥
धर्मसंवर्धनार्थाय यः प्रजज्ञेऽन्धकवृष्णिषु ॥ २० ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषि
सदानन्दविदुषा कृते भारतसारोद्धारे आदि
पर्वसारोद्धारः समाप्तिमगमत् ।

केवलमेव कैवल्यम् असङ्गं निर्गुणं रूपादिभिश्चक्षुरादिभिश्च प्राकृत गुणैर्हीनम् । अत्र विग्रहवत्त्वात् प्रसक्तं परिच्छिन्नत्वं कारणवत्त्वं जन्ममरणे चेति चतुष्कं क्रमेण व्यावर्त्तयति विश्वमनादिमजमव्ययमिति सच्चिदानन्तानन्दत्वाद्विग्रहस्य मायिकपरिच्छेदादयोऽस्मिन् सम्भवतीत्यर्थः । य एवं रूपो नारायणः स एव किं विभुरित्याह पुरुष इति तस्यानन्तशक्तिमत्त्वाद्विभुत्वं सर्वकर्तृत्वं च प्रसिद्धमेव सर्वेषां ब्रह्मादीनामपि जगदीश्वराणां जनकत्वात् सर्वभूतपितामहः स एवंभूतो भगवान् धर्माभिवृद्ध्ये तद्द्वारा सत्तां परित्राणाय परममङ्गलमूर्तिरनन्तकल्याणगुणगणनिलयः श्यामसुन्दरो हरिर्निजविभूतिभूतदेवादतारेषु वृष्णिषु प्रादुर्बभूवेत्यर्थः तथा चायमेव श्रीमन्मुकुन्दः सर्वात्मना ज्ञेयो ध्येयः समर्च्य इति महाभारते प्रतिपाद्यते न ततोऽन्यद् एव प्रमेयान्तरं प्रतिपाद्यते अत्रोक्तविशेषणविशिष्टस्यैव भगवतः सर्वत्र प्रतिपादनमिति द्रष्टव्यम् ॥ २० ॥

---

## अथ सभापर्वप्रकाशः ॥

भगवन्तं नमस्कृत्य भगवद्भक्तिसिद्धये ।
सभापर्वण्युपाख्यानतात्पर्यमधुनोच्यते ॥ १ ॥
तत्रादिपर्वण्यन्ते स्वज्ञानतः पक्षिणोऽपि हि ।
मुक्ता वान्हिमुखादित्थमुक्तं ज्ञानं प्रशंसता ॥ २ ॥
कृष्णभक्तिबलादेव लभ्यते ज्ञानमात्मनः ।
इति वक्तुं सभापर्वसारमारभतेऽधुना ॥ ३ ॥
तत्र भक्तरुचेः सिद्ध्यै पाण्डवैश्वर्यशंसनम् ।
कृष्णभक्तिबलेनैव पाण्डवानां विभूतयः ॥ ४ ॥
द्वेषेणापि हरेर्ध्यानं हरिसाम्यावहं मतम् ।

शिशुपालवधेनोक्तं ध्यानमाहात्म्यमद्भुतम् ॥ ५ ॥
पाण्डवेषु विरागस्तु भक्तिहीनस्य दुर्मतेः ।
दुर्योधनस्य विद्वेषोत्पत्तेस्तद्दोषकीर्तनम् ॥ ६ ॥
द्रौपदीत्राणतो द्यूते भक्तपक्षैकरक्षणम् ।
मुख्यं कर्महरेरित्थं कृष्णभक्तिर्मयेरिता ॥ ७ ॥
अभक्तेष्वप्रकोपेन सापराधेषु सत्स्वपि ।
पाण्डवानां समर्थानां तितिक्षोक्ता सतां परा ॥ ८ ॥
भक्तानां सद्‌गुणाः प्रोक्ता अभक्तानां विनिन्दया ।
कर्तव्या भगवद्भक्तिरादरेणेति वर्णितम् ॥ ९ ॥
कार्यः प्रत्युपकारः प्रागुपकर्त्रेऽत्यवश्यकम् ।
नैव भाव्यं कृतघ्नेन मयासुरनिदर्शनात् ॥ १० ॥
किं किं नोपकृतं पुंसां हरिणात्र दयालुना ।
कथं न तं भजेत्प्राज्ञो भवपाशविमोचकम् ॥ ११ ॥
भजन्तं भजति स्वामी वन्द्यः सन् वन्दते सतः ।
दृष्टमेतच्छ्रुतं चैव पार्थाच्युतसमागमे ॥ १२ ॥
किं दुष्प्राप्यमिहामुत्र कृष्णभक्तिरतात्मनाम् ।
युधिष्ठिरेण लब्धात्र दुर्लभा या नृणां सभा ॥ १३ ॥
ईश्वरस्येव सम्पत्तिर्गुणानां भगवद्रतेः ।
श्लाघनीया मुनीनां स्यादिति नारदसंस्तवे ॥ १४ ॥
धर्मार्थादिपुमर्थोऽपि स्वयं कृष्णेक्षणात् सताम् ।
सिद्ध एवेति निर्णीतं कच्चित्प्रश्नविनिर्णये ॥ १५ ॥
संपल्लोकोत्तरा लब्धा गर्वहेतुः सतामपि ।
अत्यपूर्वसभालाभाद्धर्मसूनोर्यथास्मयः ॥ १६ ॥
तारतम्यं पदार्थानां सर्वत्रावीक्ष्य सज्जनः ।
न हृष्येन्नैव शोचेदित्युक्तं संसदां स्तुतौ ॥ १७ ॥
भूभारहरणार्थं श्रीब्रह्मणा प्रेरितो मुनिः ।
सर्वसंहारहेतुत्वाद्राजसूये प्रवर्तयेत् ॥ १८ ॥
धर्मसूनुं हरिश्चेन्द्रं महत्त्वं दर्शयंस्तथा ।
सभास्तुतिप्रसङ्गेन द्रष्टुमैच्छद्धरेः कृतिम् ॥ १९ ॥
बहूनां यो वधे वृत्तस्तं छलेनापि निर्दहेत् ।
जरासन्धवधेनैतद् दर्शितं मुनिनाऽमुना ॥ २० ॥

वित्तार्जनं मखायैवमीहितामिति दर्शयन् ।
ऊचे दिग्विजयादूर्ध्वं राजसूयक्रतुक्रियाम् ॥ २१ ॥
तत्रैवार्घो निर्हरणं विष्णुर्देवतरर्षिषु ।
आदौ पूज्योद्यतं द्वेष्टा सद्यो नश्येदितीरितम् ॥ २२ ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
तीव्रभावाद्धरेः साम्यं लेभिरे कीटभृङ्गवत् ॥ २३ ॥
न तथा शूलयक्ष्माद्याः पीडयन्ति गदासुरान् ।
यथा परेषामुत्कर्षः पापिनो धार्तराष्ट्रवत् ॥ २४ ॥
अतीवसङ्कटेनान्यः सहायः कृष्णमन्तरा ।
द्रौपदीं तारयामास ह्यनन्यशरणां हरिः ॥ २५ ॥
न बाह्यो नान्तरः शत्रुर्बाधते भगवज्जनम् ।
क्रोधदुःशासनौ कृष्णामापद्यापि न तेरतुः ॥ २६ ॥
ज्ञात्वापि परमाहात्म्यं न खलः खलतां त्यजेत् ।
दृष्ट्वापि कृष्णमाहात्म्यं नैवाशाम्यत्सुयोधनः ॥ २७ ॥
सत्यं सतां महान्पाशो येन बद्धाः पदात्पदम् ।
वञ्चिता अपि नो चेलुः समर्था अपि पाण्डवाः ॥ २८ ॥
धर्मस्य गहनं तत्त्वं सहसा न वदेद्बुधः ।
इत्यतो द्रोणभीष्माद्या नोचुः किञ्चन संसदि ॥ २९ ॥
नोपदेशो विना पात्रं साफल्यं याति सत्कृतः ।
बोधितो विदुरेणापि नात्यजद्दुर्मतिं नृपः ॥ ३० ॥
नास्त्यकार्यं कदर्याणां नास्त्यक्षाम्यं महात्मनाम् ।
नानुपेक्ष्यो हरेर्भक्त इति द्यूते प्रदर्शितम् ॥ ३१ ॥
अन्यायेनागतां लक्ष्मीं प्राप्य हृष्यन्ति दुर्जनाः ।
कर्णदुःशासनाद्यास्तां द्यूते सम्प्राप्य हर्षिताः ॥ ३२ ॥
वाच्यावाच्यं न जानीते दुर्जनः संपदं गतः ।
इति दुःशासनोक्तीनां मुनिर्भावमदर्शयत् ॥ ३३ ॥
इति संक्षेपतो भावाः सभापर्वणि दर्शिताः ।
पुनरस्याधुना सारोद्धारं कुर्वे हरीक्षितः ॥ ३४ ॥

**अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।**
**नारदस्तु तदा पश्यन् सर्वक्षत्रसमागमम् ॥ १ ॥**

सस्मार च पुरावृत्तां कथां तां पुरुषर्षभ ।
अंशावतरणे या सा ब्रह्मणो भवनेऽभवत् ॥ २ ॥
देवानां संगमे तत्तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ ३ ॥

एवमादि पर्वणि सर्ववेदार्थभूतं भगवन्तं ज्ञेयत्वेन प्रदर्श्येदानीं भगवतः पूर्ववेदार्थभूतं पूज्यत्वं ध्येयत्वं चोपपादयितुं सभापर्वसारोद्धारेणोपक्रमः अथेत्यादिना तत्र राजसूये समग्रक्षत्रसमागमं पश्यन्नारदो भगवन्तं वासुदेवं सस्मारेत्याह अथेत्यादिना वैशम्पायनो जनमेजयं प्रति अथ चिन्तां समापेदे इत्यादिस्तस्थौ स्म बहुमानत इत्यन्तो ग्रन्थः नारदकृतभगवल्लीलानुसन्धानपरः नारदस्य पूर्वापरानुसन्धानात् क्षत्रक्षयस्यातः परमुपक्रमो जात इति चिन्ता चित्तव्यथा स्मृतिर्वा अथावतरणात्प्राग् ब्रह्मसभायां निश्चितस्य भूभारहरणास्याभूदित्यर्थः ॥ १ ॥ २ ॥

साक्षात् स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयं श्चैव जातः परपुरञ्जयः ॥ ४ ॥

पुण्डरीकाक्षमिति पुण्डरीकं ब्रह्माण्डाख्यं समश्नुते व्याप्नोतीति पुण्डरीकाक्षस्तं बीजाङ्कुरतरूपमेषु ईशसूत्रविराट्सु अनन्तबीजगर्भफलोपमः श्रीकृष्णः अनन्तकोटिब्रह्माण्डनायक इति प्रसिद्धं विग्रहवतोऽप्यस्य सर्वव्यापकत्वं श्रुतिन्यायप्रसिद्धम् अन्तस्तद्धर्मोपदेशादित्यत्र य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आपादात् सर्व एव सुवर्णस्तस्य यथा कथा स पुण्डरीकमेव अक्षिणी तस्योदितिनाम स एष सर्वेभ्यः पाप्मभ्यो य एवं वेदेति नामरूपवन्तम् । आदित्यमण्डलान्तर्वर्तिनं नारायणमुदाहृत्य तस्य ऋक्साम च गेयाविति नारायणस्य कृत्स्न प्रपञ्चात्मके ऋक्साम अङ्गुलिपर्वणी इत्युक्तं ततोऽनन्तकोटिब्रह्माण्डाश्रयत्वं मूर्त्याकृतेर्ब्रह्मणो युज्यते स विभुर्नारायण उक्तार्थः क्षत्रे क्षत्रियजातौ जातः स्वयमेवाविरभूदित्यर्थः ॥ ३ ॥ ४ ॥

सन्दिदेश तु पुण्योऽसौ विबुधान् भूतकृत्स्वयम् ।
अन्योऽन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥५॥
इति नारायणः शम्भुर्भगवान् जगतः प्रभुः ।

आदिश्य विबुधान् सर्वानजायत यदुक्षये ॥ ६ ॥
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ ७ ॥

योऽसौ भगवान् कृष्णः सर्वभूतकर्तृत्वेन सर्वेश्वरः पुरा स्वयं विबुधानिन्द्रादीन्देवान् सन्दिदेशाज्ञप्तवान् भो देवाः यूयमसुराश्च परस्परं बध्यबातकभावेनाभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ इति आदिश्य यदुक्षये अजायत सोऽयं हरिर्मानुषवन्नामास्त इति अष्टमेन संबन्धः ॥ ५ ॥

नारायणस्यैव शंभुत्वं चतुर्वक्त्रापरपर्यायं भूतभावनत्वं चेति युक्तम् । एकस्यैव भगवतो वासुदेवस्य त्रिमूर्त्तिधारित्वात् यदुक्षये यदुगृहे ॥ ६ ॥

वंशभृतां वरः सर्ववंशानामादिकर्तुर्हिरण्यगर्भस्यापि पितेत्यर्थः॥७॥

यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते ।
सोऽयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ ८ ॥
अहो वत महद्भूतं स्वयम्भूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥ ९ ॥
इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरिज्यं तमीश्वरम् ॥१०॥
तस्मिन् धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥ ११ ॥

अहो भगवतोऽचिन्त्यमाहात्म्यमतर्क्यैश्वर्यं चेत्याह यस्येति द्वाभ्यां महद्भूतं महाविष्णुः स्वयंभूः अस्मदादिवच्छरीरव्यापाराश्रयत्वेनापि भवनं न सहत इत्यर्थः । आदास्यति आच्छेतुमिच्छति । पुनरिति असकृदेतदनेन कर्मकृतमस्तीति सूचितम् ॥ ८ ॥ ९ ॥

धर्मविदां श्रेष्ठो नारदः धर्मराजस्य यज्ञैरिज्यं पूज्यम् ॥ १० ॥ ११ ॥

युधिष्ठिर उवाच ।

कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयं मानं युक्तं च तन्मे ब्रूहि पितामह ॥१२॥

वैशम्पायन उवाच ।

तती भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णं पूजनीयतमं भुवि ॥ १३ ॥

बुद्ध्या इति बुद्ध्यति जानाति तत्त्वमनयेति बुद्धिः श्रवणमननध्यानात्मिका चित्तवृत्तिः तथा निश्चित्य साक्षात्कृत्य अर्हणीयाः ब्राह्मणा देवता प्रसादहेतुत्वात् । अर्हणीयतरा देवाः कामपूरकत्वात् । अर्हणीयतमो भगवान् पुरुषोत्तमः साक्षादानन्दघनः श्रीकृष्णः तस्य सर्वस्याप्यन्यत्वेन परमप्रेमास्पदत्वात् अन्यस्य सर्वस्यापि तत्प्रीत्यर्थत्वात् तथा च श्रुतिः न वा अरे देवानां कामाय देवाः प्रिया भवन्ति आत्मनस्तु कामाय देवाः प्रिया भवन्तीति तत्प्रेयः पुत्रात्प्रेयोऽन्यस्मात् सर्वस्मादन्तरं यदयमात्मेति च । स चात्मा भगवान् कृष्ण एव सर्वविलक्षणः परमात्मशब्दाभिधेयः । भुवीति कर्मभूमौ सम्यक् पूजनीयतमः । तद्भिन्नस्य सर्वस्याप्यनात्मत्वेन दुःखात्मत्वेन चोपक्षयित्वं हेयत्वं वा द्रष्टव्यम् । भुवीति इह चेद् चेदीद्यसत्यमस्तीति श्रुतेरन्यत्र तदलाभादिति भावः ॥ १२ ॥ १३ ॥

एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥१४॥

एवं क्षराक्षरविलक्षणस्य पुरुषोत्तमाख्यस्य परमात्मनो जिज्ञास्यत्वमुक्त्वा स्वरूपमाहैष इति एष पुरोवर्ती श्रीश्यामसुन्दरो भगवान् कृष्णः सूर्यश्च ज्योतिषां पदार्थप्रकाशकानां सूर्यचन्द्राग्निवागादीनां चन्द्राग्नि तारादीनां च समस्तानां सम्यगस्तं गतानां यं स्वप्नावस्थायामह्नि च घर्मं तस्तपन्नाभातीति योजना । अयं भावः न तावदग्निः स्वयं ज्योतिः सूर्यकान्तादिद्वारा सूर्यस्यैवेन्धनादौ तद्रूपेणारूढत्वात् नापि चन्द्रतारादि तस्य जलमयस्य सूर्यज्योतिषैव भास्यत्वात् यथायं दृष्टान्तः एवं चक्षुरादयोऽपि न स्वशक्त्या प्रकाशकाः किन्तु आत्मसत्तानुवेधादेव तथा यथाऽग्न्याद्यभावेऽपि सूर्यः इतरनिरपेक्षः प्रकाशयति एवमात्मा चक्षुराद्युपरमेऽपि स्वप्ने स्वप्रकाशेनैव सर्वं वासनामयं पदार्थजातं प्रकाशयति तस्य भासा सर्वमिदं विभाति । अत्रायं पुरुषः स्वयं ज्योतिरित्यादिश्रुतिभ्यः तेजोबलपराक्रमैः तेजः प्रकाशः बलं तेजोऽन्तराभिभवसामर्थ्यं पराक्रमः निरवशेषेण तमोनाशकत्वं च दृष्टान्ते तेज आदि दार्ष्टान्तिके तु तेजः चित्प्रकाशः बलमबाध्यत्वं

पराक्रमः सर्वोपादानत्वेन सर्वव्यापकत्वं च कथापक्षे तु तेजः कान्तिः बलं पराभिभवसामर्थ्यं पराक्रमः संग्रामोद्यमः स एवं भूतो भगवान् कृष्ण एव पूजनीयतम इति भावः ॥ १४ ॥

**असूर्यमिव सूर्येण निर्वातमिव वायुना ।**
**भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥ १५ ॥**
**तस्मै भीष्माभ्मनुज्ञातः सह देवः प्रतापवान् ।**
**उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घमुत्तमम् ॥ १६ ॥**

असूर्यमिवेति यथा गाढान्धकारस्थं घटादि असत्कल्पमप्रकाशमानं च तस्य सत्तास्फूर्ती सूर्येणैव भवतः एवमहङ्कारादेर्वियदादिघटान्तस्य च जगतः सत्ताप्रकाशौ कृष्णाधीनावेवेति पूर्वोक्तस्यैव विवरणम्। एवं च तथा निवाते वातशून्ये विद्यमानाञ्जन्तून्वात एवाल्हादयति एवमयं कृष्णः स्वरूपानन्देन जगदाल्हादयति एष ह्येवानन्दयति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः सोऽयं प्रत्यग्दृष्टिरूपोऽद्वयानन्दात्मको भगवान् स्वाधीनया निजमायया भक्त्यानुग्रहाय प्रकटीकृतलीलाविग्रहोऽप्यखण्डैश्वर्यादिगुणः कृष्ण एव पूज्यतम इति तात्पर्यार्थः नोऽस्माकं सदः संसत् ॥ १५ ॥ १६ ॥

**प्रतिजग्राह तत् कृष्णः शास्त्रदृष्टेन कर्मणा ।**
**शिशुपालस्तु तां पूजां वासुदेवेन चक्षमे ॥ १७ ॥**
**स उपालभ्य भीष्मं च धर्मराजं च संसदि ।**
**अथाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ १८ ॥**

भक्त्या समर्पितं वस्तु भगवान् हरिरीश्वरः ।
स्वीकरोत्येव धर्मेण यथार्घादि समर्पितम् ॥ १७ ॥
पूज्यावधिमपीशानं पूजितं दुर्जनो जनः ।
न सहते यथा तत्र शिशुपालोऽन्यथामतिः ॥ १८ ॥

**नासौ देयोऽह्यनुनयो नायमर्हति सान्त्वनम् ।**
**लोकवृद्धतमे कृष्णे योऽर्हणं नाभिमन्यते ॥ १९ ॥**
**क्षत्रियः क्षत्रियं जित्वा रणे रणकृतांवरः ।**

यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ २० ॥
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वती पुत्रतेजसा ॥ २१ ॥
न हि केवलमस्माकमयमर्च्यतमो मतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ २२ ॥

वेदैकगम्यं परदैवतं श्रीकृष्णं विनिन्दन् दमघोषपुत्रः ।
उपेक्षणीयो ननु सान्त्वनार्ह इत्याह भीष्मः कुरुराजवर्यम् ।
अनुनयः कुपितप्रसादनं सान्त्वनं शमम् ॥ १९ ॥

तत्र मूढं मूढभाषयैव बोधयेदिति न्यायेन शिशुपालमतमनुसृत्यैव कृष्णस्याधिक्यमाह द्वाभ्यां क्षत्रिय इति ॥ २० ॥

सात्वती देवकी ॥ २१ ॥

इतोऽप्यधिकमाह नहीति त्रिलोकान्तर्गतानां ब्रह्मादीनामपीत्यर्थः॥ २२॥

कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत् सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ २३ ॥

इदानीन्तनक्षत्रियेभ्य ऋषभाः श्रेष्ठा हिरण्याक्षादयः वार्ष्णेयैः सर्वं प्रतिष्ठितं विलीनं किं कनककुण्डलन्यायेन नेत्याह निखिलेनेति सत्यामपि कनकबुद्धौ कुण्डलबुद्ध्यनपायात् । रज्जुसर्पन्यायेनैवेयं प्रतिष्ठा ज्ञानादेव तु कैवल्यमिति श्रुतेश्च पक्षान्तरे तु ब्रह्मणः कनकवत्पारिणामित्वं कुण्डलस्यैव प्रपञ्चस्य क्रियया प्रविलाप्यत्वं च स्यात् तथा च असङ्गोह्ययं पुरुष इत्यसङ्गत्वश्रुतेर्ज्ञानादेवेत्यवधारणव्याकोप इति दिक् ॥ २३ ॥

तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान् ।
एवं वक्तुं न चार्हस्त्वं मा ते भूद् बुद्धिरीदृशी ॥२४॥
ज्ञानवृद्धा मया राजन् बहवः पर्युपासिताः ।
तथा कथयतां शौरेरहं गुणवतो गुणान् ॥ २५ ॥
समागतानामश्रौषं बहून् बहुमतान् सताम् ।
कर्माण्यचिन्तयन्यस्य जन्मप्रभृति धीमतः ॥ २६ ॥

बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे ।
न केवलं वयं कामाच्चेदिराज जनार्दनम् ॥ २७ ॥
न संबन्धं पुरस्कृत्य कृतार्थं वा कथं चन ।
अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहम् ॥ २८ ॥
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुञ्ज्महे ।
न च कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः ॥२९॥
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ।
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥३०॥

त्वामिति भीष्मोक्तिः शिशुपालं प्रति ॥ २४ ॥
उक्तेऽर्थे प्रमाणमाह ज्ञानवृद्धा इत्यादिना ॥ २५ ॥
कर्माणि पूतनावधादीनि ॥ २६ ॥ २७ ॥
कृतार्थं कृतमर्थमुपकारम् ॥ २८ ॥ २९ ॥ ३० ॥

वैश्यानां धान्यधनवाञ् शूद्राणामेव जन्मतः ।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ॥३१॥
वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा ।
नृणां लोके हि कोऽन्योऽस्ति विशिष्टः केशवादृते ३२
दानं दाक्ष्यं श्रुतं शौर्यं धीः कीर्त्तिर्बुद्धिरुत्तमा ।
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते ॥३३॥
तमिमं लोकसंपन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चार्हं सर्वे संक्षन्तुमर्हथ ॥ ३४ ॥
ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः ॥ ३५ ॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः ।

**कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम् ॥ ३६ ॥**

वैश्यान्मामिति लक्ष्मीपतित्वात् पुराणपुरुषत्वाच्च ॥ ३१ ॥ ३२ ॥

नियताऽच्युतेऽकर्मजत्वात् अन्यत्र सर्वत्रैषां कर्मादिजत्वादस्थैर्यं भवति अच्युते तु स्वभावत एवैते गुणा अच्युतास्तिष्ठन्तीत्यर्थः॥ ३३ ॥

लोकसंपन्नं ज्ञानसंपन्नम् ॥ ३४ ॥ ३५ ॥

लोकदृष्ट्या कृष्णमाहात्म्यमुक्त्वा शास्त्रदृष्ट्यापि तदाह कृष्ण एवेति उत्पत्तिरपि उपादानमपि अव्ययः अविनाशी अपरिणामित्वात् रज्जुवत् परिणाम्युपादानस्य नाशावश्यं भावादिति भावः अप्यय इति पाठे लयस्थानं कृष्णस्य कृते कृष्णार्थं सर्वशेषित्वात् कृते इत्यव्ययं तादर्थ्ये निपात्यते भूतमुत्पन्नं तेन विनाश्यप्येतत् कृष्ण एव सत्य इत्यपि ज्ञेयम् ॥ ३६ ॥

**एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।**

**परश्च सर्वभूतेभ्यस्तस्मात्पूज्यतमोऽच्युतः ॥ ३७ ॥**

नन्वपरिणामित्वं कृष्णस्य कथं परिणामित्वमाकाशादिकं प्रत्युपादानत्वं कारणस्य कार्यसजातीयत्त्वनियमादित्याशङ्क्याह एष प्रकृतिरुपादनमव्यक्ता अप्रकटा रज्जुरिवास्पष्टमदृष्टा सर्वस्य कर्ता महदहङ्कारादिरप्ययमेव परिणामवद्विवर्तेऽपि कार्यस्य कारणान्यत्वात् महदादेश्च विवर्तरूपत्वात्। नन्वन्योऽन्यत्रान्यत् कल्पयति महदादेस्तु कथं सदात्मनि स्वस्वकल्पकत्वमित्याह सनातन इति सुषुप्तिप्रलयादावपि तेषां संस्कारात्मना सत्त्वमस्ति अतः कदाचित् प्रतीयमानत्वान् मिथ्यात्वेऽपि भ्रमतत्संस्कारपरम्परया बीजाङ्कुरवदनादित्वान्महदादिरपिसनातनोऽनादिरेवेत्यर्थः। नन्वेवं घृतकाठिन्यवत् श्रीकृष्णे परमात्मनि महदादेराविर्भावतिरोभावौ उक्तौ स्याताम् तथा च परमात्मसाम्यसत्ताकत्वं तयोः स्यादित्यत आह पर इति सर्वभूतेभ्य उत्पन्नेभ्यो महदादिभ्योऽतिरिक्तः महदाद्युपादानं त्वज्ञातप्रकृतिशब्दवाच्या मायैव न तु साक्षाच्चिदानन्दात्मा हरिः सत्तादिभावरूपापि बाधे सति वस्तुवृत्त्या कालत्रयेऽपि तत् कार्यं नासीदिति प्रत्ययात्। यादृशो यक्षस्तादृशो बलिरिति न्यायेन कार्यवत् अनिर्वाच्यैव कल्प्यते अतः कृष्ण एव परो न तु माया तस्यास्त्रैकालिकबाधविषयत्वादिति भावः पूज्यतम इति निरुपाधिकप्रेमविषयत्वेन सर्वशेषित्वं प्रत्यगात्मत्वं चोक्तम् अच्युत इति भोक्तृत्वादिरूपसकलविकारनिषेधान्नित्यमेकरसत्वादानन्दघनो हरिरेव पूज्यतम इति सिद्धम् ॥ ३७ ॥

बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ ३८ ॥
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।
दिशश्च विदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ ३९ ॥
अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥ ४० ॥
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥ ४१ ॥
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः ।
सदैव त्रिषु लोकेषु भगवान् केशवो मुखम् ॥ ४२ ॥

अत एव कृष्णाद्वैतं सिद्धमित्याह बुद्धिरित्यादि पञ्चभिः बुद्धिरहङ्कारः मन इतीन्द्रियाण्येकादश महान् महत्तत्त्वं वाय्वादिपञ्चकेन पञ्चतन्मात्राणां स्थूलभूतानां च ग्रहणं चतुर्विधं जरायुजादि भौतिकम् ॥ ३८ ॥

अन्यत्सर्वं स्पष्टम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ ४३ ॥
यो हि धर्मं विचिनुयादुत्कृष्टं शक्तिमान्नरः ।
स वै पश्येद्यथाधर्मं न तथा चेदिराडयम् ॥ ४४ ॥
सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् ॥४५॥
एवमुक्त्वा ततो भीष्मो विरराम महाबलः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥ ४६ ॥
केशवं केशिहन्तारमप्रमेयपराक्रमम् ।

पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ॥ ४७ ॥
सर्वेषां बलिनां मूर्ध्नि मयेदं दर्शितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं तु प्रवीतु सः ॥ ४८ ॥
स एव हि मया बध्यो भविष्यति न संशयः ।
मतिमन्तश्च ये केचिदाचार्यं पितरं गुरुम् ॥ ४९ ॥
अर्च्यमर्चितमर्घ्यार्हमनुजानन्तु तेऽनुगाः ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ॥५०॥
मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ।
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ॥ ५१ ॥

सर्वत्र सर्वदा सत्तास्फुर्तिप्रदत्वेन सन्तमिति शेषः ॥ ४३ ॥
उत्कृष्टं धर्मं भगवत्तत्वदर्शनम् ॥ ४४ ॥ ४५ ॥

य एवंविधः कृष्णः स एव वसुदेवसूनुरिति सहदेवप्रतिज्ञानारदवचनाभ्यां निश्चेतुमुपक्रमते एवमुक्त्वेत्यादिना ॥ ४६ ॥

अप्रमेयो निर्गुणत्वात् परं पश्चाद्भाविकार्यं तत् । अतिक्रामति व्याप्नोतीति पराक्रमं जगदुपादानम् अप्रमेयश्चासौ पराक्रमश्चेति समासः शुद्धशबलब्रह्मरूपोऽयं केशिहन्तेत्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

अदृश्यरूपा वाचश्चाप्यब्रुवन् साधुसाध्विति ।
आविध्यदजिनं कृष्णं भविष्यद्भूतजल्पकः ॥ ५२ ॥
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ ५३ ॥
कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन् मृतास्तु ते ज्ञेया न संभाष्याः कदाचनः ॥५४॥
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ।
यस्य वा त्वरते बुद्धिर्मरणाय स माधवम् ॥ ५५ ॥

कृष्णं श्यामम् ॥ ५२ ॥

न नु उपाध्यविवक्षया ब्रह्मभावोऽस्मदादीनामप्यस्ति तद्विवक्षायां तु कृष्णस्यास्माकं वा ज्ञानैश्वर्यतारतम्येऽपि तस्य व्यावृत्तत्वेनास्मदादिवदुभयविधब्रह्मभावो नास्त्येवेत्याशङ्क्याह कृष्णमिति। यथा परिमाणतारतम्यस्य विश्रान्तिराकाशादौ देशतः कालतश्चापरिच्छेदाभावात् दृष्टा तथा ऐश्वर्यतातारतम्यस्यापि द्रष्टव्या ननु प्रलये कार्यमात्रनाशस्य वक्तव्यत्वात्कथं कृष्णविग्रहस्य कालापरिच्छेद्यत्वं युज्यतेति चेन्न तस्याकार्यत्वात्। नहि पूर्वोदाहृतस्य हिरण्यश्मश्रुत्वादिविशिष्टस्य ब्रह्मणः कार्यत्वं वक्तुं शक्यम्। अन्तस्तद्धर्मोपदेशादिति न्यायविरोधात्। शास्त्रान्त्यन्यायविरोधाच्च तत्र हि नित्यसिद्धेश्वरादर्वाचीनानां ज्ञानध्यानसिद्धानामीश्वराणामैश्वर्यं वियदादिजगत् सृष्टिसंहारादिव्यापारवर्जं तेन सह भोगसाम्यमात्रं हेतुश्चात्रोक्तः असन्निहितत्वादिति। भौतिकपदार्थसृष्ट्यादिसमकाले हि तेषां सृष्टिप्रलयाविति न ते भूतोत्पत्तिप्रलयकाले संनिहिताः अयं तु तदानीमपि सन्निहितोऽस्तीति नित्य एव व्यवहारतः सर्गपरम्परया आद्यन्तशून्यत्वात्तद्धेतुहेतोरस्यापि तथात्वं दुर्वारम्। नन्वस्य नित्यत्वे सल्लोकादेरपि नित्यत्वं वाच्यं तथा चाद्वैतक्षतिरिति चेत् भ्रान्तोऽसि यथा त्रैलोक्यनाशेऽपि ब्रह्मलोकादि कमस्ति यथा सत्स्वपि ब्रह्मलोकादिष्वस्मदादीनां शुद्धकैवल्यमप्रतिहतं तथा तस्मिन्नपि सति भविष्यतीति कानो हानिः तस्माद्युक्तं कमलपत्राक्षस्य भगवतो वासुदेवस्य पूर्वोक्तरीत्या असङ्गस्य साक्षात्परब्रह्मत्वम्। इतरेषां तूपाधितादात्म्यव्यवहितमिति महान्भेद इति युक्तं कृष्णस्यार्चनीयतमत्वम्। एतस्यैव साम्बभानुदुर्गागणेशादीनि रूपान्तराणि लोके पूज्यतया प्रसिद्धानि तत्तदुपासकरुचिवैचित्र्यादेतद्रूपवैचित्र्यं भक्तवात्सल्यतया गृह्णाति न तेन भेदगन्धं भजते वस्तुतत्त्वम्। क्षराक्षरो भगवान् पुरुषोत्तम एकैवास्तीति सर्वमनवद्यम्।

केचित्साम्बं मिहिरमपरे वक्रतुण्डं तथान्ये।
दुर्गामन्ये विदुरिममथो विष्णुमन्ये रसज्ञाः॥
सर्वाकारं विदितमपितं मङ्गलं मङ्गलानाम्।
ध्याये मातः सकलमतिभिः सुन्दरं श्रीमुकुन्दम्॥

एवं पूज्यतमत्वेन हरिरेव श्रुतेर्मतः पूर्ववेदार्थ एवात्र संक्षेपेण प्रदर्शितः॥ ५३ ॥ ५४ ॥ ५५ ॥

**कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम्।**

यावदस्यैव देवस्य देहं विशतु पातितः ॥ ५६ ॥

एवं भगवतः पूज्यतमत्वमभिधायेदानीं द्वेषादिनाप्यन्ते भगवत्स्मरणं भगवत्प्राप्तिहेतुरिति दर्शयितुमुपक्रमते । तत्र धर्मराजसंसदि कृष्णे समर्चिते सति कुपितः शिशुपालो भगवन्तं वस्तुतस्तुवन् भीष्मवाक्यं प्रथमं दर्शयति ॥ ५६ ॥

तथा ब्रुवत एवास्य भगवान् मधुसूदनः ।
मनसाऽचिन्तयच्चक्रं दैत्यगर्वनिषूदनम् ॥ ५७ ॥
एतस्मिन्नेव काले तु चक्रे हस्तगते सति ।
उवाच भगवानुच्चैर्वाक्यं वाक्यविशारदः ॥ ५८ ॥
शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया ।
अपराधशतं क्षाम्यं मातुरस्यैव याचने ॥ ५९ ॥
दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः ।
अधुना बधयिष्यामि पश्यतां वो महीक्षिताम् ॥६०॥

एवं भीष्मवाक्यं श्रुत्वापि पुनरपि शिशुपालो जगर्ज भगवन्तं युद्धायाह्वयत् ततो गूढाशयेन स्तुतोऽपि भगवान् रूढ्यर्थाऽभिप्रायेण लोकदृष्ट्यां तं हन्तुं तान्नष्टं वैरमाविष्कृत्य चक्रं सस्मारेत्याह तथेति ॥५७॥५८॥५९॥

याचित मया दत्तं प्रतिश्रुतं तानि शतमपराधानाम् । बधयिष्यामि बधं प्रापयिष्यामि ण्यन्ताद् बधशब्दाल्लृट् ॥ ६० ॥

एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः ॥ ६१ ॥
स पपात महाबाहुर्वज्राहत इवाचलः ।
ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ॥ ६२ ॥

तेजोलिङ्गं शरीरं अग्र्यं संसारानादितया अनादि तच्च भगवता स्वमहिमानं प्रकाशयता सर्वेषां दृष्टिविषयीकृतं सत्यकामः सत्यसङ्कल्पोऽचिन्त्यमाहात्म्योऽतर्क्यैश्वर्यादिसंपन्नः कर्तुमकर्तुमन्यथा कर्तुं समर्थो हरिस्तस्यान्यथाकरणे न किमप्यसंभावितमिति द्रष्टव्यम् ॥ ६१ ॥ ६२ ॥

उत्पतन्तं महाराज गगनादिव भास्करम् ।
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ॥ ६३ ॥
ववन्दे च तदा तेजो विवेश च नराधिप ।
तदद्भुतमत्यन्तं दृष्ट्वा सर्वे महीक्षितः ॥ ६४ ॥
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ।
प्रहृष्टाः केशवं जग्मु संस्तुवन्तो महर्षयः ॥ ६५ ॥
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः ।
शशंसुर्निर्वृताः सर्वे दृष्ट्वा कृष्णस्य विक्रमम् ॥६६॥
आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः ।
गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ॥ ६७ ॥

अहो भगवतः श्रीमन्मुकुन्दस्य माहात्म्यं यः द्विषतोऽप्येतादृशीं गतिं वितरतीति येन केनाप्युपायेन स्वस्मिन्नावेशितचेतसां पुंसां स्वाराज्यपदवीदातृत्वमेव मुकुन्दस्य मुकुन्दत्वमिति दर्शयति उत्पतन्तमिति सार्धद्वयेन ।

यं कर्मिणः कर्मभिरर्चयन्तो
ध्यायन्त ईशं यं योगिनोऽपि बोधयन्तः ।
गायन्ति यं सततं श्रुतिमौलिनिष्ठाः
प्रापुस्तमेव पुरुषं खलु द्वेषिणोऽपि ॥ १ ॥
गतिं कामाद् द्वेषाद्यदपि ददतस्तत्पराधियाम्
मुकुन्दत्वं लोके प्रथितमिह विष्णोरजजनैः ।
तथाप्याराध्योऽसौ विमलयशसे सात्विकधिया
हरिः श्रौत्या प्रेम्णा प्रथयति यतोऽमुं निजगुणैः ॥ २ ॥
ध्रुवप्रह्लादादेरिव भगवति प्रेमकलया-
सदोत्कण्ठ्यात् पुंसः सपदि भजतः श्रीहरिरसौ ।
प्रसन्नः स्वात्मानं प्रकटयति साकारमगुणम्
तथा नान्योपायैरिति वदति वेदः स्मृतिरपि ॥ ३ ॥
यस्येक्षणाज्जगदिदं सकलं सहेतु
प्रादुर्भवत्यखिलमेति लयं निमेषात् ।

यत्पादपद्ममकरन्दरसेप्सवः स्यु-
मुक्तास्तमच्युतमहं शरणं प्रपद्ये ॥ ४ ॥

एवं येन केनाप्युपायेन मतः कृष्णं प्रविष्टं यस्य तस्य न पुनः संसारसंबन्धोऽस्तीति दर्शितम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

इदानीं भगवतः कृष्णस्यैव शरण्यत्वं नान्यस्येति दर्शयितुं कुरुसंसदि दुःशासनेनाकृष्टया द्रुपदराजकन्यया अनन्यशरणीकृतो भगवानित्याह आकृष्यमाण इति हरिः सर्वदुःखहर्ता गोविन्द गवामिन्द्रियाणाम् । विन्दतीति गोविन्दो लब्धा सर्वेन्द्रियचालकत्वात् संनिहितः मां कथं न जानासि संनिहितोऽप्यशक्तः किं कुर्यादत आह द्वारकावासिन्निति एकरात्रेणैव स्वीयान् आपदः सकाशादुद्धर्तुं समुद्रमध्ये तां पुरीं प्रति सर्वनगरस्य युगपत्प्रापणं च कुर्वतस्तव मम वारणमीषत्करमित्यर्थः । ननु संनिहितः शक्तश्च किमिति दुष्टामनुगृह्णीयादत आह कृष्णेति स्मृतमात्र एव सर्वदोषकरणदुष्टैरपि स्मृतः सन् तदीयसकलदुष्टत्वनिरसनपूर्वकपरमानन्दपदप्रद इत्यर्थः ननु तथापि ।

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥

इत्युक्तः स्वाभाविकस्त्रीदोषो नापनेतुं शक्यः नत्वाशीविषदंष्ट्राऽमृतस्रवा कर्तुं शक्यत्यत आह गोपीजनप्रिय इति यद्यपि स्त्रीदोषाः स्वाभाविका अनीश्वरैः परिहर्तुमशक्यास्तथापि तव सर्वेश्वरस्य श्रीगोपीजनप्रियस्य व्रजवधूकृते कृतावतारस्य श्रीनन्दनन्दनस्यानन्तब्रह्माण्डकोटिनायकस्यानन्तदोषदुष्टपूतनाद्यसुरोद्धरणशीलस्य पतितपावनशिरोमणेः श्रीमन् मुकुन्दस्य मादृश्यास्त्वदेकशरणायास्त्वयैव राजसूयाभिषेकेणानुगृहीतायाः सर्वदोषापहरणे कथं न सामर्थ्यमित्यर्थः ॥ ६७ ॥

**कौरवैः परिभूतां मां किं न जानासि केशव ।**
**हे नाथ हे रमानाथ व्रजनाथार्त्तिनाशन ॥ ६८ ॥**

वेदान्तवेद्यमरविन्दविशालनेत्रम्
द्वारावती कृतनिवासमकुण्ठधिष्ण्यम् ।
आनन्दकुन्दमघनाशनमादरेण
कृष्णा व्रजेशतनयं शरणं जगाम ॥ १ ॥
गोप्यो मुकुन्दरसिका व्रजराजसूनु-

गोपीप्रियस्त्विति कथा प्रथितात्रिलोक्याम् ।
एतद्विशेषणविशिष्टमतः शरण्यम्
यं द्रौपदी वृतवतीतमहं प्रपद्ये ॥ २ ॥
कौरवैरिन्द्रियप्रायैः परिभूतजनं हरे ।
स्वस्मिन् रतिप्रदानेन समुद्धर कृपानिधे ॥ ३ ॥

केशवः कश्च अश्च ईशश्च ब्रह्मविष्णुरुद्राः तैः सह वाति गच्छतीति केशवः ब्रह्मादीनामपि प्रवर्तकः तदात्मकेति अतः सर्वथा त्वं मामनुगृह्णीष्वेति भावः न नु पाण्डवानां सती त्वं किमिदमति दीनवद्भाषसे इत्यत आह हे नाथेति हे निरुपचरितस्वामिन् पाण्डवास्तु स्वयमेव धर्मसङ्कटे निमग्ना न मामुद्धर्तुं क्षमाः अतस्त्वमेव मुख्यो नाथोऽसि सर्वशक्तित्वादुद्धरणे समर्थ इत्यर्थः। ननु तथापि तव स्वर्गलक्ष्म्यवतारत्वात् स्वस्योद्धरणे सामर्थ्यं भवत्या एव किन्न तस्यापि स्वामित्वात्सर्वेश्वरत्वात् सर्वसामर्थ्यं नतु स्वर्गलक्ष्यास्तस्याः कर्मफलत्वादतीवतुच्छत्वमितिभावः तथा च किमन्याश्रयणेनेत्यत आह हे रमानाथेति । स्वर्गलक्ष्मी तु रमाया विभूतिकणस्त्वं तु तस्या नाथः किञ्च आर्त्तिनाशनेति गोवर्धनोद्धरणदावाग्निपालनादिना व्रजवासिनामार्त्तिस्त्वयैव नाशिता तथा ममापि तव सखीत्वादार्त्तिं नाशयेति भावः ॥ ६८ ॥

**कौरवार्णवमग्नां मामुद्धरस्व जनार्दन ।**
**कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ।**
**प्रपन्नां पाहि गोविन्द कुरुमध्ये च सीदतीम् ॥ ६९ ॥**

सर्वेश्वरं सकलदुःखहरं रमेशम्
वृन्दावनेशमखिलक्ष्मुदारमूर्तिम् ।
श्रीनन्दनन्दनमखण्डसुखैकराशिम्
कृष्णा जगाम शरणं तमहं प्रपद्ये ॥ १ ॥

ननु सन्ति सभायां भीष्मद्रोणादयो महान्तस्तान्विहाय किमिति मामेवाह्वयसीत्यत आह जनार्दनेति जनैर्देवनरतिर्यगादिभिरर्द्यते याच्यते इति जनार्दनः तस्मात्त्वमेव शरण्यत्वात् प्रार्थ्योऽसि नतु परतन्त्रा भीष्मादय इति भावः कृष्णादन्यत् शरणमपश्यन्ती तमेवात्यन्तसंभ्रमाच्छरण्यत्वेन प्रार्थयते कृष्ण एवशरणं नान्यदित्यर्थं द्रढयति ननु तथापि केनोपायेन तवास्मात् सङ्कटादुद्धरणं करोमीति तु न वाच्यं यतस्त्वं महायोगित्वेन शास्त्रप्रसिद्धः सर्वशक्तिमायानियन्तुस्तवोपायापेक्षैव दुर्घटेत्यर्थः । विश्वात्मन् विश्वान्तर्या-

मिन्नित्यर्थः । विश्वभावन विश्वकर्तः । अन्तर्यामित्वेन शत्रुमस्मिन्नर्थे उदासीनं कुरु अथवा विश्वकर्तृत्वेन वस्त्राणि बहूनि समर्पय इति भावः ।

मग्नापि कौरवसभार्णवविह्वलाङ्गी
सस्मार कृष्णमबलाऽशरणा शरण्यम् ।
गोविन्द कृष्ण सकलात्मनु विश्वपाल
त्वं याहि मामुपगतामरविन्द नेत्र ॥ १ ॥ ६९ ॥

**इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् ।**
**प्रारुदद्दुःखिता राजन् मुखमाच्छाद्य भामिनी ॥७०॥**
**याज्ञसेन्या वचः श्रुत्वा कृष्णो गह्वरितोऽभवत् ।**
**त्यक्त्वा शय्यासनं पद्भ्यां कृपालुः कृपयाभ्यगात् ७१**
**कृष्णं च विष्णुं च हरिं नरं च**
**त्राणाय विक्रोशति याज्ञसेनी ।**
**ततस्तु धर्मोऽन्तरितो महात्मा**
**समावृणोद्वै विविधैः सुवस्त्रैः ॥ ७२ ॥**

शरण्यं श्रीकान्तं सकलसुरवन्द्यं विजयिनम् ।
चिदाकारं सारं त्रिभुवनपतिं दुःखहरणम् ॥
स्मरन्ती धातारं हरिमखिलशक्तिं सुखनिधिम् ।
सभायामाच्छाद्याननमकृत दुःखाश्रुकलनम् ॥

भामिनी दीप्तिमती स्वस्मिन् भगवदनुग्रहनिश्चयात् । शत्रूनगणयतीत्यर्थः ॥ ७० ॥

गह्वरितः करुणातिशयात् गद्गदकण्ठः ॥ ७१ ॥

श्रुत्वातुरद्रुपदजावचनं कृपालुः
प्रेम्णार्द्रगद्गदगिरोद्धरणे हि तस्याः ।
व्यग्रः स्वतल्पमचिरात् कृपया जगाम
त्यक्त्वा रमां च गरुडं च हरिः स्वपद्भ्याम् ॥
व्यामोहयन्नखिलशक्तिरखण्डबोधो
दुःशासनप्रभृतिकौरवसंघमीसः ।
कृष्णां विचित्रवसनैः स समावृणोद्वै

धर्मात्मना वसनतां गतवान् स्वधीशः ॥ १ ॥
नैवान्तमापुरखिलाः खलतां वहन्तो
मध्येसभं द्रुपदजावसनोद्भवस्य ।
आकृष्यमाण इतरे वसने ततोऽन्यत्
तद्रूपमेव बहुधा पुनराविरासीत् ॥ २ ॥

धर्मोऽन्तरितः धर्म एव अन्तरवस्त्रं तद्गात्रगतम् । मत्वा च तां वस्त्रपूतैः समावृणोच्च ॥ ७२ ॥

**आकृष्यमाणे वसने द्रौपद्यास्तु विशांपते ।**
**तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ ७३ ॥**
**नाना रागविरागाणि वसनान्यथ वै प्रभो ।**
**प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ ७४ ॥**
**ततो हलहला शब्दस्तत्रासीद्घोरदर्शनः ।**
**तदद्भुततमं लोके वीक्ष्य सर्वे महीभृतः ॥ ७५ ॥**
**शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजम् ॥ ७६ ॥**

**इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषि सदानन्दविदुषा कृते भारतसारोद्धारे सभापर्वसंग्रहः सम्पूर्णः ।**

तदुन्मेयाद्विश्वं प्रभवति सपद्यात्मकलया
समग्रं पातीदं विषमकलनं यस्त्वकरणः ।
निमेषाद्यस्यैति प्रलयमिदमानन्दवपुष
स्तमाश्रित्येशानं द्रुपदतनयोद्धारमगमत् ॥ १ ॥

नाना रागाणि च विरागाणि केवलश्वेतानि च ॥ ७३ ॥ ७४ ॥

अतो नान्यल्लोके ऽशरणशरणं दुःखहरणम्
हरेः पादाम्भोजान्निजसुखनिदानाद्दतिपदात् ।
विचार्येत्थं विद्वान् बहुसुकृतपुञ्जैकफलकम्
शरण्यं श्रीविष्णोः पदयुगमिहेयाद्धिशरणम् ॥ २ ॥

एवं शरण्यभजनीयगुणैकधाम

श्यामाभिराममजरामरशासितारम् ।
श्रीमन्मुकुन्दमरविन्दविशालनेत्रम् ।
ध्येयं विचिन्त्य तमहं शरणं प्रपद्ये ॥ ३ ॥ ७५ ॥ ७६ ॥

---

## अथ वनपर्वप्रकाशः ॥

ॐ श्रीमत्कृष्णपदाम्भोजमकरन्दरसाशिषा ।
तात्पर्यदर्शनं भक्त्या क्रियते वनपर्वणि ॥ १ ॥
तत्र प्राक्पर्वणि प्रोक्तं भक्तेर्माहात्म्यमद्भुतम् ।
द्रौपदीरक्षणात्सा च भक्तिः स्यात् सत्समागमात् ॥ २ ॥
प्रतिज्ञापालनेनाथ स्वधर्माचरणेन च ।
तीर्थाटनाच्च श्रीकृष्णे भक्तिः पुंसां प्रजायते ॥ ३ ॥
तत् तदाख्यायिकाद्वारा प्रतिपाद्या हरौ रतिः ।
हरेः सर्वान्तरात्मत्वात् परप्रेमास्पदत्वतः ॥ ४ ॥
आनन्दघनरूपत्वं सिद्धं वेदान्तमानतः ।
अनस्तस्यपुमर्थत्वं सुपुमर्थे रतिर्भवेत् ॥ ५ ॥
द्रौपदीदत्तशाकाशनात्सर्वं तृप्ते हरौ जगत् ।
तृप्तं तस्माद्धरेः सिद्धं सर्वविश्वान्तरात्मता ॥ ६ ॥
मुनिधर्मादिसंवादे कृष्णतत्त्वं समासतः ।
तज्ज्ञानोपायसहितं वर्णितं तत्र तत्र ह ॥ ७ ॥
तत्र चादौ च सत्सङ्गगुणदोषविवेचनात् ।
काम्यधर्मं विनिन्द्यैव योगस्य स्तवनं कृतम् ॥ ८ ॥
तस्मात् कृष्णपदाम्भोजे भक्तिनिष्पतये सुधीः ।
दुःसङ्गं दूरतो हित्वा सतां सङ्गं समाश्रयेत् ॥ ९ ॥
संप्राप्याप्यापदं धीरा धर्ममेवानुयान्त्यलम् ।
पाण्डवा राज्यविभ्रंशे जाता धर्मैकतत्पराः ॥ १० ॥
विप्रार्थं भास्करं भेजे नतु राज्याय धर्मराट् ।
धर्मायाभ्यर्चयेद्देवं न भोगायेति व्यदर्शयत् ॥ ११ ॥
संसारस्य च दीर्घस्य सुविचारो महौषधम् ।
दुःखितान्पाण्डवान्वीक्ष्य शौनकस्तत्त्वमादिशत् ॥ १२ ॥
धर्मैकतत्परं दृष्ट्वा प्रसीदन्त्याशु देवताः ।
स्वभक्तमितिचादर्शि भास्कराराधनेऽमुना ॥ १३ ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
भ्रातरं पथ्यवक्तारं धृतराष्ट्रो व्यवासयत् ॥ १४ ॥
निरागसस्त्वघकारित्वे कुप्यन्ति मुनयोऽपि हि ।
समदर्शिन इत्याह मैत्रेयागमने मुनिः ॥ १५ ॥
प्रव्राजिनः पथि रिपुं यद्धन्यान्मङ्गलाय तत् ।
पाण्डवानां प्रवसतां किर्मीरोन्मथनं यथा ॥ १६ ॥
इहामुत्र विनाशाय पुत्रस्नेहो नृणां महान् ।
यशोधर्मविनाशोऽभूद्धृतराष्ट्रस्य तद्वतः ॥ १७ ॥
साधूनप्यवजानन्ति विनाशे प्रत्युपस्थिते ।
विमूढा इति मैत्रेयावज्ञानादवदन्मुनिः ॥ १८ ॥
सर्वज्ञोऽपि समोऽपीशोवात्सल्यावेशतः सताम् ।
वैषम्यं भजतीवेति पार्थाच्युतसमागमे ॥ १९ ॥
आपद्गतोऽपि नो धीरः स्वप्रयोजनसिद्धये ।
अकाले प्रेरयेदीशमिति पार्थगिरेरितम् ॥ २० ॥
जानन्वदन्नपीशस्य प्रभावं कृष्णमायया ।
मोहितः शोचतीत्याह द्रौपद्याः कथने मुनिः ॥ २१ ॥
कृष्णस्मरणमेवास्ति कृष्णसान्निध्यकारणम् ।
इत्थं श्रीकृष्णवाक्येन दर्शितं मुनिना स्फुटम् ॥ २२ ॥
भवार्णवान्तर्यात् क्षेत्रं द्वारकाख्यं तनुद्वयम् ।
तस्मिन् विस्मरणादस्यासन्निधानाद्धरेः पुरे ॥ २३ ॥
महामोहेन साल्वेनागतेनारुह्यकामगम् ।
मनोरथाख्यं सौभं च शोकास्त्रैः सत्युपद्रुते ॥ २४ ॥
प्रद्युम्नादिसरूपा ये धर्मार्थ प्रापकास्तु ते ।
न तं वारयितुं शक्ता अभूवन् सर्वविक्रमैः ॥ २५ ॥
ततो हरिर्हृदम्भोजद्वारकामेत्य सत्वरम् ।
अधिक्षिपत्तं चिद्रूपं साल्वं मोहमहद्रिपुम् ॥ २६ ॥
ब्रह्मविद्या सुनाभेन पुरं सौभं मनोरथम् ।
पातयामास कंसारिरिति सौभकथाशयः ॥ २७ ॥
द्यूते हि द्रौपदी कृष्णं स्मृत्वैवातरदापदम् ।
एवमेवापरोऽप्येनं स्मृत्वा तरति संसृतिम् ॥ २८ ॥
कृष्णविस्मरणादेव भवन्ति परमापदः ।

नैनं जातु पुमान् मोहाद्विस्मरेद्दुःखहारिणम् ॥ २९ ॥
सर्वे निसर्गाद्रज्यन्ते पाण्डवेष्वेव साधुषु ।
धार्तराष्ट्रेद्विषद्द्वेषवन्तोऽसाधुषु सज्जनाः ॥ ३० ॥
विप्रभक्तिः स्वधर्मश्च कर्तव्यत्वेन शाश्वतः ।
मार्कण्डेयेन वृद्धेन दाल्भ्येनापि तथेर्यते ॥ ३१ ॥
प्रियस्यापि नयेनोक्तं वचो धर्मविरोधि यत् ।
न ग्राह्यं तदिति प्राह दम्पत्योर्वचसा मुनिः ॥ ३२ ॥
ईश्वराराधनार्थाय कर्तव्यो धर्म उत्तमैः ।
न कामाद्यर्थ इत्येवं द्रौपद्यै प्रोक्तवान्नृपः ॥ ३३ ॥
सत्यं रक्ष्यं सदा सद्भिर्घोरायामपि चापदि ।
न व्याजेन चरेद्धर्ममिति भीमाय सोऽब्रवीत् ॥ ३४ ॥
आपन्नोऽपि स्वधर्मस्थो न निन्देदीश्वरं बुधः ।
संस्मरंस्तद्गुणानेवेत्याह राजा प्रियां प्रति ॥ ३५ ॥
धर्मनिष्ठावतां पुंसां सहाया मुनयोऽखिलाः ।
ईशश्चेत्यनिशं ह्यासीत्पाण्डूनां मुनिसङ्गमः ॥ ३६ ॥
स्वत एवोदये हेतुभूतां विद्यां दिशन्त्यपि ।
सन्तश्च सद्भ्य इति स बृहदश्वोपदेशनात् ॥ ३७ ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
वनेऽपि पाण्डुपुत्राणां सतां सङ्गात् सदासुखम् ॥ ३८ ॥
प्रतिबन्धो न कुत्रापि कृष्णपादानुरागिणाम् ।
इत्यर्जुनतपश्चर्यावर्णनेऽदर्शयन्मुनिः ॥ ३९ ॥
दुष्करं सुकरं तेषां स्याच्चेत् कृष्णकृपा भवेत् ।
आशुप्रदर्शनं शम्भोरर्जुनस्येत्यदर्शयत् ॥ ४० ॥
अवज्ञापि महत्पूजा भवेत् कृष्णानुयायिनाम् ।
युद्धेनापि तुतोषैव फाल्गुनस्य महेश्वरः ॥ ४१ ॥
केवलं धर्मदार्ढ्यं स्याद्भगवत्परितोषणम् ।
इति तुष्टो महेशानोऽप्यर्जुनाय वरानदात् ॥ ४२ ॥
यः कृष्णः स शिवो देवो यः शिवः कृष्ण एव सः ।
इत्यर्जुनोऽप्यभेदेन शिवं तुष्टाव संस्तवैः ॥ ४३ ॥
कृष्णावेशितचित्तानां सर्वे देवाः प्रदक्षिणाः ।
इत्यर्जुनाय देवेन्द्राः स्वयमेव वरान्ददुः ॥ ४४ ॥

मानुष्येऽपि सुरेन्द्रस्य स्थानं प्राप्य न विस्मिताः ।
कृष्णभक्ता इति स्वर्गारोहेऽर्जुनकथाशयः ॥ ४५ ॥
आनृशंस्यं परो धर्मः संमतः स्याच्छ्रुतेः स्मृतेः ।
इति स्वर्गे न बुभुजे विना भ्रातॄन् सुखं जयः ॥ ४६ ॥
न क्षोभयति गोविन्दभक्तान्भोगा अपि स्वयम् ।
प्राप्तापि नोर्वशी पार्थं चालयामास धर्मतः ॥ ४७ ॥
अकामे कामिनीशापो देहगुप्त्यै क्वचिद्भवेत् ।
पार्थस्येवोर्वशीशापः प्रछन्नं वा समीप्सतः ॥ ४८ ॥
कृष्णभक्तद्रुहां नास्ति शान्ती राज्येऽपि तिष्ठताम् ।
श्रुत्वा स्वर्गगतं पार्थं धृतराष्ट्रोऽन्वतप्यत ॥ ४९ ॥
दुःखे दुःखाधिकान्पश्येत्तेन शोकोऽपनीयते ।
इति विश्रावितो राजा नलोपाख्यानमद्भुतम् ॥ ५० ॥
भगवद्भक्ति निष्ठानां धर्म एव विवर्धते ।
इति तीर्थेषु यात्रायां वनस्थानां प्रदर्शनम् ॥ ५१ ॥
राज्यदेहादिनाशेऽपि कीर्त्तिर्नैव प्रणश्यति ।
इति संदर्शयन्नाह गयादीनां यशो मुनिः ॥ ५२ ॥
न वित्तादिनिमित्तेऽपि सद्भिः कार्यस्तपो व्ययः ।
इत्यगस्त्येन वातापिभक्षणेऽदर्शयन्मुनिः ॥ ५३ ॥
तपोविद्यावयोऽवस्थादिकं सर्वं सतां भवेत् ।
परोपकृतये यद्वद्भगीरथमहाभुजः ॥ ५४ ॥
योगारूढांस्तपोनिष्ठान् भ्रंशयन्ति हि योषितः ।
ऋष्यश्रृङ्गचरित्रेण मुनिरेवं न्यदर्शयत् ॥ ५५ ॥
क्रोधी पुत्रान् कलत्रं च हन्तिलोकांश्च भूरिशः ।
जमदग्निः सपुत्रोऽत्र निदर्शनमुदीरितम् ॥ ५६ ॥
नोपेक्षते हरिर्भक्तानापन्नानपि दोषतः ।
इत्यभीक्ष्णं हरिः पाण्डून्वने दर्शितवान्वपुः ॥ ५७ ॥
तरन्त्येव महान्तो हि प्रतिज्ञामपि दुस्तराम् ।
पूर्वेषामपि तीर्णा स्याद्भगीरथनृपेण सा ॥ ५८ ॥
केचित् सन्तीदृशाः सन्तः परोपकरणे रताः ।
यथा गङ्गावताराय भगीरथनृपोऽभवत् ॥ ५९ ॥
देवत्वं देवतानां हि ब्राह्मणाच्च्यवनो मतः ।

शर्यातिर्यज्ञं नासत्यौ कृतवान् सोमपीथिनौ ॥ ६० ॥
अवश्यं भाविनो भावा भवन्ति महतामपि ।
युवनाश्वस्य पुंसोऽपि मान्धाता गर्भमाविशत् ॥ ६१ ॥
याजको नरकं याति न याज्यः पापमाचरन् ।
जन्तुं हत्वा सोमकाय शतं पुत्रान्ददद्यथा ॥ ६२ ॥
उत्कृत्यापि स्वमांसानि दत्वा वाप्यखिलं वपुः ।
शिविः कपोतमिव च त्रायेत शरणागतम् ॥ ६३ ॥
तार्किकं पक्षमाश्रित्य श्रौतं पक्षं विदूषयन् ।
स पराभवमाप्नोति यथा वन्दी मुनेः सुतात् ॥ ६४ ॥
बालोऽपि तत्त्वनिष्ठश्चेन्मान्यः सर्वविदामपि ।
अष्टावक्रो यथा राज्ञा जनकेनातिमानितः ॥ ६५ ॥
ब्रह्मतत्त्वं सुदुर्बोधं स्थूलसूक्ष्माभिमानिनाम् ।
कूटश्लोकैरिति व्यासोऽप्यष्टावक्राय आदिशत् ॥ ६६ ॥

राशिस्त्रिंशलुवस्तान् द्विषडनुपतत्तार्कण सौरोऽब्दो दृष्टः
सामे ष्विष्टौ तु चान्द्री शरदपि च चतुर्विंशकात् पर्वणां स्यात् ।
गोसत्रे सावनोऽब्दो गगनरसगुणै राज्यहै राशियुग्माद्
ऋत्वाख्याश्चतुर्यानां स्वसमयविहिताः श्रेयसे स्युर्मखाग्न्याः ॥६७॥

हृन्मेघो दुःखमृत्यू तडिदशनिसमे श्येनवच्छीघ्रपाते
नित्यौ बद्धे रथेऽश्वे इव करणसुराधीश्वरप्राज्ञखोत्थः ।
स्वे गर्भे धत्त एनं सुषुवतुरितरे वासनातन्तुजन्याम्
चेतः शाढीनिरुन्ध्यादसुपवनवशां विश्वचित्रां मुमुक्षुः ॥ ६८ ॥

पुंमीनो निर्निमेषः स्वपति भवनदी चारखिन्नः स्वरूपे
जातं ब्रह्माण्डपिण्डं जडमपि जवते येन लोहाश्म नीत्या ।
यस्या कायस्य नास्ति क्वचिदपि हृदयं शोकनीडं समाधौ
यस्य मायानदीयं द्रुतमहमिदमाद्यात्मनोदेति सोऽस्मि ॥ ६९ ॥

धीर्देवेन्द्रोऽग्निकसा तदिदमहमिति व्यक्तनानास्वरूपा
स्वन्यं च स्वयं सा प्रथयति रविवत्सा रिपुः सा च मृत्युः ।
सा श्रोत्रादेः प्रयोक्त्री सकलमिदमिह स्वप्नवद्धीमयं स्याद्
इत्येवं तार्किकेण प्रथममुपगतो वन्दिनां बौद्धपक्षः ॥ ७० ॥

स्वातन्त्र्यादिन्द्र आत्मा नलवदिह पराधीनसिद्धिश्च बुद्धिः
दृग्दृश्ये तेऽज्ञसत्त्वे इति खलु विवृते येङ्गिनाद्वेत्ति मन्त्रे ।

भिन्ने देवर्षिदत्तप्रभृतिवदपि ते सूर्यचित्रांशुकाभे
अन्योन्यापेक्षया च व्यवहृतिपथिगे चक्रवद्दम्पतीवत् ॥ ७१ ॥
देवः स्थाणुर्नरः स्यात्सुकृतकृदितरो नारकस्थाणुतिर्यग्
जन्मात्रैवर्णिकः स्याच्छ्रुतियुगधिकृतौ वाजपेयादि यज्ञे ।
कालेकाले यजन्ते फलमपि च तथा भुञ्जते यज्ञभाजः
सत्त्वाद्यैर्याति लोकान् स्वरवनितरकान् स्वप्नजाग्रत्सुषुप्ती ॥७२॥
जिज्ञास्यं ब्रह्मसञ्चित्रतिवन्नियतिभिर्ज्ञानयज्ञेऽधिकारि
चातुर्वर्ण्यं चतुष्पात्तदुपदिशति वागण्डसूत्रेशशुद्धम् ।
चत्वारो वा विवर्णा अष्टमदलकलावैखरीमध्यमाख्यौ
पश्यन्त्याख्यः पराख्यः स चतुरवयवः प्रत्ययोऽस्याः प्रसिद्धः ॥७३॥
अग्निश्छन्दः क्रतूनामिव खलु मनसः खानि पञ्चैव भागाः
भ्रान्तिर्निद्राविकल्पः स्मृतिरसलमितिर्वृत्तयः पञ्च तस्य ।
ताभिः शाखावतीव स्वरिव जलपरिणामिकायानुकर्त्री
शुद्धा शुद्धप्रवाहा भवति चितिनदी तज्जसौख्यादिभोक्त्री ॥ ७४ ॥
गोनक्षत्रर्तुयज्ञा इव समवपुषः षट्षडेवं सचित्ताः
श्रोत्राद्या दुःखशब्दाद्यनुभविन इतोऽन्यानुभूतिः ससाक्षी ।
धीयोगात् सप्तभिस्तैरनुभवकरणैरत्र सप्तर्षिसंज्ञै-
र्भुङ्क्ते छन्दोऽभिधानानपरिमितवपुश्छादकानष्टमोऽर्थान् ॥ ७५ ॥
भौमेष्वर्थेषु दिव्येष्वपि नरपशवः सप्तसप्तैव बुद्ध्वा
भोक्तारं प्रार्थयन्ति क्रतुपदविदितं सप्त तान् सप्त खानि ।
सप्तैवेषां सुखानि प्रतिविषयभावान्येकवीणेव देही
भोगं तन्त्रीन्द्रियाढ्यो रवमिव कुरुते योऽत्र कर्ता स भोक्ता ॥ ७६ ॥
शाणा गोण्योष्ट तेऽर्थाः शतमथशरभः प्रत्यगानन्दसंज्ञैः
पूर्वोक्तैः साहमर्थैर्व्रजति स विषयात् स्वानितात्पद्ययोस्य ।
सिंहघ्नो हिंस्रभेदाद्द्विडिति वसुपदं स्कारजातस्य लिङ्ग-
स्थे देवतौघेवसति सनृपशोर्बन्धने मोहयूपे ॥ ७७ ॥
त्रिःपाठेनानुपाठे त्रिसमिदिति यथा सामिधेन्यूहृणवत्त्वम्
प्राप्नोत्येवं प्रधानं त्रिगुणमनुगुणं त्रिप्रवेशान्नवत्त्वम् ।
गत्वानन्तं नवाङ्की गणितमिव महन् मुख्यमेतत्प्रसूते
तस्मान्नैतत्प्रधानाधिकमिहबृहती वाक्षरेभ्यो नवभ्यः ॥ ७८ ॥
खोत्थप्रज्ञादिशोऽस्मिन् दशपुरि वसतः पूरविद्याष्टगात्मा

ताः पूर्णं वस्त्वनन्ता स्त्रगहिसमपुसं व्यापनात् पूर्णतास्य ।
पुंपुर्योर्गर्भमात्रोरिव पृथक्त्वेन सत्यानृते च स्तः सरूपे
केऽप्यारूढाःपदं तत्कृति च न विमुखाः केऽपि तत्प्राप्तियोग्याः ७९
रुद्रा एकादशोक्ताः स्वरपि सुरपशून् रोदयन्तीन्द्रियाणि
तेषामेकादशार्था नृपशुनिगडनेषु प्रभूता भवन्ति ।
रागद्वेषद्वयाविप्रतिविषयममी तद्यजाः स्युर्विकारा
स्तद्वन्तस्तेऽपि चैकादश यदिहि सिनोत्येक एकैकमेषाम् ॥ ८० ॥
वन्द्यप्रत्यक्षमेतद् दृढमथजगती वर्षवद्वर्णमासात्
संघातात्प्रत्यगात्मानधिक इति यदप्यस्ति लोके तथापि ।
वागारभ्यो विकारः प्रकृतिरविकृतिद्वादशाहादिवत्का-
प्यस्त्येषां सान आत्मा शमभिरधिगतो वैकृतानैनमीयुः ॥ ८१ ॥
न त्रेतादौ सधर्मः सकलुषसमये नापि भूरादिषट्के
नो पातालेषु सप्तस्वपि तु कृतयुगे सत्यलोके च सोऽस्ति ।
तस्माद्या सर्वसिद्धा तिथिरियमपि न स्वाप्तयेऽतीवशस्ता
नो वा लोकास्तयोऽन्ता इति मखतपसी श्रेयसे नात्मचर्चा ॥ ८२ ॥
एतर्ह्यत्रैव देवा इव मुनिमनुजा यान्ति सार्वात्म्यमित्या-
द्युक्तेः सोऽहं मनोधीदशकमपनयन्नग्निवाय्वर्कतुल्यः ।
सङ्गी वा सङ्ग्यपि स्यात्त्रिदशगणमदन्त्येव धर्मादयस्ते
येऽतिछन्दोऽभिधानास्तिमिरमतिगता एवमद्वैतसिद्धिः ॥ ८३ ॥
तदयं संग्रहो भावनिर्णये गूढवर्णने ।
अष्टावक्राय कूटोक्तौ यद्यनेकेन वर्ण्यते ॥ ८४ ॥
तत्त्वं धीः साक्षिसाक्षे श्रुतिषु कृतिपरोऽस्त्यस्य कर्तापि सोता
पञ्चानां षष्ठमेतत्खमयसमतिकैस्तैः करोत्यष्टमोऽन्यः ।
सोऽहं साक्षी ततोऽन्यो गुणमयमखिलं चिन्मयास्ते सदुःखा
चित्स्यादुःखीतरा सा शमयुगे हि चिदद्वैतभागष्टवक्रः ॥ ८५ ॥
न वेद्यं युक्तितो लभ्यं न च वेदो गुरुं विना ।
अष्टावक्रयवक्रीतकथाभ्यामेतदीरितम् ॥ ८६ ॥
क्षिप्रं गर्वेण नश्यन्ति विद्यायुर्वर्धिता अपि ।
यवक्रीतोऽथ मेधावी मुनिपुत्रौ यथा पुरा ॥ ८७ ॥
निर्गुणः परमात्मा हि देहं व्याप्यावतिष्ठते ।
इत्युक्त्वाह कपीन्द्राय नाहमन्येन लङ्घये ॥ ८८ ॥

केशवानुगृहीतानां दुर्लभं सुलभं भवेत् ।
अहो भीमस्य हनुमद्दर्शनं गन्धमादने ॥ ८९ ॥
भगवद्भक्तिपीयूषरसान्नैवापरो रसः ।
इति कापेयदेहेऽपि हनूमांस्तत्परोऽवसत् ॥ ९० ॥
न स्वर्गो नापवर्गो वा भगवत्कथया समः ।
तौ त्यक्त्वा तत्परोह्यासिद्धनुमानिति दर्शितम् ॥ ९१ ॥
सर्वत्र भगवद्भक्ता जयन्त्यतिबलानपि ।
इति भीमोऽपि रक्षांसि पराजित्येष्टमाहरत् ॥ ९२ ॥
तीर्थयात्राखलबधौ समानाविति दर्शयन् ।
पपाठ तीर्थयात्रान्ते जटासुरबधादिकम् ॥ ९३ ॥
कृष्णादृतानां सर्वत्र भवेत्सत्कार एवहि ।
वृषपर्वार्ष्टिषेणाभ्यां सत्कृताः पाण्डवा इति ॥ ९४ ॥
येषामस्ति कृपाकाङ्क्षी तेषां नास्ति पराभवः ।
इति पक्षमृधं भीमजयं दर्शितवान्मुनिः ॥ ९५ ॥
केशवानुगृहीतान्हि कृतेऽत्यन्ते हि साहसे ।
क्षमन्ते देवता एवं दर्शितं धनदेक्षणे ॥ ९६ ॥
देवतासु प्रसन्नासु देवशत्रून्विनाशयेत् ।
इति देवेन्द्रदत्तास्त्रो निजघानाऽर्जुनोऽसुरान् ॥ ९७ ॥
स्वविद्यां न विना लक्ष्यं दर्शयेत्सुकृती वृथा ।
इति दर्शितवान्व्यासः फाल्गुनास्त्रनिवारणे ॥ ९८ ॥
शरीराद्बलतो ब्रह्मबलं वेद्यं महत्तरम् ।
भीमं ह्याजगराग्नेस्तं धर्मराजो ह्यमोचयत् ॥ ९९ ॥
वेद्यं ब्रह्माद्वयं स्तुत्यं वेत्ता ब्राह्मणः स्मृतः ।
न वेद्यं ब्रह्मणो भिन्नं न तज्ज्ञाद्ब्रह्मणः परः ॥ १०० ॥
शीलवृत्तगुणा मुख्या ब्रह्मबोधो सुखाप्तये ।
गुणहीना वृथा जातिर्दुःपरीक्ष्या च सङ्करात् ॥ १०१ ॥
पिशुनायाभयं दातुं न सत्यं मतिमांस्त्यजेत् ।
साधूनामभयायेह त्यजेत् सत्यमपिध्रुवम् ॥ २ ॥
स्तेनेषु च प्रियाख्यानादहिंसा श्रेयसी मता ।
अहिंसातः परात्माख्यप्रियाख्यानं विशिष्यते ॥ ३ ॥
फलार्थिनः प्रवृत्तिः स्यात् ततः कर्म ततो जनिः ।

फलभौमस्ततो रागो नाभुक्ते तस्य संभवः ॥ ४ ॥
ततः फलार्थित्येवं संसारस्त्रिगुणात्मकः ।
अविच्छेदं प्रयातीति मोक्षायैव प्रयत्यताम् ॥ ५ ॥
अखण्डैक्यावबोधेन मोक्षप्राप्तिर्न चान्यथा ।
तत्त्वं पदार्थयोः सम्यग्विवेकेनावबोधनम् ॥ ६ ॥
भवे तत्रेष्यते प्रत्यक् तत्पदार्थविवेचनम् ।
स चावस्थात्रयाद्भिन्नः प्रत्यगात्मा निरामयः ॥ ७ ॥
सर्ववृत्तिकृताभासः साक्षी सर्वत्रगः परः ।
मनोबुद्धीन्द्रियातीतो मनोबुद्ध्यादिभासकः ॥ ८ ॥
पृथक् कृत्य मनो बुद्धीन्द्रियादिकमशेषतः ।
पश्येत् साक्षिणमात्मानमसङ्गं पुरुषं परम् ॥ ९ ॥
तथा सर्वत्रगं तेजो नामरूपे विविच्य च ।
ब्रह्माद्वयं विनिश्चित्य पश्येदैक्यं परात्मनोः ॥ १० ॥
अद्वयानन्द आत्मा यः प्रत्यगात्मा स एव हि ।
प्रत्यक् चिदात्मा यश्चायं सोऽद्वयानन्द एव हि ॥ ११ ॥
सर्वधीवृत्त्यधिष्ठानं प्रत्यगात्मा य आन्तरः ।
स च व्योमाद्यधिष्ठानमद्वयानन्द एव हि ॥ १२ ॥
यत्र चित्साक्षिणि स्वान्तवृत्तयः कल्पिता मृषाः ।
तस्मिन्नेवाद्वये ब्रह्मण्यध्यस्तं सकलं जगत् ॥ १३ ॥
सर्वज्ञानाद्भवेन् मुक्तिर्नान्यथा साधनायुतैः ।
तद् ज्ञानं भगवद्भक्तिलभ्यं गर्वनिवारणात् ॥ १४ ॥
गर्वः सर्वात्मना हेयः संपत्स्वपि सतीषु च ।
नोचेद्भ्रंशो भवेत् पुंसो नहुषस्येव संपदः ॥ १५ ॥
सन्त एव गतिर्लोके भ्रष्टानामपि योगिनाम् ।
दर्शनाद्भाषणाद्यद्वन्नहुषस्य युधिष्ठिरः ॥ १६ ॥
ब्रह्मज्ञानाद् ब्रह्मविदामवज्ञानात् पतन्त्यधः ।
तज्ज्ञानात्तज्ज्ञभक्त्या च दिवं यान्ति तथैव हि ॥ १७ ॥
एवमाजगरेऽदर्शि तात्पर्यं सद्गिरां मुनेः ।
मया कृष्णप्रसादेन तत्रैवेदं समर्पितम् ॥ १८ ॥
एवं ज्ञानवतां नित्यं हरिः संनिहितो भवेत् ।
इति पाण्डून् स्वयं कृष्णः स्वमात्मानं न्यदर्शयत् ॥ १९ ॥

सर्वसिद्धिर्भवेत् पुंसां सद्यः कृष्णनिरीक्षणे ।
मार्कण्डेयसमाजेन पाण्डवानां यथा भवेत् ॥ २० ॥
शास्त्रतत्त्वपरिज्ञानं श्रुतेन महतां मुखात् ।
सर्वसिद्धिर्भवेन्नातः सिद्धिरन्यावशिष्यते ॥ २१ ॥
निजभक्तान्स्वयं स्तौति भगवान् भक्तवत्सलः ।
इत्यस्तौषीत्स्वयं कृष्णो युधिष्ठिरनृपं वने ॥ २२ ॥
सर्वज्ञेनापि प्रष्टव्याः सन्तः सर्वार्थदर्शिना ।
इत्यपृच्छन्मुनिं राजा मार्कण्डेयं युधिष्ठिरः ॥ २३ ॥
धर्माधर्मफलं पुंसां भवेदव्यभिचारतः ।
अतो धर्मं चरेत् प्राज्ञो नाधर्मं हीत्युपक्रमे ॥ २४ ॥
स्वधर्मोऽकाम्य एवेष्टः सत्त्वशुद्ध्यात्मबोधदः ।
बोधवन्तः सदानन्दपदे तिष्ठन्ति सज्जनाः ॥ २५ ॥
चातुर्विधां सकामानां बुध्वा धर्मादिगोचरे ।
अकामः सन्हरे राज्ञाऽनुष्ठानतत्परो भवेत् ॥ २६ ॥
इहैव भोगिनां सौख्यं परत्रैव तपस्विनाम् ।
इहामुत्रातिपुण्यानां नामुत्रेहाघकारिणाम् ॥ २७ ॥
ब्राह्मणानां महाभाग्यं श्रुत्वा तद्भावसिद्धये ।
यतेत धीर इत्याह पूर्वेषां चरणं सताम् ॥ २८ ॥
आर्जवादनृतत्यागात् स्वधर्मानुष्ठितेः सताम् ।
स्तुतेरनिन्दनादन्नदानेनातिथिपूजनात् ॥ २९ ॥
आनृशंस्यान्निवासाच्च तीर्थे तेजस्विसन्निधौ ।
सद्वस्तुवीक्षणात् सन्तो मृत्युं साक्षाज्जयन्ति हि ॥ ३० ॥
स्वाराध्यो धर्म एकान्ते दुराराध्यः परिग्रहे ।
अत्रिगौतमवृतान्तात्त्याज्यः सर्वपरिग्रहः ॥ ३१ ॥
स्वाध्यायादग्निहोत्राच्च दानादाचाररक्षणात् ।
ध्यानाद्भगवतो ज्ञानात् संसृतिं निस्तरेत्पुमान् ॥ ३२ ॥
राज्यं स्वर्गो धियः शुद्धिर्भक्तिर्ज्ञानं हरेर्नृणाम् ।
धर्मादेवेति संप्राह तार्क्ष्यं प्रतिसरस्वती ॥ ३३ ॥
येन केनापि रूपेण भक्तान् रक्षति केशवः ।
स सदाराध्य इत्याह मुनिर्मात्स्यनिदर्शनात् ॥ ३४ ॥
अत्यलौकिकलीलानामाधारोऽखिलशक्तिमान् ।

युद्धप्रजावनादीनि कुर्वाणष्वेपि राजसु ।
ब्रह्मविद्याबलं दृष्टमित्याह शिविशंसने ॥ ५१ ॥
शरणागतसन्त्राणं सर्वधर्मेभ्य उत्तमम् ।
इति स्वमांसदानेन शिविना रक्षितोऽण्डजः ॥ ५२ ॥
यो दत्वा श्लाघते यश्चासूयद्यश्चार्थिवाञ्छितम् ।
ज्ञात्वेङ्गितैश्च तं स्तौति न ददाति स्वमर्थिने ॥ ५३ ॥
यश्चार्थितस्तु सत्पात्रे श्रद्धाक्षान्तिपुरः सरम् ।
ददात्यदेयमप्येते श्रेष्ठाः स्युरुत्तरोत्तरम् ॥ ५४ ॥
चतुर्णामष्टकादीनां नृपाणां चरितैर्मुनिः ।
जगादेति सतां धर्मप्रवृत्तेरुपपत्तये ॥ ५५ ॥
सत्पात्रे श्रद्धया दानं प्रशस्तं विधिनार्पितम् ।
अन्यथा तद्वृथेत्याह दानप्रस्तावने मुनिः ॥ ५६ ॥
भावशुद्धिमृते दानं तपोयज्ञादि यत्कृतम् ।
सर्वं वृथा तदित्याह सत्त्वशुद्धिप्रशंसने ॥ ५७ ॥
सत्यं ब्रह्म जगन्मिथ्या जीवो ब्रह्मैव केवलम् ।
इति ज्ञानेन मोक्षः स्यादित्याहात्मावबोधने ॥ ५८ ॥
अहं ममेत्यविद्याया बोधतत्त्वधिया कृते ।
स्वप्रकाशतया प्रोक्तं तत्त्वं भाति चितिं विना ॥ ५९ ॥
चक्षुः सन्निहितं कुम्भं यथा सूर्योऽवभासयेत् ।
चित्तवृत्या तथा व्याप्तं चिदात्मैव प्रकाशयेत् ॥ ६० ॥
स्वप्रकाशं चिदात्मानं वृतिरात्मान्तरं विना ।
भासयेद्भास्करमिव चक्षुः सूर्यान्तरं विना ॥ ६१ ॥
वृत्तिव्याप्तिमपेक्ष्यैव वेद्यत्वं प्राहुरात्मजः ।
चिदितरानपेक्षत्वादवेद्यत्वं तथागमात् ॥ ६२ ॥
एवं बोधे कृतार्थः स्यात्तत्सिध्यै श्रवणादिकम् ।
श्रुतिमौलिगिरां कार्यं शान्तिदान्त्यादिपूर्वकम् ॥ ६३ ॥
तपसा स्वर्गगमनं भोगो दानेन जायते ।
ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः ॥ ६४ ॥
सत्त्वशुद्ध्या भवेज्ज्ञानं तपोदानादिभिश्चसा ।
इति ज्ञानं प्रशंस्यापि पुनर्दानादिकीर्त्तनम् ॥ ६५ ॥
भगवत्तेजसाक्रान्ता असुरानपि दुःसहान् ।

घ्नन्ति सन्त इति प्राह धुन्धमारकथाशयम् ॥ ६६ ॥
न तपोऽध्ययनादीनि तत्त्वज्ञानं विना नृणाम् ।
फलन्त्यभयदानेन कौशिकोऽत्र निदर्शनम् ॥ ६७ ॥
कलामात्रावतारो हि हरेरद्भुतकर्मकृत् ।
इति वैन्यनृपाख्याने तात्पर्यं मुनिरब्रवीत् ॥ ६८ ॥
यावत्कीर्तिर्वार्ता वाप्यभवत्स्वर्नरकेऽथवा ।
पुमानस्तीति जानीयादिन्द्रद्युम्ननिदर्शनात् ॥ ६९ ॥
बलाका पक्षिणी येन दृष्टिपातेन पातिता ।
धर्मव्याधोपदेशेन सन्मार्गं प्राप यो मुनिः ॥ ७० ॥
पतिशुश्रूषणं स्त्रीणां सर्वेज्यादिसमर्पकम् ।
पतिव्रतानामित्याह पातिव्रत्यप्रशंसने ॥ ७१ ॥
पित्रोः शुश्रूषया व्याधः सिद्धः पत्युः पतिव्रता ।
सिद्ध्यन्ति ब्राह्मणा वह्नेर्योगिनस्त्वात्मसेवया ॥ ७२ ॥
न जातिः कारणं धर्मे किं त्वार्जवमुख्यगुणाः ।
सेश्वरानुग्रहादत्र धर्मव्याधो निदर्शनम् ॥ ७३ ॥
आर्जवाद्धर्मचरणात् सत्त्वशुद्धिस्ततो नृणाम् ।
वैराग्यं सद्विवेकात्स्यान् मुमुक्षुत्वं शमादिभिः ॥ ७४ ॥
गुरूपदेशनाद् वेदमौलिवाक्यविचारणात् ।
श्रवणान् मननाद् ध्यानात् तत्त्वज्ञानोदयो भवेत् ॥ ७५ ॥
ज्ञानेनानन्दरूपे स्वेऽवस्थानं मोक्ष इष्यते ।
कृतकृत्यतया तृप्तो जीवन्मुक्तो भवेत्ततः ॥ ७६ ॥
इत्युक्तं मुनिना धर्मव्याधोक्त्या सारनिर्णये ।
ब्राह्मणानां प्रशंसायां पित्रोः शुश्रूषणस्य च ॥ ७७ ॥
योगवैराग्यबोधानां हेतवोऽनेकधोदिताः ।
जीवानां पारतन्त्र्यं च स्वातन्त्र्यं कथितं हरेः ॥ ७८ ॥
देवानामपि दुःखं स्यात् पराभवस्य चिन्तकम् ।
स्पर्धादिनेति संप्राह मुनिराङ्गिरसे स्फुटम् ॥ ७९ ॥
कामाग्नेरुद्भवोऽसह्योऽप्यग्नेः स्त्रीसन्निकर्षतः ।
न वै स्त्रीसन्निधौ स्थेयमित्याहाग्निनिदर्शनात् ॥ ८० ॥
न धर्ममन्तरा स्नेहः सतां कुत्रापि दृश्यते ।
इत्यग्निप्रार्थिता भार्या अत्यजन्मुनयोऽपि षट् ॥ ८१ ॥

अहो लोकापवादोऽयमसह्यः स्यात्सतामपि ।
अदुष्टा अपि भार्याः स्वास्तत्यर्जुमुनयोऽपि ते ॥ ८२ ॥
जन्मनैव जयन्त्येतां लोकास्तेजस्विनोऽखिलान् ।
इति स्कन्दः सुरान्दैत्यानजयत्स्वेन तेजसा ॥ ८३ ॥
आधिपत्यं प्रियत्वं च स्वत्त्वं पूज्यत्वमद्भुतम् ।
लभन्ते जन्मनैवार्याः सर्वस्यापि कुमारवत् ॥ ८४ ॥
साधूनभिबुभूषुर्हि स्वममेवाभिभूयते ।
इति सन्दर्शयन्नाह घोषयात्रां महामुनिः ॥ ८५ ॥
सर्वथोपकृतः सद्भिर्नखलः खलतां त्यजेत् ।
मोचितोऽपि मृतेर्बन्धाद्धार्तराष्ट्र इवाधमः ॥ ८६ ॥
न त्यजन्त्यार्यतामार्याः पीडिता अपि दुर्जनैः ।
इति पार्थाः खलान् शत्रूनपि मोक्तुं समुद्यताः ॥ ८७ ॥
खलसंसर्गतः सन्तोऽपि तत्त्वं भजन्त्यमी ।
इति दुर्योधनोक्त्यापि दुर्वासाः पाण्डवान् गतः ॥ ८८ ॥
दौर्वाससे तु सार्वात्म्यं कारुण्यं चेरितं हरेः ।
तत् तृप्त्या हि जगत् तृप्तमत्यल्पेनापि तृप्यतः ॥ ८९ ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
इत्युक्तिः सफला दृष्टा मुनिपाण्डवसङ्गमे ॥ ९० ॥
सुहृत्स्वामी सखा येषां हरिस्तेषां सतां सदा ।
सर्वत्र चिन्तितोऽभ्येति सर्वदुःखापहः स्वयम् ॥ ९१ ॥
तस्मात् सर्वं परित्यज्य मुकुन्दशरणं व्रजेत् ।
इदं शास्त्ररहस्यं तत्सेव्यं सद्भिः सदादरात् ॥ ९२ ॥
पतिव्रतानां धर्माश्च द्रौपदीसत्यभामयोः ।
संवादादधिगन्तव्याः सेव्यास्तासां सुखावहाः ॥ ९३ ॥
न वेदब्राह्मणार्थेऽपि हिंसावद्धी प्रशस्यते ।
इति संदर्शयन्नाह मृगस्वप्ननिदर्शनम् ॥ ९४ ॥
व्रीहिद्रौणिकदृष्टान्ताद्वृत्तिशुद्धोऽतिथिप्रियः ।
अत्यल्पेनापि दानेन सिद्ध्यतीत्येतदीरितम् ॥ ९५ ॥
परस्त्रीस्पर्शमात्रेण जयद्रथदशास्ययोः ।
आद्यः पञ्चसटो जातः सकुटुम्बो हतः परः ॥ ९६ ॥
कार्यार्थी मित्रमन्विच्छन् नृशंसः स्यान्महानपि ।

जघान बालिनं रामो निर्दोषमपि साहसात् ॥ १९७ ॥
ईशोऽप्युपेक्षते तावद्यावदारब्धसंक्षयः ।
रावणोपेक्षणादेव राघवेणोपदर्शितम् ॥ १९८ ॥
पतिव्रताया माहात्म्यं कुलद्वयसुखावहम् ।
भर्तृमृत्युहरं चैव सावित्रीहरिदर्शनम् ॥ १९९ ॥
कर्णो दाता पात्रमिन्द्रो देयं स्वात्मसमं धनम् ।
शक्त्या विनिमयातज्ज्ञो धर्मो नाभिभवेद्रिपुम् ॥ २०० ॥
सर्वत्र चोदितार्थानामुपसंहारवर्णनम् ।
आरण्ये धर्मपार्थसंवादव्याजतः कृतम् ॥ २०१ ॥
येषां धर्मे परा भक्तिस्ततोऽपि परमाहरौ ।
न तेषां स्यात् क्वचिद्धानिरिति तत्र न्यदर्शयन् ॥ २०२ ॥
आपत्कालेऽपि सद्धैर्यं धर्मं सत्यं च रक्षताम् ।
न त्यजन्ति महात्मानो युधिष्ठिरनिदर्शनात् ॥ ३ ॥
दुर्ज्ञेयं तत्त्वमद्वैतं प्रत्यगात्मनि आन्तरम् ।
तज्ज्ञानादेव सार्वज्ञ्यमवाप्नोति कृती नरः ॥ ४ ॥
धर्माच्छमादिसंपत्तेर्दृग्दृश्यसुविवेचनात् ।
ब्रह्मात्मैक्यावबोधेन कैवल्यं दृश्यबाधनात् ॥ ५ ॥
गुरोर्वेदान्तसिद्धान्तश्रवणं तस्य चिन्तनम् ।
ध्यानं तैर्दोषहानेन प्रतिबन्धपरिक्षयात् ॥ ६ ॥
तत्त्वज्ञानोदयान्मोक्षः स्वस्वरूपात्मना स्थितिः ।
स्वतः सिद्धा भवत्तस्मात्साधनेषु परोऽभवत् ॥ ७ ॥
स्वध्यायतपआदानान्निन्दाहङ्कारवर्जनात् ।
स्वधर्मयज्ञानुष्ठानादभयादार्त्तरक्षणात् ॥ ८ ॥
मनःप्राणनिरोधात् तत्त्वंपदार्थविचारणात् ।
पुत्रवित्तेषणात्यागान्मातापित्रोर्निषेवणात् ॥ ९ ॥
नित्यलुप्तदृशो ध्यानाद् दृश्यमिथ्यात्वचिन्तनात् ।
वासनात्यागतो मायाबाधाद्बोधेन मुक्तता ॥ १० ॥
सार्थभार्याभिषक्तुल्यं दानं चाग्निहुतं शुभम् ।
धर्मोपास्तीहिते साक्षिमनस्तत्त्वेक्षणं हितम् ॥ ११ ॥
दाक्ष्यशीलयशःसत्यैः पुत्रभार्यादिवर्द्धितः ।
सच्छ्रुतेः सत्क्रिया दृश्यत्यागादानन्त्यमश्नुते ॥ १२ ॥

आनृशंस्यात्परोपास्तेः सत्सङ्गात्संयमाद्धि यः ।
कामलोभस्मयक्रोधत्यागात्तत्त्वधिया सुखम् ॥ १३ ॥
पात्रे दानादसत्सक्तित्यागात्तृष्णाक्षयाज्जडे ।
अज्ञानबाधनाद्ब्रह्माद्वैतबोधेन मुच्यते ॥ १४ ॥
पुंदेशश्राद्धयज्ञानां निःस्वत्वाद्यैर्मृतिर्यथा ।
ज्ञानवैराग्यसत्संगहीनस्तद्वत्पुमान्मृतः ॥ १५ ॥
स्वधर्मानुष्ठितेरात्मनियमाद्द्वन्द्वसाम्यतः ।
दयार्जवशमैस्तत्त्वावबोधान्मुक्तिमृच्छति ॥ १६ ॥
लोभमोहाभिमानेर्ष्यालस्यशोकांस्त्यजेद्बुधः ।
धर्मे स्थैर्यं मनःशुद्धिं दमं भूतदयां चरेत् ॥ १७ ॥
कामं मौर्ख्यं च मात्सर्यं दम्भं पैशुन्यमाग्रहम् ।
त्यक्त्वा कामार्थप्राधान्यं धर्मं कुर्यात्प्रतिश्रुतम् ॥ १८ ॥
धर्मप्रतिश्रुतेर्हानान्मृषोक्तेर्धर्मनिर्णये ।
वित्ते सत्यपि कार्पण्यादक्षयं नरकं व्रजेत् ॥ १९ ॥
शीलवृत्तस्वधर्माप्त्या प्रियवादाद्विचारणात् ।
सर्वमैत्र्या हरौ रागाद्धीरो याति परं पदम् ॥ २० ॥
ऋणप्रवासराहित्यात्सन्तोषान्मृत्युवीक्षणात् ।
सन्मार्गसेवनात्सर्ववैराग्यात्सुखभाङ्नरः ॥ २१ ॥
ज्ञानी सर्वसमः पुण्यपुञ्जभाक्कीर्तिभाङ्महान् ।
इश्यक्षयात्सुखावाप्त्या प्रोक्तः सर्वधनी नरः ॥ २२ ॥
आनृशंस्यं परीक्ष्यैव धार्मिकस्य परीक्षणम् ।
दर्शितं धर्मपुत्रेण नाकुले जीवितेऽर्थिना ॥ २३ ॥
आनृशंस्यपरा धीराः षडूर्मिरहिताः स्वयम् ।
सर्वासां सम्पदां स्थानं भवन्तीत्यपि दर्शितम् ॥ २४ ॥
अरणीहरणे भावो यथामति मुनेरयम् ।
दर्शितो हरिपादाब्जमकरन्दाशिषा मया ॥ २५ ॥
आदिरेकोनविंशत्या पर्वभिर्नवभिः सभा ।
आरण्यकं षोडशभिर्धर्ममेवान्वरूपयत् ॥ २६ ॥
तत्रापि भगवत्पादाम्भोजभक्तिरनावृता ।
कर्मादिभिः फलत्वेन कर्त्तव्येति निरूपितम् ॥ २७ ॥
तत्साधनतया धर्माः सर्वे निष्काममावतः ।

वर्णिताः पाण्डवाचारदर्शनेनामुनादरात् ॥ २८ ॥
शरण्यत्वकृतज्ञत्वकारुण्यप्रमुखैर्गुणैः ।
वर्णितोऽलङ्कृतः कृष्णसात्तदाख्यायिकेरणात् ॥ २९ ॥
अर्चनीयस्तथा ध्येयो ज्ञेयः सर्वत्रगो हरिः ।
यज्ञादिभिस्तथाध्यानज्ञानाभ्यां स्वाधिकारतः ॥ ३० ॥
निष्कामधर्मानुष्ठाने धर्मसूनुर्निदर्शनम् ।
शरण्यत्वानुसन्धाने द्रौपद्याचारदर्शनम् ॥ ३१ ॥
कृष्णतत्त्वपरिज्ञाने सव्यसाची निदर्शनम् ।
येन युद्धोद्यतः कृष्णस्तत्त्वोक्त्या विनिवारितः ॥ ३२ ॥
प्रामाण्ये कृष्णवचसां भीमसेनो निदर्शनम् ।
जरासन्धवधादौ हि येनाज्ञानुष्ठिता हरेः ॥ ३३ ॥
समभ्यर्च्यत्वविज्ञाने सहदेवो निदर्शनम् ।
अर्घाभिहरणे येन कृष्णपूजा दृढीकृता ॥ ३४ ॥
धर्मवैराग्यसद्भक्तितत्त्वज्ञानमुखा गुणाः ।
तत्तदाख्यायिकोक्त्या श्रीव्यासेनात्र प्रदर्शिताः ॥ ३५ ॥
महाभागकथाव्याजाद्भगवद्भक्तिसाधनम् ।
यावदस्तिसमग्रं तद्वर्णितं सर्वसिद्धये ॥ ३६ ॥
तीर्थयात्राप्रसङ्गेन सर्वे धर्मा यथायथम् ।
यज्ञदानाद्यो कामा वर्णिताः सत्त्वशुद्धये ॥ ३७ ॥
कृष्णतत्त्वं परं वेद्यं ध्येयं पूज्यं विभागशः ।
मार्कण्डेयमुखेनासौ दर्शयामास भक्तितः ॥ ३८ ॥
आरणेये पुनर्धर्मं धर्मसूनुसमागमे ।
रहस्यं सर्वधर्माणां दर्शयामास सादरम् ॥ ३९ ॥
एवं संक्षेपतो भावा वनपर्वणि वर्णिताः ।
अपि ताः कृष्णपादाब्जे सन्तु तत्रैव भक्तिदाः ॥ ४० ॥
ॐ यं सत्यमेकमिति वेदगिरो वदन्ति ।
ध्यायन्ति यं शिवविरिञ्चिमुखाः सुरेन्द्राः ॥
यज्ञैर्यजन्ति सुधियो यमघापहं श्री ।
कृष्णं तमेव करुणं शरणं व्रजामि ॥

**पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।**
**अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ १ ॥**

संक्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फाल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ २ ॥
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ ३ ॥

अर्जुन उवाच ।

दशवर्षसहस्राणि यत्र सायङ्गृहो मुनिः ।
व्यचरंस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ ४ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन्पुरा ॥ ५ ॥
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठस्त्वेकपादेन वायुभक्षः शतं समाः ॥ ६ ॥

एवं संक्षेपेण वनपर्वतात्पर्यमुपवर्ण्येदानीं तस्य संक्षेपतः सारोद्धारेणोपक्रमोऽप्येवं वर्ण्यते आदिपर्वसभापर्वसारोद्धाररीत्या पूज्यत्वज्ञेयत्वध्येयत्वशरण्यत्वादिगुणैरलङ्कृतं भगवन्तं समाश्रयणीयत्वेन सम्यगुपवर्ण्येदानीं भगवत्तत्त्वं भगवद्भक्तैरेवावबुध्यते नेतरैरिति दर्शयितुं वनस्थानां पाण्डवानां समाश्वासनायागतं भगवन्तं भक्तवात्सल्यावेशेन स्वकीयामवश्यंभाविनीं नियतिं समतिक्रम्य भाषमाणनिजभक्तमुकुटशिरोमणिर्नरावतारोऽर्जुनो भगवत्तत्त्ववर्णनमुखेन स्वाभिमुखीकुर्वन् क्रोधोपशमनं प्रार्थयेत् । तत्र तावद्भगवान् व्यास एवमधर्मरुचीनां दुर्योधनादीनां व्यासादिभिराप्तैरुपदेशेऽपि मैत्रेयशापेऽपि किर्मीरबधेन महाभयेऽपि प्रत्युपस्थिते सति न धर्मे रुचिरुत्पद्यते इत्युक्त्वा संप्रति धर्मरुचीनां पाण्डवानामुपरि परमेश्वरस्य तद्भक्तानां चानुग्रहं पाण्डवानां कृष्णतत्त्वविज्ञानं च वर्णयति जनमेजयं प्रति वैशम्पायनमुखेन वैशम्पायन उवाच पार्थानामित्यादिना । अभिषङ्गेण दुःखेन पराभवेन वा ॥ १ ॥ २ ॥

पुरुषस्य पुरिशयानस्यान्तर्यामिणः परिपूर्णस्य वा अप्रमेयस्याहङ्कारादिवत् प्रमातुमयोग्यस्य विषयित्वात् । अत एव सत्यस्य कालत्रयेऽपि बाधशून्यस्य विषयस्य हि बाधः स्वापादौ दृष्टः अयन्तु विषयित्वादबाध्यस्तद-

बाधसाक्षित्वात् । अतितेजसः त्रिविधपरिच्छेदशून्यचिन्मात्रस्य प्रजापतेः सूत्रविराजोरपि स्वामिनः विष्णोर्व्यापनशीलस्य लोकनाथस्यान्तर्यामिणः धीमतः सर्वज्ञस्य भगवतः कर्माणि कीर्तयामासेति पूर्वेणान्वयः ॥ ३ ॥

तत्र तपस्विनां क्षमैवोचितेति दर्शयितुं भगवतः क्रोधोपशमनाय तदीयं जन्मान्तरीयं तप एव तावदुदाहरति दशेत्यादिना । यत्र सायङ्कालस्तत्रैव गृहं यस्य स सायङ्गृह इत्येकं पदम् ॥ ४ ॥ ५ ॥ ६ ॥

**अवकृष्टोत्तरासङ्गः कृशो धमनि सन्ततः ।**
**तथा कृष्ण महातेजो दिव्यं वर्षसहस्रकम् ॥ ७ ॥**
**अतिष्ठस्त्वमथैकेन पादेन नियमास्थितः ।**
**लोकप्रवृत्तिहेतोस्त्वमिति व्यासो ममाब्रवीत् ॥ ८ ॥**
**क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव ।**
**निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः ॥ ९ ॥**

अवकृष्टोत्तरासङ्गः त्यक्तोत्तरीयवस्त्रः ॥ ७ ॥

तपसः प्रयोजनमाह लोक इति ॥ ८ ॥

क्षेत्रज्ञः महाभूतादिधृत्यन्तं क्षेत्रं पञ्चकोशात्मकं तज्ज्ञः तत्प्रकाशकः अन्तरात्मेत्यर्थः सर्वभूतानां सर्वेषां भूतानां वियदादीनां जरायुजादीनां वा जीवानामादिः परमकारणमतः लयस्थानमवान्तरकारणानामविद्याकामकर्मादीनां क्षेत्रमध्ये अव्यक्तेच्छादिपदैरुपात्तत्वात् । एतेन प्रपञ्चस्य मिथ्यात्वाज्जीवपरयोरैक्याच्चाद्वैतं कृष्णतत्त्वमुक्तं तपसा आलोचनात्मकानां सर्वेषां त्वमेव निधानं निवासभूमिः सनातनो यज्ञस्त्वमेवासि अनादिवेदप्रतिपाद्यस्य भगवद्रूपस्य यज्ञस्य सनातनत्वं युक्तमेव ॥ ९ ॥

**निहत्य नरकं भौममाहृत्य मणिकुण्डले ।**
**प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ १० ॥**
**कृत्वा तत्कर्म लोकानामृषभः सर्वलोकजित् ।**
**अवधीस्त्वं रणे सर्वान् समेतान्दैत्यदानवान् ॥ ११ ॥**
**ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।**
**मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ १२ ॥**

स त्वं नारायणो भूत्वा हरिरासीः परन्तप ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः ॥१३॥

भौमं भूमिपुत्रं प्रथमोत्पादितं सर्वभूतानां प्रथमेनाहङ्कारेण उत्पादितं भूतादिरहङ्कार इति पुराणप्रसिद्धं मेध्यं यज्ञियम् ॥ १० ॥

स त्वं क्षेत्रज्ञः शुद्धचिन्मात्रः भूस्थानीयः सन्नारायणः नरेण परमात्मना सृष्टं नारं स्थूलसूक्ष्मकारणरूपमुपाधित्रयं तदेवायनं निवासस्थानं यस्य स तथा वृक्षाङ्कुरबीजस्थानीयविराट्सूत्रान्तर्यामिरूपो भूत्वा हरिः परिणतबीजसहस्रगर्भफलस्थानीयः श्रीकान्तो भगवान्मुकुन्दः आसीः ईषत्पक्कफलोपमाश्च ब्रह्मसोमशिवादयस्त्वमेव ॥ ११ ॥ १२ ॥ १३ ॥

वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ १४ ॥
परायणं देवमूर्धा क्रतुभिर्मधुसूदनः ।
अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ॥ १५ ॥
शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः ॥ १६ ॥
अदितेरपि पुत्रत्वमेत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो विभुः ॥१७॥
शिशुर्भूत्वा दिवं खं च पृथिवीं च परन्तप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥ १८ ॥

हे पुरुषोत्तम उक्तेभ्यो बीजादिस्थानीयेभ्य उत्तमभूस्थानीयनिर्विशेषचिन्मात्ररूपक्षराक्षरातीत कृष्ण त्वमेव अजो विष्णुर्गरुडध्वजः सर्वविश्वपालकः चराचरगुरुः रुद्रः स्रष्टा प्रजापतिर्दक्षादिरूपः ॥ १४ ॥

परायणं सर्वोत्कृष्टं देवमूर्धा देवश्रेष्ठः त्वमेव सर्वात्मा सर्ववेदरहस्यः सर्ववेदमयः सर्वगतिरपि स्वात्मानं स्वयमेव क्रतुभिरयज इत्यन्वयः । अधृष्य इति पाठेत्वयज इत्यध्याहारः ॥ १५ ॥ १६ ॥

सर्वेषामवताराणां त्वमेव परमं निधानमिति दर्शयति अदितेरपीति ॥ १७ ॥ १८ ॥

संप्राप्य दिवमाकाशमादित्यसदने स्थितः ।
अत्यरोचश्च भूतात्मन् भास्करं स्वेन तेजसा ॥१९॥
प्रादुर्भूय स्वहस्तेषु तेषु तेषु त्वया विभो ।
अधर्मरुचयः कृष्ण निहताः शतशोऽसुराः ॥ २० ॥
सादिता मौरवाः पाशा निसुन्दनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥२१॥
जारूथ्यामाहुतिः क्राथः शिशुपालो जनैः सह ।
जरासन्धश्च शैब्यश्च शतधन्वा च निर्जितः ॥२२॥
तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अवाप्सीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणम् २३
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कसेरुमान् ।
हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम्॥२४॥
एवमेते युधि हता भूयश्चान्याञ्छृणुष्व ह ।
इरावत्यां हतो भोजः कार्तवीर्यसमो युधि ॥ २५ ॥
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ।
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ॥ २६ ॥
द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यसि ।
न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ॥ २७ ॥

संप्राप्य सम्यग्व्याप्य आदित्यसदने सूर्यदेहे भास्करमण्डलाभिमानिनं जीवम् ॥ १९ ॥ २० ॥

सादिताः छिन्नाः मौरवाः आयन्त्रिताः मुर वेष्टने अस्माद्दौणादिके उक्प्रत्यये तद्धितः । मौर्वीशब्दोऽप्यत एव मध्यमस्वरलोपेन निष्पन्नः ॥२१॥

जारूथ्यां नगर्याम् ॥२२॥ अवाप्सीः अवाप्तवानसि भोजवंशजाम् ॥२३॥

सौभं खेचरं पुरम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा ।
त्वयि तिष्ठति दाशार्हे नानृशंस्यं कुतोऽनृजु ।
आगम्य ऋषयः सर्वेऽयाचताभयमच्युत ॥ २८ ॥
युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ।
आत्मनैवात्मसात्कृत्वा जगदासीः परन्तप ॥ २९ ॥
युगादौ तव वार्ष्णेय नाभिपद्मादजायत ।
ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत् ॥ ३० ॥
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ ।
तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः ॥ ३१ ॥
ललाटाज्जातवाञ्छम्भुः शूलपाणिस्त्रिलोचनः ।
इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ॥ ३२ ॥
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत् ।
तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः ॥ ३३ ॥
इष्टवांस्त्वं महत्सत्रं कृष्ण चैत्ररथे वने ।
नैव पूर्वे नापरे वा करिष्यन्ति कृतानि वा ॥ ३४ ॥

नृशंस्यं निर्दयत्वं दीर्घपाठे त्वाङ्पूर्वोऽयं शब्दो ज्ञेयः । आसीनं चैत्यमध्ये त्वां चैत्यमायतनम् । आध्यात्मिकं हृदयपुण्डरीकं बाह्यं देवालयो दिवि तमध्यस्थमित्यपि पाठः नित्यमध्यस्थमिति पाठेऽपि मध्यं हृदयाब्जमेव ॥ २८ ॥

आत्मनैव निमित्तान्तरं विना आत्मसात् आत्ममात्रम् ॥ २९ ॥

यस्य कृतिरिदं सकलमसौ देवोऽपि त्वन्नियोगकर इति विपरिणामेन योज्यम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

सातिकर्माणि देव त्वं बाल एव महाबल ।
कृतवान्पुण्डरीकाक्ष बलदेवसहायवान् ॥ ३५ ॥

कैलासभवने चापि ब्राह्मस्या ह्यवसः सह ॥ ३६ ॥

कर्माणि पूतनाबधादीनि ॥ ३५ ॥ ३६ ॥

वैशम्पायन उवाच ।

एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ ३७ ॥
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥३८॥

एवं तत्पदार्थस्वरूपं प्रपञ्च्य तस्य त्वंपदार्थाभेदमाह एवमिति ॥३७॥ ममैव त्वं ब्रह्मण एव स्वरूपं जीवः तवैवाहं जीवस्यैव शुद्धं रूपं ब्रह्म न ततोऽन्यत् । ये मदीयास्तवैव ते ब्रह्मगता औपाधिकाः सर्वेश्वरत्वादयस्तेऽपि ब्रह्मसाक्षात्कारवतो जीवस्यैवं तस्माद्यो जीवं भगवद्भक्तं द्वेष्टि स ब्रह्म द्वेष्टि यो भगवद्भक्तमनुसरति स भगवन्तमेवानुसरति अद्रोही सन्सर्वभूतेषु भगवद्भावं पश्येद्विशेषतस्तद्भक्तेष्वित्यर्थः ॥ ३८ ॥

नरस्त्वमसि दुर्धर्ष हरिर्नारायणोऽप्यहम् ।
काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ३९ ॥
अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाहं तथैव च ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४० ॥

एवं भगवतोऽभिन्नत्वं भगद्भक्तानामित्युक्तम् । इदानीं स्वस्य चार्जुनस्य चैकावतारत्वमाह नर इति स्वस्यैव सर्वावतारनिधानत्वं सूचयन् स्वरूपे विशेषमाह हरिरिति हरिः भूस्थानीयं शुद्धं ब्रह्म नारायणोऽन्तर्यामी मायानियन्ता नारायणो भगवदवतारश्च एतत्त्रयम् । अहं हीति श्रुतिस्मृतिप्रसिद्धः काले ममावतारिणः प्रादुर्भावसमये नरनारायणावृषी इमं मां भगवन्तं प्राप्तौ मय्येव पर्यवसन्नौ सर्वेषामवताराणां भगवत्स्वरूपाणां च कृष्ण एव परमनिधिः नातः परं भगवत्स्वरूपमित्यर्थः ॥ ३९ ॥

नन्वनयोर्मम त्वं तवात्माहमित्यभेदोपचारो दृष्टो नत्वभेद इत्याशङ्क्याहाऽनन्य इति द्वयोर्हि अन्यत्वं प्रत्यक्षदृष्टं तदिह निरस्यते अपूर्वार्थज्ञापकत्वाद्वाक्यस्य अनन्यत्वमपि औपचारिकमस्त्वित्याशङ्क्याह नावयोरिति

अन्तरं भेदं वेदितुं विचारयितुं जीवेशयोर्भेदो दुर्निरूप्य इत्यर्थः। तथाहि किं देहभेदादात्मभेदः उत आत्मभेदात्। नाद्यः कायव्यूहकृत्रिमोऽन्यव्याप्तेः नान्त्यः उपाधिपरामर्शमन्तरेण भेदस्याविभाव्यमानत्वात्। मुक्तामुक्तात्मानौ जीवेशौ वा न स्वभावभिन्नौ उक्तहेतोः घटमठाकाशवदिति ॥ ४० ॥

**वैशम्पायन उवाच ।**

**एवमुक्ते तु वचने केशवेन महात्मना ।**
**तस्मिन् वीरसमावाये संरब्धेष्वथ माधवम् ॥ ४१ ॥**
**अभिगम्याब्रवीत् क्रुद्धा शरण्यं शरणैषिणाम् ॥४२॥**
**पूर्वं प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिम् ।**
**स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥ ४३ ॥**

समावाये समूहे संरब्धेषु कुपितेषु ॥ ४१ ॥ ४२ ॥

भगवत्यत्यन्तप्रणया क्रुद्धा भगवतोऽतर्क्यमाहात्म्यं जानन्ती। एवं विधस्यात्मतत्त्वस्याधिगमाय ध्यानस्तव न सेवादिना श्रीमन्मुकुन्द एव शरणीकरणीय इत्याह द्रौपदीवाक्येन पूर्वं इत्यादिना। पूर्वं सृष्टेः प्राक्काले त्वामेकमाहुः सदेव सोम्येदमग्र आसीदित्याद्याः श्रुतयः प्रजाभिसर्गे च प्रजापतिं त्वामाहुः सर्वस्य वशी सर्वस्येशान इत्याद्याः श्रुतयः ईशत्वमपि न राजवत् किन्तूपादानत्वेनेत्याह स्रष्टारमिति ॥ ४३ ॥

**विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन ।**
**यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ॥ ४४ ॥**
**ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ।**
**सत्याद्यज्ञोऽसि सम्भूतः काश्यपस्त्वां यथाऽब्रवीत् ४५**
**साध्यानामपि देवानां शिवादीनां त्वमीश्वरः ।**
**लोकभावन भूतेश यथा त्वां नारदोऽब्रवीत् ॥ ४६ ॥**
**ब्रह्मशङ्करशक्राद्यैर्देववृन्दैः पुनः पुनः ।**
**क्रीडसे त्वं नरव्याघ्र बालः क्रीडनकैरिव ॥ ४७ ॥**

**द्यौश्च ते शिरसा व्याप्ता पद्भ्यां च पृथिवी प्रभो ।**

**जठरं ते इमे लोकाः पुरुषोऽसि सनातन ॥ ४८ ॥**

विष्णुः विशतीति विष्णुः अन्तः प्रविष्टः शास्ता जनानामिति श्रुतेः कारयिता क्रिया कर्त्ता कर्म च त्वमेवासीति पादचतुष्टयार्थः ॥ ४४ ॥

क्षमा दुःखसहिष्णुता सत्यं सत्पृथिव्यप्तेजांसि यत् वाय्वाकाशौ तदात्मकं तस्माच्च सम्भूतो यज्ञोऽपि त्वमसि ॥ ४५ ॥

भूतभावन वियदादिस्रष्टः लोकभावनेतिपाठः भूतेश भूतानियन्तः य आकाशमन्तरो यमयतीत्यादिश्रुतेराकाशादेरपि नियम्यत्वादस्मदादिवच्चेतनत्वं द्रष्टव्यं तत्र चेतनानुपलम्भस्त्वरणिस्थाग्नेरिवानभिव्यक्तत्वान्नत्वभावादिति भावः ॥ ४६ ॥

ब्रह्मादिनियन्तृत्वं वैश्वरूप्यं चाह द्वाभ्यां ब्रह्मेति ॥ ४७ ॥ ४८ ॥

**विद्यातपोभितप्तानां तपसा भावितात्मनाम् ।**

**आत्मदर्शनतृप्तानामृषीणामसि सत्तमः ॥ ४९ ॥**

**राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।**

**सर्वधर्मोपपन्नानां त्वं गतिः पुरुषर्षभ ॥ ५० ॥**

**त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे ।**

**लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।**

**नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ५१ ॥**

विद्या वेदाधिगमो ब्रह्मचारिधर्मस्तदर्थानुष्ठानं गृहस्थधर्मः तपसा कृच्छ्रचान्द्रायणादिना वानप्रस्थधर्मेण च भावितात्मनां शोधितचित्तानाम् अत एवात्मदर्शनतृप्तानां यतीनां सत्तमः सत्यं स्वप्नेन्द्रजालादि प्रतिभासिकं सत्यतरो व्यवहारः सत्यतमं ब्रह्म इतरयोर्बाधावधिभूतत्वात् ॥ ४९ ॥

सर्वे धर्माः पापपुण्यादयः तैरुपपन्नानामपि त्वमेव गतिः दीनदयालुत्वात्पापिष्ठानामपि समुद्धर्तेति भावः ॥ ५० ॥

प्रभुर्नियन्ता तत्पदार्थ ईश्वरः विभुर्व्यापकोऽनात्मत्वेन मन्यमानः अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इति मैत्रायणीये भूतात्मपदस्य जीवे रूढिदर्शनात् । तथा

च त्वमेव सर्वात्मना विचेष्टसे कर्माणि कुरुषे त्वयि सर्वं प्रतिष्ठितं लोकपालादिपदस्य त्वमेव प्रापक इत्यर्थः ॥ ५१ ॥

मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ॥ ५२ ॥
साहं ते दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ॥५३॥
पुण्या द्वारवती तत्र यत्रास्रौ मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः ॥५४॥
ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ ५५ ॥
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥५६॥
त्रैलोक्ये पुण्डरीकाक्षो विष्णुर्देवः सनातनः ।
अव्ययात्मा महात्मा च क्षेत्रज्ञः परमेश्वरः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ ५७ ॥

अस्यैव व्याख्या मर्त्यता चेति मर्त्यता संसारः भूतानां साधारणजीवानाममृतत्वं मुक्तिः दिवौकसां दिव्यदृष्टिमतां सात्त्विकानाम् ॥ ५२ ॥

एवं स्वर्गापवर्गार्थिभिः कृष्ण एव शरणीकरणीय इति कृष्णस्तुतिप्रसङ्गादुक्तं सम्प्रति दृष्टफलार्थमपि स एवानुसर्त्तव्य इत्याह सेति। अत्रात्मनि कृष्णस्य करुणोत्पादनार्थं दुःखनिवेदनं तत्प्रसङ्गेन महामहिम्नामपि संसारिणां दुर्गतिः प्रदर्शिता वैराग्योत्पादनाय प्रणयाद्विश्रम्भादित्यर्थः ॥ ५३ ॥

एवं प्रपन्नां द्रुपदात्मजां हरिः
स्वयं समाश्वास्य विचित्रभाषणैः ।
कालः प्रतीक्ष्यस्त्विति पार्थभाषितं
सत्यं चिकीर्षुः प्रययौ कुशस्थलीम् । १ ।
तीर्थयात्राप्रसङ्गेन धीरो ब्रह्मर्षिसत्तमः ।

वर्णयामास वेदोक्तं कृष्णतत्त्वं नृपं प्रति । २ ।
सनातनो धर्मो योगः ।
इज्याचारदमो हिंसा दानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनमिति

याज्ञवल्क्योक्तः तत्रात्मदर्शनाख्यधर्मस्यात्मनोऽन्यत्वात्स हि धर्म इति समानाधिकरणः तदेव स्पष्टयति ये चेत्यादिना ।

एवं हरेर्धाम कुशस्थली पुरी
सर्वोत्तरा सर्वफलाश्रयाश्रया ।
यत्रास्ति नित्यं भगवानधोक्षजः
क्रीडन् श्रिया ध्येयपदो विचक्षणैः ३-॥५४॥५५॥५६॥५७॥

यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् ।
अनादिनिधनं देवं प्रभुं नारायणं विभुम् ॥ ५८ ॥
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।
देवापि यं न पश्यन्ति सर्वतेजोमयं शुभम् ॥ ५९ ॥
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन्दुष्प्रवेश्यं च दानवैः ॥ ६० ॥
प्राच्यां नारायणस्थानमिरावती विराजते ।
यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ॥ ६१ ॥
भासयन् सर्वभूतानि सुश्रियाभिविराजते ।
नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ॥ ६२ ॥

इदानीं हरेर्धामप्रसङ्गेन युधिष्ठिरं प्रति गन्धमादने धौम्येन प्रदर्शितं लोकान्तरमुपवर्ण्य वैकुण्ठ श्रीपतेर्धामोपवर्णयति यमिति प्रकृतेः प्रपञ्चभूतात्मिकायाः प्रकृतिमुपादानम् ॥ ५८ ॥

ब्रह्मणश्चतुर्मुखस्य ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

प्राप्नुवन्ति गतिं ह्येतां यतीनां कुरुसत्तम ।
न तं ज्योतींषि सर्वाणि प्राप्य भासन्ति पाण्डव ६३

स्वयं प्रभुरचिन्त्यात्मा तत्र ह्यति विराजते ।
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ॥ ६४ ॥
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।
योगसिद्धा महात्मानो लोभमोहविवर्जिताः ॥६५॥
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।
स्वयम्भुवं महात्मानं देवं धर्मं सनातनम् ॥ ६६ ॥
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर ॥ ६७ ॥

स्वप्रकाशत्वं धाम्नो निरूपितं स्पष्टयति न तमिति ॥ ६३ ॥
तस्य भगवद्भक्त्यैकगम्यत्वमाह स्वयमिति ॥ ६४ ॥
भगवद्भक्तान् तत्त्वज्ञानतिवर्त्याज्ञानतत्कार्यनिवृत्तिर्भगवत्प्रसादात्स्वत एव सिद्धेत्याह परेणेति ॥ ६५ ॥

तद्धामप्राप्तानामनावृत्तिमाह तत्रेति ॥ ६६ ॥
ध्रुवमक्षयमव्ययमिति उत्पत्तिह्रासनाशशून्यमित्यर्थः । एतच्च भगवतो वैकुण्ठाख्यं धाम नित्यं ब्रह्माण्डान्तर्वर्तित्वेऽपि तदधिष्ठानभूतभगवल्लीलाविग्रहवदविनाशित्वादिति स्पष्टमेवात्राभिहितमिति द्रष्टव्यं प्रणम नमस्कुरु॥६७॥

हन्त ते वर्णयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ ६८ ॥
अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने ।
स एष पुरुषव्याघ्र पीतवासा जनार्दनः ॥ ६९ ॥
एकः कर्ता विकर्ता च भूतात्मा भूतकृत्प्रभुः ।
अचिन्त्यं महदाश्चर्यं पवित्रमिति चोच्यते ॥ ७० ॥

हरेर्धामाखण्डं प्रकृतिविधुरं कारणमपि
ध्रुवं भक्त्या विष्णोर्व्रजति पुरुषः शान्तकलनः ।
इति स्वाप्तं व्याप्तो द्रढयति विविच्यार्थमधुना

लयेऽपि श्रीकान्तं मुनिरपि यथापश्यदतुलम् ॥ १ ॥
पृष्टो मृकण्डुतनयो विपिने मुकुन्द
पादाम्बुजान्तिक इदं रविजात्मजेन ।
प्रोवाच कृष्णचरणाम्बुजसक्तचेता
अत्यादराद्धरिजनेषु रतिप्रवृद्ध्यै ॥ २ ॥
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे
नष्टे देवासुरगणे समुत्सन्ने महोरगे ॥ ३ ॥
शयानममितात्मानं फुल्लोत्पलनिकेतनम्
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ ४ ॥
तस्मादिच्छाम्यहं श्रोतुं सर्वहेत्वात्मिकां कथामिति

पृष्टो युधिष्ठिरेण मार्कण्डेय उवाच हन्तेत्यादि स्वयम्भुवे अजन्मने पुरुषाय पूर्णाय नित्यैकरूपाय शाश्वतायानादये ऽव्ययाय नित्याय॥ ६८॥

अव्यक्ताय प्राकृतरूपादिरहिताय सुसूक्ष्माय दुर्लक्ष्याय गुणात्मने मायोपाधये वस्तुतो निर्गुणाय स एष इत्यङ्गुल्या निर्दिशति ॥ ६९ ॥

एकोऽद्वितीयोऽसाधारणगुणाश्रयः कर्त्ता निमित्तं विकर्त्ता विविधरूपकर्त्ता महद्ब्रह्मोपादानभूतः भूतात्मा प्रत्यगात्मा भूतकृत्परमेश्वरः प्रभुः सर्वशक्तिः अचिन्त्यमवाङ्मनसगोचरत्वात् महदाश्चर्यं सर्वाश्चर्यनिधिमायाधिष्ठानभूतत्वात् पवित्रं स्मृतो ध्यातः पूजितः कीर्तितः श्रुतः समन्तादत्यन्तशोधकः ॥ ७० ॥

**अनादिनिधनं भूतं विश्वमव्ययमक्षयम् ।**
**एष कर्ता न क्रियते कारणं चापि पौरुषे ॥ ७१ ॥**
**यद्येषु पुरुषो वेद वेदा अपि न तं विदुः ।**
**सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ॥ ७२ ॥**

विश्वं विश्वात्मकमपि अपरिणामि अत एवाक्षयम् अविनाशि एष पीतवासा कर्तैव न क्रियते एतेन भगवतो वासुदेवस्य योऽयं लीलाविग्रहस्तस्य नित्यत्वमनादित्वं च दर्शितं तच्च व्युत्पादितं प्रारम्भसमये पौरुषे कारणं चायमेव तस्मात् प्रार्थनीयः । शरण्यत्वादिति भावः। य एनमिति वक्तव्ये यद्येषु इत्युक्तिः वेद्यवेदित्रोरत्यन्ताभेदप्रदर्शनार्था वेदा अपि न तं विदुरवाङ्मनसगोचरत्वात् । अतः परमात्मनः निवृत्तं निष्पन्नमेतत्प्रत्यक्षादिगम्यं सर्व-

जगदाश्चर्यमेव स्वस्येन्द्रजालवदसम्भावनीयोत्पत्तिस्थितिकमेव एवमुपक्रम्य प्रलये कृपयैव भगवता प्रदर्शितं स्वीयं शैशवं रूपं भगवज्जठरे सकलं जगच्चेति भगवत्सन्निधौ राजानं प्रत्युवाच ।

यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
सर्वं पश्याम्यहं राजंस्तस्य कुक्षौ महात्मनः ॥ १ ॥
चरमाणः फलाहारः कृत्स्नं जगदिदं विभो ।
अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् ॥ २ ॥
न च पश्यामि तस्याहं देहस्यान्तं कदाचन ।
सततं धावमानश्च चिन्तयानो विशाम्पते ॥ ३ ॥
आसादयामि नैवान्तं तस्य राजन्महात्मनः ।
ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा ॥ ४ ॥
वरेण्यं वरदं देवं मनसा कर्मणैव च ।
ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ॥ ५ ॥
महात्मनो मुखात्तस्य विवृतात् पुरुषोत्तम ।
ततस्तस्यैव शाखायां न्यग्रोधस्य विशाम्पते ॥ ६ ॥
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ।
तेनैव बालवेषेण श्रीवत्सकृतलक्षणम् ॥ ७ ॥
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ।
ततो मामब्रवीद् बालः सुप्रीतः प्रहसन्निव ॥ ८ ॥
श्रीवत्सधारी द्युतिमान् पीतवासा महाद्युतिः ।
अपीदानीं शरीरेऽस्मिन् मामके मुनिसत्तम ॥ ९ ॥
उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीमि ते ।
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।
यया तिमुक्तमात्मानमपश्यं लब्धचेतसम् ॥ १० ॥
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिरङ्गुलीभिर्विराजितौ ॥ ११ ॥
प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ।
दृष्ट्वापरिमितं तस्य प्रभावममितौजसः ॥ १२ ॥
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य ह ।
दृष्टो मया स भूतात्मा देवः कमललोचनः ॥ १३ ॥
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवम् ।

ज्ञातुमिच्छामि देव त्वां मायां चैतां तवोत्तमाम् ॥ १४ ॥
आस्येनानुप्रविष्टोऽहं शरीरे भगवंस्तव ।
दृष्टवानखिलान् सर्वान् समस्तान् जठरे हि ते ॥ १५ ॥
तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत् स्थावरजङ्गमम् ॥ १६ ॥
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
भ्रामयन्तः शरीरे ते सततं परिवर्तिनः ॥ १७ ॥
निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो ।
इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दितम् ॥ १८ ॥
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ।
पीत्वा जगदिदं सर्वमेतदाख्यातुमर्हसि ॥ १९ ॥
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिन्दम ॥ २० ॥
एतदिच्छामि देवेश श्रोतुं ब्राह्मण्यकाम्यया ।
त्वत्त्वः कमलपत्राक्ष विस्तरेण यथा तथा ॥ २१ ॥
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ।
इत्युक्तः स मया श्रीमान् देवदेवो महाद्युतिः ॥ २२ ॥
सान्त्वयन् मामिदं वाक्यमुवाच वदताम्वरः ।

देव उवाच ।

कामं देवापि मां विप्र नहि जानन्ति तत्त्वतः ॥ २३ ॥
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ।
पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः ॥ २४ ॥
ततो दृष्टोऽस्मि ते साक्षाद्ब्रह्मचर्यं च ते महत् ।
अपां नारा इति पुरा संज्ञाकर्म कृतं मया ।
तेन नारायणोऽस्म्युक्तो मम च त्वयनं सदा ॥ २५ ॥
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ २६ ॥
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ २७ ॥
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
द्यौर्मूर्धा खं दिशः श्रोत्रे तथापस्तनुसंभवाः ॥ २८ ॥

सदिशश्च नभः कालो वायुर्मनसि मे स्थितः ।
मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ॥ २९ ॥
यजन्ते वेदविदुषो मां देवयजने स्थिताः ।
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ॥ ३० ॥
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषया ।
चतुःसमुद्रपर्यन्ता मेरुमन्दरभूषणाम् ॥ ३१ ॥
शेषो भूत्वाहमेवैतां धारयामि वसुन्धराम् ।
वाराहं रूपमास्थाय मयेयं जगती पुरा ॥ ३२ ॥
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ।
अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम ॥ ३३ ॥
पिबाम्यपः सदा विद्वंस्ताश्चैव विसृजाम्यहम् ।
ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संस्थितौ विशः ॥ ३४ ॥
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ।
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ॥ ३५ ॥
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ।
यतयः शान्तिपरमा यतात्मानो बुभुत्सवः ॥ ३६ ॥
कामक्रोधद्वेषमुक्ता निःसंङ्गा वीतकल्मषाः ।
सत्त्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः ॥ ३७ ॥
मामेव सततं विप्राश्चिन्तयन्त उपासते ।
अहं संवर्तको ज्योतिरहं संवर्तकोऽनिलः ॥ ३८ ॥
अहं संवर्तकः सूर्यस्त्वहं संवर्तकोऽनलः ।
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ॥ ३९ ॥
ममैव रोमकूपाणि विद्धि त्वं द्विजसत्तम ।
रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशम् ॥ ४० ॥
वसनं शयनं चैव निलयं चैव विद्धि मे ।
मयैव सुविभक्तास्ते देवकार्यार्थसिद्धये ॥ ४१ ॥
कामं क्रोधं च हर्षं च भयं मोहस्तथैव च ।
ममैव विद्धि रोमाणि सर्वाण्येतानि सत्तम ॥ ४२ ॥
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ ४३ ॥
मद्विधानेन विहिता मम देहविहारिणः ।

मयाभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ ४४ ॥
सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ ४५ ॥
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ ४६ ॥
तस्मान्महाफलं विद्धि नराणां भावितात्मनाम् ।
सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितम् ॥ ४७ ॥
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४८ ॥
दैत्या हि सानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ ४९ ॥
तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ ५० ॥
सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥५०॥—॥७१॥७२॥

**कर्मकाले पुनर्देहमविचिन्त्यं सृजाम्यहम् ।**
**आविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ ७३ ॥**
**श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।**
**रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ७४ ॥**
**त्रयो भागा ह्यधर्मस्य तस्मिन् काले भवन्ति च ।**
**अतः काले च संप्राप्ते कालो भूत्वाऽतिदारुणः ॥७५॥**
**त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ।**
**अहं त्रिवर्त्मा विश्वात्मा सर्वलोकसुखावहः ॥ ७६ ॥**
**अभिभूः सर्वतोऽनन्तो हृषीकेश उरुक्रमः ।**
**कालचक्रं तपाम्येको ब्रह्मन्नहमरूपकम् ॥ ७७ ॥**
**शमं च सर्वभूतानां सर्वलोककृतोद्यमम् ।**

स्वयं प्रभुरचिन्त्यात्मा तत्र ह्यति विराजते ।
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ॥ ६४ ॥
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।
योगसिद्धा महात्मानो लोभमोहविवर्जिताः ॥६५॥
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।
स्वयम्भुवं महात्मानं देवं धर्मं सनातनम् ॥ ६६ ॥
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर ॥ ६७ ॥

स्वप्रकाशत्वं धाम्नो निरूपितं स्पष्टयति न तमिति ॥ ६३ ॥

तस्य भगवद्भक्त्यैकगम्यत्वमाह स्वयमिति ॥ ६४ ॥

भगवद्भक्तान् तत्त्वज्ञानतिवर्त्याज्ञानतत्कार्यनिवृत्तिर्भगवत्प्रसादात्स्वत एव सिद्धेत्याह परेणेति ॥ ६५ ॥

तद्धामप्राप्तानामनावृत्तिमाह तत्रेति ॥ ६६ ॥

ध्रुवमक्षयमव्ययमिति उत्पत्तिह्रासनाशशून्यमित्यर्थः। एतच्च भगवतो वैकुण्ठाख्यं धाम नित्यं ब्रह्माण्डान्तर्वर्तित्वेऽपि तदधिष्ठानभूतभगवल्लीलाविग्रहवदविनाशित्वादिति स्पष्टमेवात्राभिहितमिति द्रष्टव्यं प्रणम नमस्कुरु॥६७॥

हन्त ते वर्णयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ ६८ ॥
अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने ।
स एष पुरुषव्याघ्र पीतवासा जनार्दनः ॥ ६९ ॥
एकः कर्ता विकर्ता च भूतात्मा भूतकृत्प्रभुः ।
अचिन्त्यं महदाश्चर्यं पवित्रमिति चोच्यते ॥ ७० ॥

हरेर्धामाखण्डं प्रकृतिविधुरं कारणमपि
ध्रुवं भक्त्या विष्णोर्व्रजति पुरुषः शान्तकलनः ।
इति स्वाप्तं व्याप्तो द्रढयति विविच्यार्थमधुना

लयेऽपि श्रीकान्तं मुनिरपि यथापश्यदतुलम् ॥ १ ॥
पृष्टो मृकण्डुतनयो विपिने मुकुन्द
पादाम्बुजान्तिक इदं रविजात्मजेन ।
प्रोवाच कृष्णचरणाम्बुजसक्तचेता
अत्यादराद्धरिजनेषु रतिप्रवृद्ध्यै ॥ २ ॥
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे
नष्टे देवासुरगणे समुत्सन्ने महोरगे ॥ ३ ॥
शयानममितात्मानं फुल्लोत्पलनिकेतनम्
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ ४ ॥
तस्मादिच्छाम्यहं श्रोतुं सर्वहेत्वात्मिकां कथामिति

पृष्टो युधिष्ठिरेण मार्कण्डेय उवाच हन्तेत्यादि स्वयम्भुवे अजन्मने पुरुषाय पूर्णाय नित्यैकरूपाय शाश्वतायानादये ऽव्ययाय नित्याय ॥ ६८ ॥

अव्यक्ताय प्राकृतरूपादिरहिताय सुसूक्ष्माय दुर्लक्ष्याय गुणात्मने मायोपाधये वस्तुतो निर्गुणाय स एष इत्यङ्गुल्या निर्दिशति ॥ ६९ ॥

एकोऽद्वितीयोऽसाधारणगुणाश्रयः कर्त्ता निमित्तं विकर्त्ता विविधरूपकर्त्ता महद्ब्रह्मोपादानभूतः भूतात्मा प्रत्यगात्मा भूतकृत्परमेश्वरः प्रभुः सर्वशक्तिः अचिन्त्यमवाङ्मनसगोचरत्वात् महदाश्चर्यं सर्वाश्चर्यनिधिमायाधिष्ठानभूतत्वात् पवित्रं स्मृतो ध्यातः पूजितः कीर्तितः श्रुतः समर्त्रादेरत्यन्तशोधकः ॥ ७० ॥

**अनादिनिधनं भूतं विश्वमव्ययमक्षयम् ।**
**एष कर्ता न क्रियते कारणं चापि पौरुषे ॥ ७१ ॥**
**यद्येषु पुरुषो वेद वेदा अपि न तं विदुः ।**
**सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ॥ ७२ ॥**

विश्वं विश्वात्मकमपि अपरिणामि अत एवाक्षयम् अविनाशि एष पीतवासा कर्तैव न क्रियते एतेन भगवतो वासुदेवस्य योऽयं लीलाविग्रहस्तस्य नित्यत्वमनादित्वं च दर्शितं तच्च व्युत्पादितं प्रारम्भसमये पौरुषे कारणं चायमेव तस्मात् प्रार्थनीयः । शरण्यत्वादिति भावः । य एनमिति वक्तव्ये यद्येषु इत्युक्तिः वेद्यवेदित्रोरत्यन्ताभेदप्रदर्शनार्था वेदा अपि न तं विदुरवाङ्मनसगोचरत्वात् । अतः परमात्मनः निवृत्तं निष्पन्नमेतत्प्रत्यक्षादिगम्यं सर्वं-

जगदाश्चर्यमेव स्वस्येन्द्रजालवदसम्भावनीयोत्पत्तिस्थितिकमेव एदमुपक्रम्य प्रलये कृपयैव भगवता प्रदर्शितं स्वीयं शैशवं रूपं भगवज्जठरे सकलं जगच्चेति भगवत्सन्निधौ राजानं प्रत्युवाच ।

यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
सर्वं पश्याम्यहं राजंस्तस्य कुक्षौ महात्मनः ॥ १ ॥
चरमाणः फलाहारः कृत्स्नं जगदिदं विभो ।
अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् ॥ २ ॥
न च पश्यामि तस्याहं देहस्यान्तं कदाचन ।
सततं धावमानश्च चिन्तयानो विशाम्पते ॥ ३ ॥
आसादयामि नैवान्तं तस्य र जन्महात्मनः ।
ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा ॥ ४ ॥
वरेण्यं वरदं देवं मनसा कर्मणैव च ।
ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ॥ ५ ॥
महात्मनो मुखात्तस्य विवृतात् पुरुषोत्तम ।
ततस्तस्यैव शाखायां न्यग्रोधस्य विशाम्पते ॥ ६ ॥
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ।
तेनैव बालवेषेण श्रीवत्सकृतलक्षणम् ॥ ७ ॥
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ।
ततो मामब्रवीद् बालः सुप्रीतः प्रहसन्निव ॥ ८ ॥
श्रीवत्सधारी द्युतिमान् पीतवासा महाद्युतिः ।
अपीदानीं शरीरेऽस्मिन् मामके मुनिसत्तम ॥ ९ ॥
उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीमि ते ।
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नता ।
ययातिमुक्तमात्मानमपश्यं लब्धचेतसम् ॥ १० ॥
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिरङ्गुलीभिर्विराजितौ ॥ ११ ॥
प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ।
दृष्ट्वापरिमितं तस्य प्रभावममितौजसः ॥ १२ ॥
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य ह ।
दृष्टो मया स भूतात्मा देवः कमललोचनः ॥ १३ ॥
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रवम् ।

ज्ञातुमिच्छामि देव त्वां मायां चैतां तवोत्तमाम् ॥ १४ ॥
आस्येनानुप्रविष्टोऽहं शरीरे भगवंस्तव ।
दृष्टवानखिलान् सर्वान् समस्तान् जठरे हि ते ॥ १५ ॥
तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत् स्थावरजङ्गमम् ॥ १६ ॥
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
भ्रामयन्तः शरीरे ते सततं परिवर्तिनः ॥ १७ ॥
निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो ।
इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दितम् ॥ १८ ॥
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ।
पीत्वा जगदिदं सर्वमेतदाख्यातुमर्हसि ॥ १९ ॥
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिन्दम ॥ २० ॥
एतदिच्छामि देवेश श्रोतुं ब्राह्मण्यकाम्यया ।
त्वत्तः कमलपत्राक्ष विस्तरेण यथा तथा ॥ २१ ॥
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ।
इत्युक्तः स मया श्रीमान् देवदेवो महाद्युतिः ॥ २२ ॥
सान्त्वयन् मामिदं वाक्यमुवाच वदताम्वरः ।

देव उवाच ।

कामं देवापि मां विप्र नहि जानन्ति तत्त्वतः ॥ २३ ॥
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ।
पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः ॥ २४ ॥
ततो दृष्टोऽस्मि ते साक्षाद्ब्रह्मचर्यं च ते महत् ।
अपां नारा इति पुरा संज्ञाकर्म कृतं मया ।
तेन नारायणोऽस्म्युक्तो मम च त्वयनं सदा ॥ २५ ॥
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ २६ ॥
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ २७ ॥
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
द्यौर्मूर्धा खं दिशः श्रोत्रे तथापस्तनुसंभवाः ॥ २८ ॥

सदिशश्च नभः कालो वायुर्मनसि मे स्थितः ।
मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ॥ २९ ॥
यजन्ते वेदविदुषो मां देवयजने स्थिताः ।
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ॥ ३० ॥
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषया ।
चतुःसमुद्रपर्यन्ता मेरुमन्दरभूषणाम् ॥ ३१ ॥
शेषो भूत्वाहमेवैतां धारयामि वसुन्धराम् ।
वाराहं रूपमास्थाय मयेयं जगती पुरा ॥ ३२ ॥
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ।
अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम ॥ ३३ ॥
पिबाम्यपः सदा विद्वंस्ताश्चैव विसृजाम्यहम् ।
ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संस्थितौ विशः ॥ ३४ ॥
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ।
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ॥ ३५ ॥
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ।
यतयः शान्तिपरमा यतात्मानो बुभुत्सवः ॥ ३६ ॥
कामक्रोधद्वेषमुक्ता निःसंङ्गा वीतकल्मषाः ।
सत्त्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः ॥ ३७ ॥
मामेव सततं विप्राश्चिन्तयन्त उपासते ।
अहं संवर्तको ज्योतिरहं संवर्तकोऽनिलः ॥ ३८ ॥
अहं संवर्तकः सूर्यस्त्वहं संवर्तकोऽनलः ।
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ॥ ३९ ॥
ममैव रोमकूपाणि विद्धि त्वं द्विजसत्तम ।
रत्नाकराः समुद्राश्च सर्वं एव चतुर्दिशम् ॥ ४० ॥
वसनं शयनं चैव निलयं चैव विद्धि मे ।
मयैव सुविभक्तास्ते देवकार्यार्थसिद्धये ॥ ४१ ॥
कामं क्रोधं च हर्षं च भयं मोहस्तथैव च ।
ममैव विद्धि रोमाणि सर्वाण्येतानि सत्तम ॥ ४२ ॥
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ ४३ ॥
मद्विधानेन विहिता मम देहविहारिणः ।

मयाभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ ४४ ॥
सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ ४५ ॥
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ ४६ ॥
तस्मान्महाफलं विद्धि नराणां भावितात्मनाम् ।
सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितम् ॥ ४७ ॥
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४८ ॥
दैत्या हि सानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ ४९ ॥
तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ ५० ॥
सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥५०॥—॥७१॥७२॥

कर्मकाले पुनर्देहमविचिन्त्यं सृजाम्यहम् ।
आविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ ७३ ॥
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ७४ ॥
त्रयो भागा ह्यधर्मस्य तस्मिन् काले भवन्ति च ।
अतः काले च संप्राप्ते कालो भूत्वाऽतिदारुणः ॥७५॥
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ।
अहं त्रिवर्त्मा विश्वात्मा सर्वलोकसुखावहः ॥ ७६ ॥
अभिभूः सर्वतोऽनन्तो हृषीकेश उरुक्रमः ।
कालचक्रं तपाम्येको ब्रह्मन्नहमरूपकम् ॥ ७७ ॥
शमं च सर्वं भूतानां सर्वलोककृतोद्यमम् ।

एवं प्रणिहितः सम्यक् ममात्मा मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र नच मां वेत्ति कश्च न ॥ ७८ ॥
सर्वलोके च मां भक्ताः पूजयन्ति च शर्वशः ।
यच्च किञ्चित्त्वया प्राप्तमपि क्लेशात्मकं द्विज ।
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ ७९ ॥
यच्च किञ्चित् त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहितः सर्वदेवोऽसौ ममात्मा भूतभावनः ॥ ८० ॥

सृजाम्यहामिति नित्यमेव सन्तं सूर्यवदाविर्भावयामि यथा सूर्य आविर्भवंस्तिरोभवंश्च अस्तोदयाभ्यां न स्पृश्यते किं तु अस्माभिरेव तत्र तौ कल्पितौ एवं नन्दनन्दनेऽपि जननानिधनौ मूढदृष्ट्यैव कल्पितावित्यर्थः॥ ७३—८० ॥

अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ८१ ॥
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत्स्वपिमि विश्वात्मा सर्वभूतानि मोहयन् ॥८२॥
एवं सर्वमहं कालमिहासे मुनिसत्तम ।
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ८३ ॥
मया च दत्तो विप्रप्रवरस्ते ब्रह्मरूपिणा ।
असकृत्परितुष्टेन विप्रर्षिगणपूजितः ॥ ८४ ॥
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विप्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥८५॥
अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥८६॥

ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञेयो हि सुरासुरैः ॥८७॥
यावत्स भगवान् ब्रह्मा न बुद्ध्येत महातपाः ।
तावत्त्वमिह विप्रर्षे विस्रब्धश्चर वै सुखम् ॥ ८८ ॥
ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतो हि स्रक्ष्यामि शरीराणि द्विजोत्तम ॥८९॥
आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥ ९० ॥

अर्धं ममेति पितामहो ब्रह्माण्डात्मा अर्धं ममेति स्वरूपं विकारान्तर्वर्त्ति तदन्तर्वर्त्ति चेति दर्शितं यथा मृद् घटादिकार्यमध्यवर्त्तिनी तद्बहिर्भूता च तद्वत् अत एव सूत्रं विकारावर्त्ति च तथाहि स्थितिमाहेति जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्चेति सूत्राभ्यां नित्यसिद्धेश्वरस्य उपासनासिद्धानामीश्वराणां चाद्यस्य जगत्स्रष्टुः स्वातन्त्र्यम् इतरेषां भूतसृष्टिकाले सन्निधानासामर्थ्यं च उभयेषां गीतवादित्रादिभिस्तयोः साम्यञ्चास्तीति प्रदर्श्य आद्यस्य स्वरूपं महदादिविकाराद्बहिर्भूतं चकारात्तदन्तर्वर्त्ति च स भूमिं सर्वतो वृत्त्वात्यतिष्ठद्दशाङ्गुलमिति वेद एवाविकारस्य रूपस्य स्थितिमाह तस्मात्कृष्णमूर्त्तिर्व्यवहारतो वियदादिवन्नित्येति युक्तमुत्पश्यामः श्रुतिविरोधस्त्वत्र प्रागेव निरस्तः ॥८१॥—॥९०॥

मार्कण्डेय उवाच ।

इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विविधाकृतयः कृताः ॥९१॥
एवं दृष्टं मया राजंस्तस्मिन् प्राप्ते युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतांवर ॥ ९२ ॥
यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः ।
स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ॥ ९३ ॥

अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं मम ॥ ९४ ॥
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥९५॥
एष धाता विधाता च संहर्ता चैव शाश्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ९६ ॥
दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामियमागता ।
आदिदेवमयं जिष्णुं पुरुषं पीतवाससम् ॥ ९७ ॥
सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ९८ ॥

निराधारे लोके हरिपदमृते नास्तिशरणम्
शरण्योऽसौ तस्माद्धरिरखिलदुःखान्धतमसि ।
भवाब्धौ नान्योऽस्मादिति मुनिरसौ धर्मतनयम्
निमित्तीकृत्याह व्रजजनशरण्यं हरिमतः ॥ १ ॥

यदद्वैतं ब्रह्म श्रुतिशतशिरोभिरभिहितम्
पुरा सृष्टेरेकं प्रकृतिविकृतिभ्यां विरहितम् ।
तदेव श्रीवृन्दावनविधुरसौकृष्ण इति तम्
मुनिः प्राहाङ्गुल्या रविजतनयं प्रत्यखिलवत् ॥ २ ॥

य एको मायावी प्रकृतिरखिलस्यापि जगतो
य आदौ सृष्ट्वेदं प्रविशति हरिर्जीवकलया ।
य एवान्ते स्थायी सकलनिजलीलैकचतुरः
स एवायं कृष्णो वदति मुनिरित्थं निजदृशा ॥ ३ ॥

अतः सर्वात्मायं हरिरमृतसाम्राज्यफलदः
शरण्यः संसारे जनिमृतिभयत्राणचरणः ।
सदा पूज्यो ध्येयः श्रुतिशिखरवाक्यैरविरतम्
धिया ज्ञेयो भक्त्या सततमभिधेयः स्वहृदये ॥४॥—॥९१—९८॥

वैशम्पायन उवाच ।

एवमुक्ताश्च ते पार्था यमौ च भरतर्षभौ ।
द्रौपद्या सहिता सर्वे नमश्चक्रुर्जनार्दनम् ॥ ९९ ॥
स चैतान्पुरुषव्याघ्रः साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हो मन्यमानो यथाविधि ॥१००॥
एतस्मिन्नन्तरे राजन्द्रौपदी योषिताम्वरा ।
चिन्तामवाप महतीमन्नहेतोः पतिव्रता ।
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत ॥१०१॥
मनसा चिन्तयामास कृष्णं कंसनिषूदनम् ।
कृष्ण कृष्ण महाबाहो देवकीनन्दनाव्यय ॥ २ ॥
वासुदेव जगन्नाथ प्रणतार्तिविनाशन ।
विश्वात्मन् विश्वजनक विश्वहर्तः प्रभोऽव्यय ॥३॥

एवं मार्कण्डेयमुखेन कृष्ण एव शरण्यत्वात्पूज्यो ध्येयो ज्ञेयश्चेत्युक्तम् इदानीं पुनरपि हरिरेवात्यन्तसङ्कटेषु सहायो भक्तानां नान्य इति शरण्यत्वदृढीकर्ता दुर्वासा नाम मुनिर्वरदानसमये प्रार्थितस्त्वया सशिष्येणास्मत्कुलश्रेष्ठो युधिष्ठिरो वने तस्य द्रौपदीभोजनानन्तरमतिथिना भवितव्यमिति तथास्त्वित्युक्त्वा मुनिर्दुर्वासाः पाण्डवेषु भुक्तवत्सु तथैव द्रौपद्यामपि भुक्त्वावस्थितायां पाण्डवानभ्याजगाम तं धर्मराजो विधिवत्पूजयित्वातिथ्येन न्यमन्त्रयदाह्निकं कृत्वा भगवन् शीघ्रमेहीत्युक्तो मुनिः शिष्यैः सह स्नातुं जगामाथ चाचिन्तयत् कथमयं मां दशसहस्रशिष्यैः सह वर्तमानं भोजयेदिति न्यमज्जत्सलिले सशिष्यो मुनिः एतस्मिन्नेव समये द्रौपदी परमां चिन्तामवापान्नहेतोः सा यदा चिन्तयन्ती कथञ्चिदप्यन्नहेतुं नाविन्दत तदैवानेकजन्माराधितमशरणशरणं दीनबन्धुं कृपासिन्धुमनुग्रहवात्सल्यपारावारीणं भगवन्तं श्रीमन्मुकुन्दं मनसा चिन्तयामासेत्याह भगवान् बादरायणो मुनिः कृष्णं पापकर्मकंसस्य कामादेर्दुष्टराज्ञो वा निषूदनं हे कृष्ण कृष्णेति अत्यादरसूचनार्थं द्विर्वचनं कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः तयोरैक्यं

परं ब्रह्म कृष्ण इत्यभिधीयते इति श्रुतिप्रणीतः कृष्णपदस्यार्थः महान्तौ ब्रह्माण्डपिण्डावष्टम्भक्षमौ बाहू यस्य स बाहुभ्यां धमति संपतत्रिणं द्यावाभूमीं जनयन्देव एकः इति श्रुतेः अव्यय अविनाशिन् अत्र देवकीनन्दनस्याव्ययत्वं वदन्त्या कृष्णमूर्तेरभौतिकत्वं सच्चिदानन्दात्मत्वमुक्तम् । एवमादिर्नाम्नामर्थः शङ्करभगवत्पादीये विष्णुसहस्रनामव्याख्याने एव द्रष्टव्यः ॥ १ । २ ॥

तत्त्वं हरिः श्रुतिगिरां न परं गतिर्वो
नान्यः शरण्य इति वेदविदां मनीषा ।
सर्वात्मना हरिरतोऽर्च्य उदारशीलो
ध्येयोऽवबोध्य इति भारतभाव इष्टः ॥ १ ॥
वेदाः सभारताः पञ्च पाण्डवा हरिनिर्मिताः ।
तन्मतिर्द्रौपदी बोध्या तया कृष्णोऽत्र वर्ण्यते ॥ २ ॥
सा चावपीडिता दुष्टैः क्रोधहिंसादिरूपिभिः ।
दुर्योधनादिभिः कृष्णं शरण्यं शरणं गता ॥३॥—॥९९—१०३॥

प्रपन्नपाल गोपाल प्रजापाल परात्पर ।
आकूतीनां चितीनां च प्रवर्तक नतास्मि ते ॥४॥
वरेण्य वरदानन्त अगतीनां गतिर्भव ।
पुराणपुरुष प्राण मनोवृत्त्याद्यगोचर ॥ ५ ॥
सर्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता ।
पाहि मां कृपया देव शरणागतवत्सल ॥ ६ ॥
नीलोत्पलदलश्याम पद्मगर्भारुणेक्षण ।
पीताम्बरपरीधानलसत्कौस्तुभभूषण ॥ ७ ॥
त्वमादिरन्तो भूतानां त्वमेव च परायणम् ।
परात्परतरं ज्योतिर्विश्वात्मा सर्वतोमुखः ॥ ८ ॥
त्वामेवाहुः परं बीजं निधानं सर्वसंपदाम् ।
त्वया नाथेन देवेश सर्वापद्भ्यो भयं नहि ॥ ९ ॥
दुःशासनादहं पूर्वं सभायां मोचिता यथा ।
तथैव सङ्कटादस्मान्मामुद्धर्तुमिहार्हसि ॥ १० ॥

आकूतीनां चितीनां चेति । धर्माधर्मादिगोचराणां चेतोवृत्तिविशेषा-
णामनन्तकल्याणगुणनिलयं भगवन्तं कृष्णं वर्णयन्ती सभारतवेदमतिर्द्रौपदी
सर्वेश्वरत्वादिगुणको निर्विशेषश्च भगवान् कृष्ण एव पुरुषधौरेयाणां शर-
ण्यत्वेनाभिमतो धर्मादिपुरुषार्थेप्सुभिः केवलभगवदनुरागात्मभक्तीप्सुभिश्च
पूज्यो ध्येयो ज्ञेयश्चेति सकलवेदेतिहासस्मृतिपुराणपौरुषेयप्रबन्धानां च ता-
त्पर्यमिति वर्णयति वरेण्येत्यादिना ग्रन्थेन एवं कृष्णतत्त्वं सर्वाराध्यत्वेनोप-
वर्ण्यत्वेन प्रागेव निश्चितं भगवन्तं प्रार्थयति दुःशासनादिति ॥ ४—१० ॥

वैशम्पायन उवाच ।

एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः ।
द्रौपद्याः संकटं ज्ञात्वा देवदेवो जगत्पतिः ॥ ११ ॥
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः ।
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः ॥ १२ ॥
ततस्तं द्रौपदी दृष्ट्वा प्रणम्य परया मुदा ।
अब्रवीद्वासुदेवाय मुनेरागमनादिकम् ॥ १३ ॥
ततस्तामब्रवीत्कृष्णः क्षुधितोऽस्मि भृशातुरः ।
शीघ्रं भोजय मां कृष्णे पश्चात्सर्वं करिष्यसि ॥१४॥
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् ।
स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ॥१५॥
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते ।
ततः प्रोवाच भगवान्कृष्णां कमललोचनः ॥ १६ ॥
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ।
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ॥ १७ ॥
इति निर्बन्धतः स्थालीमानाय्य स यदूद्वहः ।
स्थालीकण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशवः ॥१८॥

उपयुज्याब्रवीदेनामनेन हरिरीश्वरः ।
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक् १९
आकारय मुनीन् शीघ्रं भोजनायेति चाब्रवीत् ।
ततो जगाम त्वरितः सहदेवो महायशाः ॥ २० ॥

एवंविधद्रौपदीप्रार्थनासमये एव शरणागतार्त्तिहरो हरिरखण्डैश्वर्यादिगुणो भक्तवात्सल्यं प्रकटीकुर्वन् तत्समीपे आविर्बभूवेत्याहैवमित्यादिना ॥ ११—२० ॥

स्नातुं गतान् देवनद्यां दुर्वासः प्रभृतीन् मुनीन् ।
ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणम् ॥२१॥
दृष्ट्वाहारान्सान्नरसान् तृप्त्या परमया युताः ।
उत्तीर्य सलिलात्तस्माद्दृष्टवन्तः परस्परम् ॥ २२ ॥
दुर्वाससमभिप्रेक्ष्य सर्वे ते मुनयोऽब्रुवन् ।
राज्ञो हि कारयित्वान्नं वयं स्नातुं समागताः २३
आकण्ठतृप्ता विप्रर्षे किंस्विद्भुञ्जामहे वयम् ।
वृथा पाकः कृतोऽस्माभिस्तत्र किङ्कुर्वामहे ॥२४॥

दुर्वासा उवाच ।

वृथा पाकेन राजर्षेरपराधः कृतो महान् ।
मास्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा ॥ २५ ॥
स्मृत्वानुभावं राजर्षेरम्बरीषस्य धीमतः ।
बिभेमि सुतरां विप्रा हरिदत्ताश्रयाज्जनात् ॥ २६ ॥
पाण्डवाश्च महात्मानः सर्वे धर्मपरायणाः ।
शूराश्च कृतविद्याश्च व्रतिनस्तपसि स्थिताः ॥२७॥
सदाचाररता नित्यं वासुदेवपरायणाः ।
क्रुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानलः ॥ २८ ॥

तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत ।
इत्युक्तास्ते द्विजाः सर्वे मुनिना गुरुणा तदा ॥२८॥
पाण्डवेभ्यो भयं भीता दुद्रुवुस्ते दिशो दश ।
सहदेवो देवनद्यामपश्यन्मुनिसत्तमान् ।
तीर्थेष्वितस्ततश्चैव विचचार गवेषयन् ॥ ३० ॥
तत्रस्थेभ्यस्तापसेभ्यः श्रुत्वा तांश्चैव विद्रुतान् ।
युधिष्ठिरमथाभ्येत्य वृत्तान्तं च न्यवेदयत् ॥ ३१ ॥
ततस्ते पाण्डवाः सर्वे प्रत्यागमनकाङ्क्षिणः ।
प्रतीक्षन्तः कियत्कालं जितात्मानो व्रत स्थिराः ३२
निशीथेऽभ्येत्य चास्मान्स छलयिष्यत्यसंशयम् ।
कथं च निस्तरेमास्मात्कृच्छ्राद्दैवोपसादितात् ॥३३॥
इति चिन्तापरान् दृष्ट्वा निश्वसन्तो मुहुर्मुहुः ।
उवाच वचनं श्रीमान्कृष्णः प्रत्यक्षतां गतः ॥ ३४ ॥

श्रीभगवानुवाच ।

भवतामापदं ज्ञात्वा ऋषेः परमकोपनात् ।
द्रौपद्या चिन्तितः पार्था अहं सत्वरमागतः ॥३५॥
न भयं विद्यते तस्माद्दृषेर्दुर्वाससोऽल्पकम् ।
तेजसा भवता भीतः पूर्वमेव पलायितः ॥ ३६ ॥
धर्मनित्यास्तु ये केचिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ॥३७॥

वैशम्पायन उवाच ।

श्रुत्वेरितं केशवस्य बभूवुः स्वस्थमानसाः ।
द्रौपद्या सहिताः पार्थास्तमूचुर्विगतज्वराः ॥ ३८ ॥

देवनद्यां तत्रस्थ एव तीर्थविशेषे ॥ २१—३८ ॥

त्वया नाथेन गोविन्द दुस्तरामापदं विभो ।
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे ॥३९॥
स्वस्ति साधय भद्रं ते इत्याज्ञातो ययौ पुरीम् ।
पाण्डवाश्च महाभागा द्रौपद्या सहिताः प्रभो ।
ऊचु प्रहृष्टमनसो विहरन्तो वनाद्वने ॥ ४० ॥
एवं विधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाभवन् ॥ ४१ ॥

कृपापारावारं सकलरससारं हरिपदम्
निराकाराकारं निखिलजगदाधारमचलम् ।
धराभारोद्धारं व्रजजनवधूहारमतुलम्
प्रपद्ये श्रीसारं यदुपतिमुदारं हरिमहम् ॥ १ ॥

नैतादृशं धनमनन्तमुदारभोग्यम्
प्रेमास्पदं निगमतज्ज्ञमतं सुखाढ्यम् ।
दुःखापहं सुविमलं भ्रमबीजदाहम्
श्रीमाधवे रतिरखण्डगतिर्हि यादृक् ॥ २ ॥

एकः शरण्यचरणो हरिरस्ति नान्य-
स्तस्माद्विहाय सकलं हरिमाश्रयेत ।
संसारतापविनिवृत्तिफलास्य भक्तिः
स्वाराज्यहेतुरिति वेदविदां प्रसिद्धिः ॥ ३ ॥

धन्यः स एव पुरुषार्थविदां वरिष्ठो
यः संश्रयेद्धरिपदाम्बुजमादरेण ।
नास्यापदो नच तमो नच विभ्रमो वा
सर्वात्मना व्रजति यः शरणं मुकुन्दम् ॥ ४ ॥

सा यद्भवेत्सकलतापहरी नराणां
या कृष्णपादकमलं रतिमुद्वहन्ती ।
नान्यं विकल्पमपि जातु नयेज्जनान्तः
सा संपदस्ति न ततो विपरीतभाग्वा ॥ ५ ॥

कृत्वाप्यनेकमघजातमहर्निशं वा
सर्वात्मना व्रजति यः शरणं हरेर्हि ।
त्यक्त्वान्यधर्ममखिलानि फलानि सोऽसौ
साम्यं प्रयाति हरिणाखिलविश्वपूज्यः ॥६॥ ३९—४१ ॥

**स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।**
**तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ ४२ ॥**
**बलिं स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः ।**
**वरं चास्मै ददौ देवः स जग्राह च तच्छृणु ॥ ४३ ॥**
**समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान् ।**
**इति राजाब्रवीद्देवं सोऽपि देवस्तमब्रवीत् ॥ ४५ ॥**
**अजय्यांश्चाप्यबध्यांश्च वारयिष्यसि तान् युधि ।**
**ऋतेऽर्जुनं महाबाहुं नरं नाम सुरेश्वरम् ॥ ४५ ॥**

एवं शरण्यत्वमुदारपुंसो हरेः सदा ध्येयतयोक्तमत्र ।
दृढीकृतं संप्रति कृष्णभक्तानकोऽपि जेतुं क्षम इत्थमाह ॥ १ ॥
कृष्णाप्रमाथे विजितो जयद्रथस्तपश्चचारेश्वरतोषणोद्यतः ।
वरप्रदानावसरे स पाण्डवान्संप्रार्थयामास विजेतुमाहवे ॥ २ ॥

तमब्रवीन्नेति वचो महेश्वरो
मुकुन्दभक्तान्न विजेतुमीश्वरः ।
कोऽप्यस्ति लोके यत एष केशवः
स्वयं सदा रक्षति तान्नतिप्रियः ॥ ३ ॥
अहोमुकुन्दानुसृतिप्रभावो
यदीश एवाह नृपं प्रतीत्थम् ।
वरं प्रतिज्ञातमपीहतेऽति
स्वयं वचः कृष्णरसानुरागः ॥ ४ ॥
अहो जनानां जडता यदीश्वरम्
मुकुन्दमारादपहाय चेतसा ।
भजन्ति देवान्तरमल्पबुद्धय
स्तुच्छाप्तये क्षुद्रभगं भगोज्झिताः ॥ ५ ॥

हरिं शरण्यं शरणं गता जनाः
शरण्यभूता जगतां स्वयं यतः ।
यते पुनः संसृतिभागिनो हरेः
पदाम्बुजं प्राप्य सुखैकमूर्त्तये ॥ ६ ॥
गङ्गाद्वारेऽप्यतिदृढतपः सञ्चरन् सिन्धुराजः
शंभुं भक्त्याखिलसुरगुरुं तोषयामास भूयः ।
दृष्ट्वापीशं वरदमपि तत्रैव लेभे यदैच्छद्
विष्णोर्भक्तं द्विषत उचितं सर्ववैय्यर्थ्यमेव ॥ ७ ॥
तस्माद्धरौतत्पुरुषे कदाचन
द्वेषं न कुर्यात् कुपितो मनागपि ।
कुर्वन्न कुत्रापि फलं मनागपि
लभेत कश्चिन्मतिरैश्वरीत्यपि ॥ ८ ॥
इति मनसि निधाय स्वाशयं भारतस्य
मुनिरपि वदतीह श्रौतसिद्धान्तमेवम् ।
सकलजगदधीशस्येशितुर्हार्दमेवम्
तत इममभृतेप्सुः कृष्णमीयाच्छरण्यम् ॥ ९ ॥

भीमेन पञ्चसटः कृतो जयद्रथो दुःखार्तो गङ्गाद्वारे महादेवाराधनार्थं गतवानित्याह स देवमिति । वलिमुपहारम् ॥ ४२—४५ ॥

**वदर्यां तप्ततपसं नारायणसहायकम् ।**
**अजितं सर्वलोकानां देवैरपि दुरासदम् ॥ ४६ ॥**
**मया दत्तं पाशुपतं दिव्यमप्रतिमं शरम् ।**
**अवाप लोकपालेभ्यो वज्रादीन्स महाशरान् ॥ ४७ ॥**
**देवदेवो ह्यनन्तात्मा विष्णुः सुरगुरुः प्रभुः ।**
**प्रधानपुरुषोऽव्यक्तो विश्वात्मा विश्वमूर्त्तिमान् ॥४८॥**

नारायणः सहायो यस्य तं नारायणसहायकम् ॥ ४६ ॥
शरमिति शृणाति हिनस्तीति शरोऽस्त्रम् ॥ ४७ ॥

नारायणसहायस्याजेयत्वं वक्तुं नारायणमाहात्म्यमाह देवदेव इति देवानां द्योतकानां सूर्यचन्द्राग्निचक्षुर्मनोवाचां ज्योतिषां देवः प्रकाशकः येन सूर्यस्तपति तेजसेद्धः येन चक्षूंषि पश्यन्तीत्यादिश्रुतिभ्य अनन्तः त्रिविधपरि-

च्छेदशून्यः आत्मा स्वरूपं यस्य प्रधानं त्रिगुणात्मिका माया पुरुषश्चिद्रूपः तदुभयात्मा अव्यक्तो जगत्कारणरूपो बीजेऽन्तर्गतवटतुल्यः ॥ ४८ ॥

युगान्तकाले संप्राप्ते कालाग्निर्दहते जगत् ।
सपर्वतार्णवद्वीपं सशैलवनकाननम् ॥ ४९ ॥
निर्दहन्नागलोकांश्च पातालतलचारिणः ।
ततोऽन्तरिक्षे सुमहन्नानावर्णाः पयोधराः ॥ ५० ॥
घोरस्वरा विनिक्षिप्तास्तडिन्मालाः कलम्बिनः ।
समुत्पतन्तो वितता इतश्चेतो विधाविनः ॥ ५१ ॥

एवं नारायणस्य जगद्धेतुत्वमुक्त्वा तस्य जगत्संहर्तृत्वमाह युगान्तेति ॥ ४९ ॥

कालाग्निरूपो नारायणो निर्दहन् ॥ ५० ॥

विनिक्षिप्ताः प्रेरिताः समुत्पतन्तः समुत्तिष्ठन्त इत्यर्थः ॥ ५१ ॥

ततोऽग्निं नाशयामासुः संवर्ताग्निनियामकाः ।
अक्षमात्रैश्च धाराभिस्तिष्ठन्त्यापूर्य सर्वशः ॥ ५२ ॥
एकार्णवे तदा तस्मिन्नुपशान्तचराचरे ।
नष्टचन्द्रार्कपवने ग्रहनक्षत्रवर्जिते ॥ ५३ ॥
चतुर्युगसहस्रान्ते सलिलेनाप्लुता मही ।
ततो नारायणाख्यस्तु सहस्राक्षः सहस्रपात् ॥ ५४ ॥
सहस्रशीर्षा पुरुषः स्वप्तुकामस्त्वतीन्द्रियः ।
फणासहस्रं विकटं शेषं पर्यङ्कभोगिनाम् ॥ ५५ ॥
सहस्रमिव तिग्मांशुसन्धातममितद्युतिम् ।
कुन्देन्दुहारगोक्षीरमृणालकुमुदप्रभम् ॥ ५६ ॥

नाशयामासुः पयोधरा इति पूर्वेणान्वयः । अक्षमात्राभिः स्थूलाभिः धाराभिरिति धाराशब्दः आकारान्तः सोमपाशब्दवत् पुलिङ्गः धारया ता एव रान्ति आदधते क्लेदनीयं वस्त्विति धाराः रा आदानेऽस्मात् क्विप् ॥५२॥

एकार्णवे इति। अवान्तरप्रलयेऽस्मिन्पवननाशोक्तिः निदाघ इव तदनुपलम्भपरा ॥ ५३ ॥

चतुर्युगसहस्रप्रमाणं ब्रह्मणो दिनं तदन्ते आप्लुता सलिलेऽन्तर्हितेत्यर्थः। नारायण आख्या नाम यस्य यद्वा नारायणादेव आख्या प्रथा यस्य स हिरण्यगर्भः सूत्रात्मा विश्वाभिमानी अत एव सहस्रपादादिमान् ॥

स्वप्तुकामः स्वदिनान्ते फणासहस्रम् ॥ ५४ ॥ ५५ ॥

अमितद्युतिमत्यन्तं द्योतमानम् ॥ ५६ ॥

**तत्रासौ भगवान् देवः स्वपन् जलनिधौ तदा ।**
**नैशेन तमसा व्याप्तां स्वां रात्रिं कुरुते विभुः ॥५७॥**
**सत्त्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमपश्यत ।**
**इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ५८ ॥**
**आपो नारास्तु तनव इत्येतन्नाम शुश्रुम ।**
**अयनं तेन चैवास्ते तेन नारायणः स्मृतः ॥ ५९ ॥**
**प्रध्यानसमकाले तु प्रजाहेतोः सनातनः ।**
**ध्यानमात्रे तु भगवन्नाभ्यां पद्मः समुत्थितः ॥६०॥**

सत्त्वोद्रेकात्तमसोऽभिभवे सति सत्त्वस्याविर्भावात् शून्यं प्राणिसञ्चारहीनम् ॥ ५७ ॥ ५८ ॥

नारायणपदं निर्वक्ति आप इति नराज्जाता नाराः नृनरयोर्वृद्धिश्चेति गौरादिगणपाठात् प्राप्तो ङीष् गणकार्यस्यानित्यत्वान्न। तनवः यथा सुवर्णं कुण्डलं सुवर्णमेव एवं नरजा आपो नर एवेत्यर्थः नारा आपः देहाद्याकारपरिणता अयनं निवासस्थानं यस्य अथवा ताभिः सह तत्तादात्म्यं प्राप्य आस्ते इति वा नारायण इति तत्सृष्ट्वा तदेवानुप्राविशदिति आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति च श्रुतिः परमात्मन एव सृष्टे देहे प्रवेशं देहसंबन्धेन भोक्तृत्वं च दर्शयति तेन चेतनाचेतनं सर्वं जगन्नारायणात्मकमित्युक्तं भवति ॥ ५९ ॥

प्रध्यानेति ध्यानसमकाले प्रजाहेतोः प्रजानामुत्पत्त्यर्थं सनातनश्चिरन्तनो ब्रह्मा नाभिपद्माद्विनिःसृतः तादृशेन रूपेण ध्यातुं दृष्टौ प्रत्यभादित्यर्थः ततो ध्यानमात्र ध्यानानन्तरं विष्णोर्नाभ्यां पद्मः समुत्थितः ॥ ६० ॥

ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिःसृतः।
तत्रोपविष्टः सहसा सर्वलोकपितामहः ॥ ६१ ॥
शून्यं दृष्ट्वा जगत्कृत्स्नं मानसानात्मनः समान्।
ततो मरीचिप्रमुखान्महर्षीनसृजन्नव ॥ ६२ ॥
ते दृष्ट्वा सर्वभूतानि त्रसानि स्थावराणि च।
यक्षराक्षसभूतानि पिशाचोरगमानुषान् ॥ ६३ ॥
सृजते ब्रह्ममूर्तिस्तु रक्षते पौरुषी तनु।
रौद्रीभावेन शमयेत्तिस्रोऽवस्थाः प्रजापतेः ॥ ६४ ॥
न श्रुतं ते सिन्धुपते विष्णोरद्भुतकर्मणः।
कथ्यमानानि मुनिभिर्ब्राह्मणैर्वेदपारगैः ॥ ६५ ॥

तस्मिंश्च पद्मे पितामह उपविष्ट इति क्रमभङ्गेन योज्यम् ॥ ६१ ॥
त्रसानि जङ्गमानि ॥ ६२ ॥
प्रजापतेरीश्वरस्य मायाशवलस्य तिस्रोऽवस्था एकैकगुणोत्कर्षनिमित्ताः रजस उत्कर्षे ब्रह्मा सन् सृजते सत्त्वोत्कर्षे पौरुषीं वैष्णवीं तनुं प्रविश्य रक्षति तमस उत्कर्षे रौद्रीभावेन शमयेदिति ॥ ६३ ॥ ६४ ॥
हे सिन्धुपते तव श्रुतं श्रवणं नास्ति यतः विष्णोः अद्भुतकर्मणः कथ्यमानानि कथनीयानि कर्माणि न वेत्सीति शेषः ॥ ६५ ॥

जलेन समनुप्राप्ते सर्वतः पृथिवीतले।
तदा चैकार्णवे तस्मिन्नेकाकाशे प्रभुश्चरन् ॥ ६६ ॥
निशायामिव खद्योतः प्रावृट्काले समन्ततः।
प्रतिष्ठानाय पृथिवीं मार्गमाणस्तदाभवत् ॥ ६७ ॥
जले निमग्नां गां दृष्ट्वा चोद्धर्तुं मनसेच्छति।
किं नु रूपमहं कृत्वा सलिलादुद्धरे महीम् ॥ ६८ ॥
एवं सञ्चिन्त्य मनसा दृष्ट्वा दिव्येन चक्षुषा।
जलक्रीडाभिरुचितं वाराहं रूपमस्मरत् ॥ ६९ ॥

कृत्वा वराहवपुषं वाङ्मयं वेदसंमितम् ।
दशयोजनविस्तीर्णमायतं शतयोजनम् ॥ ७० ॥
महापर्वतवर्ष्माभं तीक्ष्णदंष्ट्रं प्रदीप्तिमत् ।
महामेघौघनिर्घोषं नीलजीमूतसन्निभम् ॥ ७१ ॥
भूत्वा यज्ञवराहो वै अपः संप्राविशत्प्रभुः ।
दंष्ट्रेणैकेन चोद्धृत्य स्वे स्थाने न्यविशन्महीम् ॥७२॥

तान्येव कर्माण्याह एकार्णवे सति एकाकाशे आकाशमात्रे वायुस्तेन पृथ्वीरहिते जलमात्रे सति ॥ ६६ ॥

खद्योत इति प्रकाशमात्रत्वमुच्यते प्रतिष्ठानाय लोकप्रतिष्ठार्थम् ॥६७॥

जलक्रीडायामभिरुचितं प्रीतिर्यस्य ॥ ६८ ॥ ६९ ॥

वराहवपुषमात्मानमिति शेषः वाङ्मयं संमितं वेदप्रमितं यज्ञरूपम् ७०

वर्ष्म शरीरं दंष्ट्रेण दंष्ट्रया न्यविशत् न्यवेशयत् ॥ ७१ ॥ ७२ ॥

पुनरेव महाबाहुरपूर्वां तनुमाश्रितः ।
नरस्य कृत्वार्धतनुं सिंहस्यार्धतनुं प्रभुः ॥ ७३ ॥
दैत्येन्द्रस्य सभां गत्वा पाणिं संस्पृश्य पाणिना ।
दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः ॥ ७४ ॥
दृष्ट्वा चापूर्ववपुषं क्रोधात्संरक्तलोचनः ।
शूलोद्यतकरः स्रग्वी हिरण्यकशिपुस्तदा ॥ ७५ ॥
मेघस्तनितनिर्घोषो नीलाभ्रचयसन्निभः ।
देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् ॥ ७६ ॥
समुपेत्य ततस्तीक्ष्णैर्मृगेन्द्रेण बलीयसा ।
नारसिंहेन वपुषा दारितः करजैर्भृशम् ॥ ७७ ॥
एवं निहत्य भगवान् दैत्येन्द्रं रिपुघातिनम् ।
भूयोऽन्यः पुण्डरीकाक्षः प्रभुर्लोकहिताय च ॥ ७८ ॥

कश्यपस्यात्मजः श्रीमानदित्या गर्भधारितः ।
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमम् ॥ ७९ ॥

एवं वराहावतारमुक्त्वा नरसिंहावतारमाह पुनरित्यादिना । अपूर्वां लोके पूर्वं न दृष्टाम् ॥ ७३ ॥

मृगेन्द्रेणापि समुपेत्य दैत्यसमीपे गत्वा समुपाद्रवत् हिरण्यकशिपुः करजैर्नखैर्विदारितः ॥ ७४ ॥ ७५ ॥ ७६ ॥

नृसिंहावतारकथामुपसंहृत्य वामनावतारकथां प्रस्तौति एवमिति ७७ गर्भधारितः गर्भधारितः । सप्तमीयोगविभागात्समासः ॥७८॥७९॥

दुर्दिनाम्भोदसदृशो दीप्ताक्षो वामनाकृतिः ।
दण्डी कमण्डलुधरः श्रीवत्सोरसिभूषितः ॥ ८० ॥
जटी यज्ञोपवीती च भगवान्बालरूपधृक् ।
यज्ञवाटं गतः श्रीमान्दानवेन्द्रस्य वै तदा ॥ ८१ ॥
प्रीतोऽस्मि दर्शने विप्र ब्रूहि त्वं किं ददामि ते ।
एवमुक्तस्तु बलिना वामनः प्रत्युवाच ह ॥ ८२ ॥
स्वस्तीत्युक्त्वा बलिं देवः स्मयमानोऽभ्यभाषत ।
मेदिनीं दानवपते देहि मे विक्रमत्रयम् ॥ ८३ ॥
बलिर्ददौ प्रसन्नात्मा विप्रायामिततेजसे ।
ततो दिव्याद्भुततमं रूपं विक्रमतो हरेः ॥ ८४ ॥
विक्रमैस्त्रिभिरक्षोभ्यो जहाराशु स मेदिनीम् ।
ददौ शक्राय च महीं विष्णुर्देवः सनातनः ॥ ८५ ॥
एष ते वामनो नाम प्रादुर्भावः प्रकीर्त्तितः ।
तेन देवाः प्रादुरासन्वैष्णवं चोच्यते जगत् ॥ ८६ ॥

दुर्दिनं प्रावृट्दिनं तत्र भवोऽम्भोदः कृष्णमेघस्तत्सदृशः मेघच्छन्नेऽह्नि दुर्दिनमित्यमरः । श्रीवत्सेन उरसिभूषित इत्यलुप्तविभक्तिकं पदम् ॥८०॥

बालः वामनः वाटं स्थानम् ॥ ८१ ॥

बलिनः बलेः अयमिकारान्त इन्नन्तश्च शब्दो दृश्यते ॥ ददामि त्वदीप्सितमिति शेष ॥ ८२ ॥

दिव्यं च तदद्भुततमं च रूपं बभूवेति शेषः ॥ ८३—८६ ॥

असतां निग्रहार्थाय धर्मसंरक्षणाय च ।
अवतीर्णो मनुष्याणामजायत यदुक्षये ॥ ८७ ॥
स एव भगवान्विष्णुः कृष्णेति परिकीर्त्यते ।
अनाद्यन्तमजं देवं प्रभुं लोकनमस्कृतम् ॥ ८८ ॥
य एवं वेद गोपालं तस्य कर्माणि सिद्धये ।
यमाहुरजितं कृष्णं शङ्खचक्रगदाधरम् ॥ ८९ ॥
श्रीवत्सधारिणं देवं पीतकौशेयवाससम् ।
प्रधानं शस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥ ९० ॥
सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः ।
समानं स्यन्दते पार्थमास्थाय परवीरहा ॥ ९१ ॥
न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः ।
कः पुनर्मानुषो भावो रणे पार्थं विजेष्यते ॥ ९२ ॥
तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् ।
चतुरः पाण्डवान् राजन् दिनैकं जेष्यसे रिपून् ॥९३॥

अवतीर्णोऽवतरणं कुर्वन्नजायत आविर्भूतः यदुक्षये यदूनां गृहे ॥ ८७ ॥

स अर्जुनः अस्त्रविदुषां प्रधानः श्रेष्ठः। यमजितमाहुस्तेन कृष्णेन रक्ष्यते तेन कृष्णसहायत्वेन हेतुना ॥ ८८—९३ ॥

वैशम्पायन उवाच ।

इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः ।
उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्द्दनः ॥ ९४ ॥

वामनैर्विकटैः कुब्जैरूपश्रवणदर्शनैः ।
वृतः परिषदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ९५ ॥
त्र्यम्बको राजशार्दूल भगनेत्रविपातनः ।
उमासहायो भगवांस्तत्रैवान्तरधीयत ॥ १९६ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाशिषा
श्रीसदानन्दविदुषा कृते भारतसारोद्धारे
वनपर्वसारोद्धारः समाप्तिमगमत् ।

यस्य प्रभावमतुलं न विदुः शिवाद्या
यस्यावतारचरितानि समर्चितानि ।
वेदान्तवेद्यमखिलज्ञमुदारकीर्तिं
श्रीकृष्णमेव सततं शरणं प्रपद्ये ॥ १ ॥

अहो कार्ष्णी भक्तिर्निगमगणनीयाद्भुतरसा
वरीवर्त्यानन्दामृतपदविधात्री स्वरसतः ।
प्रवेशे यस्यां स्यान्निखिलसुरवन्द्यत्वमभितो
नृणामप्येनां यः श्रयति स भवेत्सर्वसुखभाक् ॥ २ ॥

वदन्त्येके कर्म श्रुतिविहितमेवास्ति सुखदम्
तथा योगं केचिद्यमनियममुख्यं सुगतिदम् ।
परं ब्रह्मज्ञानं परमपददं तत्र तु वयम्
हरौ भक्तिं विद्मः सकलपुरुषार्थैकधरणीम् ॥ ३ ॥

शरण्यं भीतानां जनिमृतिमयाद्दारुणभवात्
निदानं मोक्षादेर्निखिलपुरुषार्थस्य परमम् ।
विधानं भाग्यानां श्रुतिमतिदमीशानममृतम्
मुकुन्दं वन्देऽहं हरिपदसरोजैकरतये ॥ ४ ॥

भाग्यं मदीयमिदमेव विनिश्चितं मे
श्लाघ्यं विचार्यमिदमेव ममास्ति लोके ।
यच्छ्रीमुकुन्दपदपङ्कजरेणुरागि
स्यान्मे मनोऽनवरतं सकलं विहाय ॥ ५ ॥

यावन्न कृष्णकरुणावरुणालयोऽयं
संसार एव नतु मोक्षपुमर्थलेशः ।
तावत्ततो हरिकृपोदयसिद्धिहेतोः
श्रीकृष्णमेव सततं शरणं प्रपद्ये ॥ ६ ॥
याचेऽहमीश्वर हरे तव पादपद्मे
नित्यानुरागमखिलस्य सुखस्य भूमिम् ।
नान्यत्कृपां कुरुमयीह भवे यथास्यां
त्वत्पादपद्ममधुलिट् त्वियतास्मि धन्यः ॥७॥—॥९४—१९६॥

---

## अथ विराटपर्वतात्पर्यप्रकाशः ॥

नत्वा कृष्णपदाम्भोजं तत्परांश्च महात्मनः ।
विराटपर्वतात्पर्यं दर्शयामि यथामति ॥ १ ॥
तत्र प्राक्पर्वणि प्रोक्तं धर्मणात्मसुतं प्रति ।
दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता ॥ २ ॥
द्वे पूर्वमधमे द्वे च द्वे चान्त्ये साम्परायके ।
तदर्थस्तु श्रुतिप्रोक्तं रहस्यत्वादिहोच्यते ॥ ३ ॥
शान्तो दान्त इति श्रुत्या साधनान्यात्मदर्शने ।
शमो दमस्तितिक्षा च सामाद्युपरती इति ॥ ४ ॥
पञ्चप्रोक्तानि जिज्ञासोरुपादेयानि यत्नतः ।
यैर्विना ब्रह्मतत्त्वस्य नैव साक्षात्कृतिर्यतः ॥ ५ ॥
तत्र रक्तो हरेस्तत्त्वं प्रत्यगद्वयमीक्षते ।
षडूर्मिलक्षणां तज्ज्ञः षट्पदीं जयति ध्रुवम् ॥ ६ ॥
तत्राशनापिपासे द्वे जातमात्रस्य देहिनः ।
शोकमोहौ प्ररूढस्य वृद्धस्याथ जरामृती ॥ ७ ॥
स्थेयमव्यक्तलिङ्गेन येनेयं षट्पदी जिता ।
आत्यन्तिकप्रबोधे तु भाव्यं सुव्यक्तलिङ्गिना ॥ ८ ॥
इत्येतत्पाण्डवाचारप्रदर्शनमुखेन च ।
स्पष्टं दर्शयितुं पर्वतुर्यमारभते मुनिः ॥ ९ ॥
आपदुत्तरणोपायो विचार्यः पूर्वमेव हि ।
स्वाधिकारानुसारेण दृष्टान्ताः पाण्डवा इह ॥ १० ॥

विद्वांसोऽपि सुहृद्भिः स्वैर्बोधनीया हितेप्सया।
पाण्डवान्सर्वधर्मज्ञानिति धौम्योऽप्यबोधयत्॥ ११॥
स्वेष्टदेवतसंबन्धात्स्तोतव्या अन्यदेवताः।
नन्दनन्दनसंबन्धात्पाण्डवैरम्बिका स्तुता॥ १२॥
येन केनाप्युपायेन विद्वानापदमुत्तरेत्।
निवसन्गूढभावेनेत्युक्तं पाण्डवगोपने॥ १३॥
पारतन्त्र्यं महद्दुःखं तथापि महताम्परम्।
सेवायामिति वैराटे द्रौपद्याः कीचकार्दने॥ १४॥
परदारा न गन्तव्या मनसापि कदाचन।
अन्यथा कीचकस्येव गतिः स्यादिति दर्शितम्॥ १५॥
केशवो रक्षको येषां तेषां रक्षा परस्परम्।
इति पाण्डवरक्षायां वैराग्यं समदर्शयत्॥ १६॥
न त्यजन्ति धृतिं प्राज्ञाः पीडिता आपदीतरैः।
दृष्ट्वापि पीडितां कृष्णां न चेलुः पाण्डवा धृतेः॥ १७॥
धर्मं भक्तिमतां पुंसां सोढुं शक्या महापदः।
शूरैरुपेक्षितः शत्रुरपि पाण्डुसुतैर्महान्॥ १८॥
निवेदनीयं स्वं दुःखं शक्ते स्वात्महितैषिणि।
इति भीमान्तिके कृष्णा स्वीयं दुःखं न्यवर्णयत्॥ १९॥
हन्तव्यं स्वाश्रितस्याशु सामर्थ्ये सति सङ्कटम्।
मूढेनापीति भीमेन कीचकस्य बधे जगौ॥ २०॥
बाह्यमाभ्यन्तरं शत्रुं सद्यः प्राज्ञो बधं नयेत्।
नोपेक्ष्यो रिपुरिति प्राह कीचकस्य बधं मुनिः॥ २१॥
कामुको नश्यति क्षिप्रं सकुटुम्बो महानपि।
कीचकोऽतिबली शूरः सद्यो नष्ट इतीरितम्॥ २२॥
धर्मात्मनो न कुत्रापि हानिर्धर्मैकपालनात्।
कृतेऽपि साहसे भीमो नच केनापि लक्षितः॥ २३॥
सतां द्वेष्टुर्न धर्मे स्यान्मतिः सत्सन्निधावपि।
धार्तराष्ट्रस्य भीष्मादेः सन्निधावपि दुर्मतिः॥ २४॥
सतां पदमसन्तो हि न विदन्ति गवेषणैः।
धार्तराष्ट्रा विदुर्नैव पाण्डवानति यत्नतः॥ २५॥
पौरुषं दर्शयित्वैव स्वामिनि गोधनामनी।

प्रवर्तयेदिति प्रोचे मुनिर्गोग्रहपर्वणि ॥ २६ ॥
सामर्थ्ये सति नोपेक्ष्यः स्यात्स्वामी विपदं गतः ।
इत्यरेर्मोचयामासुर्विराटं पाण्डवा बलात् ॥ २७ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषां हृदि मुकुन्दोऽस्तीत्येवमुक्तं गवां जये ॥ २८ ॥
स्वयमेव हरेर्भक्तान्यशोजयमुखा गुणाः ।
वृणुते नेतरान्यत्नैरिति तत्रैव दर्शितम् ॥ २९ ॥
महतां शोभते सर्वं लोके निन्द्यमपि ध्रुवम् ।
वरीवर्त्यर्जुने क्लीबवेषोऽपि रणभूमिगे ॥ ३० ॥
एकोऽपि भगवद्भक्तो बली शूरान्बहूनपि ।
पराजित्य नयेद्वित्तमित्याहोत्तरगोग्रहे ॥ ३१ ॥
हृष्टो हृष्यति दृप्तश्च धर्ममुल्लङ्घ्य वर्तते ।
पुमानिति जगौ द्यूते धर्मराजविराटगैः ॥ ३२ ॥
अवश्यं भाविनो भावा भवन्ति महतामपि ।
धर्मसूनुर्महातेजाः प्रहारं प्रापयन्मुखे ॥ ३३ ॥
न त्यजन्ति क्षमां धीरा अपि शक्ता जये धृताः ।
उभयत्र जयं प्राप्य न चेलुः पाण्डवाः पदात् ॥ ३४ ॥
धर्मेणैवापदं तीर्त्वा परं सौभाग्यमश्नुते ।
अभिमन्युविवाहाख्यपर्वण्येतत्प्रदर्शितम् ॥ ३५ ॥
इति संक्षेपतो भावा विराटे दर्शिता मया ।
नन्दनन्दनपदद्वन्द्वभक्तिलाभाय सन्तु ते ॥ ३६ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाशिषा श्रीसदानन्दविदुषा कृते भारतसारोद्धारे विराटपर्वतात्पर्यप्रकाशः चतुर्थः समाप्तिमगमत् ।

---

## अथोद्योगपर्वतात्पर्यप्रकाशः—५ ।

श्रीमाधवपदं द्वन्द्वं नत्वा तद्भक्तिसिद्धये ।
उद्योगपर्वतात्पर्यं दर्शयामि समासतः ॥ १ ॥
उद्योगे सर्ववित्कृष्णतत्त्वं तज्ज्ञानसाधनम् ।
वर्णितं भगवद्भक्तिसिद्धये गुह्यमद्भुतम् ॥ २ ॥
आर्यत्वमार्जवं शीलं धर्मः शान्तिः क्षमा दमः ।

तत्त्वबोधो हरौ भक्तिर्गुणा उद्योगवर्णिताः ॥ ३ ॥
ये गुणाः पाण्डवाचारप्रदर्शनमुखेन हि ।
दर्शिता भगवद्वक्त्राम्भोजनिर्गतया गिरा ॥ ४ ॥
तत्रादौ सर्ववित्कृष्णं समासाद्यैव पाण्डवाः ।
घोरामापदमुत्तीर्य वभुर्लोक इतीरितम् ॥ ५ ॥
असहिष्णुः स्वभक्तस्य दोषलेशे समीरितम् ।
हरिः पार्थे बलप्रोक्तं दोषं सात्यकिनाक्षिपत् ॥ ६ ॥
एक एव सहायोऽयमीशः किं सैन्यकोटिभिः ।
इति वव्रेऽर्जुनः कृष्णं न सैन्यं धार्तराष्ट्रवत् ॥ ७ ॥
गुरुब्रह्मसुरद्रोही सुखं क्वापि न विन्दति ।
महानपीति देवेन्द्रनहुषभ्रंशमादिशत् ॥ ८ ॥
लोभो नैवास्ति कस्यापि मित्रमिन्द्रपदेऽपि सन् ।
इति शक्रेण वृत्रस्य बधं दर्शितवान्मुनिः ॥ ९ ॥
ब्रह्महत्यादिपापानि तरत्येव समर्चयन् ।
हरिं यज्ञैरितीन्द्रस्य पदारोहे न्यदर्शयत् ॥ १० ॥
न ब्रह्मब्राह्मणावज्ञा महेन्द्रेणापि कर्हिचित् ।
कार्या तत्कुर्वतो भ्रंशो नहुषस्येव तत्पदात् ॥ ११ ॥
भवेत्सहायवान्पूर्वं साम्ना शत्रुमथार्थयेत् ।
उद्योगसञ्जयप्रेष्यपर्वभ्यामेतदीरितम् ॥ १२ ॥
केशवेनैकतां प्राप्तास्तद्भक्तास्तत्परायणाः ।
न तद्विपक्षतां कुर्यादिति तत्रैव दर्शितम् ॥ १३ ॥
यथावच्छास्त्रतात्पर्यं कृष्णो वा कृष्णतत्परः ।
वेत्ति नान्योऽखिलज्ञोऽपीत्युक्तं सञ्जययानतः ॥ १४ ॥
न निद्राति परार्थार्थी न च बुध्यति बोधितः ।
न शान्तिं लभते मूढ इति वैदुरिके जगौ ॥ १५ ॥
न शास्त्रीयं हितं लोभी लौकिकं वा समीक्षते ।
सुहृद्भिर्बोधितोऽप्यद्धा युक्त्यापीति तथेरितम् ॥ १६ ॥
हितं पथ्यमृतं युक्तं वाक्यं सद्भिरुदीरितम् ।
ग्राह्यं नोचेद्भवेद्दुःखी धृतराष्ट्रो यथाभवत् ॥ १७ ॥
पुत्रादिसर्ववित्तार्थं नचान्याय्यं वदेद्बुधः ।
यथा सुधन्वना पृष्टः प्रह्लादो नावदन्मृषा ॥ १८ ॥

अतिलोभोऽतिमानश्च शिश्नोदररतिस्तथा ।
अनाचाराश्च सन्त्येते यस्य तस्यायुषः क्षयः ॥ १९ ॥
नाधिकारं विना शिष्टोपदेशः फलति ध्रुवम् ।
इति वैदुरिके मन्त्रे तात्पर्यं मुनिसद्गिराम् ॥ २० ॥
सर्ववित्सर्वमान्योऽपि वेदान्तान्नावरो वदेत् ।
इति धर्मावतारोऽपि विदुरो न विवक्षति ॥ २१ ॥
सन्मर्यादावतां वश्याः सिद्धाः सर्वे तथामराः ।
इत्याहूतो वृटित्यागात्कुमारो विदुरान्तिके ॥ २२ ॥
सतां सन्तुष्टये सन्तो दिशन्त्यात्मपदं रसः ।
अनर्हा वापि चेत्युक्तं धृतराष्ट्रोपदेशने ॥ २३ ॥
सतां वागपि साफल्यं भजते सद्गुणे जने ।
सनत्सुजातसद्वाचां यथाद्यापि सतां मतौ ॥ २४ ॥
भावः सनत्सुजातीये संक्षेपेण विभागशः ।
प्रश्नोत्तरक्रमेणैव यथामति प्रदर्श्यते ॥ २५ ॥
अहङ्कारादिरूपेण मृत्युः स्वाज्ञानमेव हि ।
पुंसां नान्यन्मृते रूपमिति प्राहादिमे मुनिः ॥ २६ ॥
कर्मणा मृत्युमाप्नोति ज्ञानेनामृतमश्नुते ।
यौगपद्ये तयोर्नास्तीत्येवमाह द्वितीयके ॥ २७ ॥
ऐक्यं परात्मनोस्तत्त्वं भेदस्त्वौपाधिकस्तयोः ।
ज्ञानेनोपशमं यातीत्युत्तरं स्यात्तृतीयके ॥ २८ ॥
संन्यासपूर्वकं ज्ञानं केवलं मुक्तिकारणम् ।
न कर्मोपासनाभ्यासान्मुक्तिरित्याह तुर्यके ॥ २९ ॥
सगुणोपासकानां स्यात् क्रममुक्तिरितीरितम् ।
निष्कामकर्मणां सत्त्वशुद्धिः स्वर्गस्त्ववान्तरः ॥ ३० ॥
इति नोऽपि सुखावाप्तिर्गूढचर्यारतस्य सा ।
जीवतः स्यादिति प्राह पञ्चमस्योत्तरे मुनिः ॥ ३१ ॥
अध्याये प्रथमं प्रश्नपञ्चकस्य समासतः ।
उत्तराणि क्रमोक्तानि भावमात्रनिदर्शनात् ॥ ३२ ॥
मौनं प्रत्यक् चिदद्वैतमवाङ्मनसगोचरम् ।
तत्प्राप्तिसाधनं मौनमित्युत्तरमिहादिमे ॥ ३३ ॥
अधीता अपि नो वेदाः पापाचारं पुनन्त्यमी ।

अन्ते वेदास्त्यजन्त्येनमित्याहासौ द्वितीयके ॥ ३४ ॥
निष्कामश्रद्धयोपेतं तपः कृतमकल्मषम् ।
तत्त्वं ज्ञानैकहेतुत्वात्स्यादित्याह चतुर्थके ॥ ३५ ॥
आसुर्या संपदा युक्तं तपोयुक्तं सकल्मषम् ।
निष्कल्मषं तयाहीनमित्युक्तं पञ्चमोत्तरे ॥ ३६ ॥
वेद्यमेकं परं ब्रह्म तदज्ञानाद्विदा त्विह ।
तत्रैव वेदतात्पर्यमिति षष्ठोत्तराशयः ॥ ३७ ॥
एवं सनत्सुजातेन द्वितीयेऽध्याय ईरितम् ।
ततः प्रश्नानुसारेण धृतराष्ट्रनृपं प्रति ॥ ३८ ॥
वैराग्याभ्यासयोगेन ब्रह्मचर्येण तत्त्वधीः ।
लभ्या स्यान्नान्यथेत्येवं तृतीये प्रथमोत्तरम् ॥ ३९ ॥
ब्रह्म नित्यं परोक्षं स्याल्लभ्यतेऽथापि यत्नतः ।
साधनैर्ब्रह्मचर्याद्यैरेवमुक्तं द्वितीयके ॥ ४० ॥
स्वाध्यायेन गुरोर्भक्त्या स्वचित्तेन्द्रियनिग्रहात् ।
विमुक्तिर्ब्रह्मचर्यं स्यादेवमाह तृतीयके ॥ ४१ ॥
आत्मत्वेनैव तज्ज्ञेयं ब्रह्मतत्त्वं महद्धिया ।
तृतीयेऽध्याय इत्येवं चतुर्थस्य विनिर्णयः ॥ ४२ ॥
विनिश्चित्यापरोक्षेण चित्तवृत्तिनिरोधतः ।
ब्रह्माप्तिरन्यथानेति तुर्येऽध्याय इतीरितम् ॥ ४३ ॥
योगिनोऽनुभवेनैव पश्यन्त्यागमनिश्चितम् ।
ब्रह्मतत्त्वमिति प्राह पञ्चमेऽध्याय आदरात् ॥ ४४ ॥
इत्थं सनत्सुजातेन बोधितोऽप्यन्यवस्तुधीः ।
नापबोधं तथा नैव भाव्यमित्याह सन्मुनिः ॥ ४५ ॥
देहेन्द्रियेषु धीर्यावत्तावन्न प्राप्यते पदम् ।
तद्विवेकेन प्रत्यक्त्वं निश्चित्याप्नोति तत्पदम् ॥ ४६ ॥
यावदन्यत्र संसक्तिस्तावन्नास्त्यधिकार्यसौ ।
ब्रह्मबोध इति प्राह मुनिः सानत्सुजातके ॥ ४७ ॥
उपदेष्टा कुमारो हि प्रमाणं श्रुतिमौलयः ।
विना सत्त्वस्थया बुध्या बोधं नावाप बोधदृक् ॥ ४८ ॥
परोत्कर्षासहिष्णुत्वं शोकित्वमति दीनता ।
तापयन्त्यकृतात्मानमज्ञमन्धदृशं यथा ॥ ४९ ॥

सुखं प्रशान्तः स्वयं वि हित्वा जयपराजयौ ।
जातवैरस्तु दुःखी स्याद्धृतराष्ट्रनृपो यथा ॥ ५० ॥
श्रुत्वापि भगवत्तत्त्वं मूढः शान्तिं न गच्छति ।
अन्यत्रासक्तचित्तत्वाद्धृतराष्ट्र इव भ्रमी ॥ ५१ ॥
न वेत्ति भगवत्तत्त्वं भक्तद्रोही महानपि ।
श्रुत्वापि पाण्डवद्वेषी धृतराष्ट्रनृपो यथा ॥ ५२ ॥
राज्यं सन्ततिरैश्वर्यं साहाय्यगुरवश्चभूः ।
निष्फलं सर्वमेतत्स्यादृते भक्तिमितीरितम् ॥ ५३ ॥
वशी सर्वेश्वरोऽनन्तः स्वतन्त्रः स्वरतिर्हरिः ।
भक्तवश्य इति ख्यातिं दर्शयन्दूततां गतः ॥ ५४ ॥
विना भक्तिं न गृह्णाति कृष्णो वैभवमर्पितम् ।
दुर्योधनकृतां पूजां नच स्वीकृतवान्हरिः ॥ ५५ ॥
अभोज्यान्नः कुलीनोऽपि कृष्णभक्तिपराङ्मुखः ।
जात्यावरोऽपि भोज्यान्नो मुकुन्दरसिकप्रियः ॥ ५६ ॥
भक्त्या समर्पितं स्वीयैः स्वल्पमप्यश्नुते हरिः ।
विदुरेणार्पितं स्वन्नं जलं स्वीकृतवान्हरिः ॥ ५७ ॥
भक्त्या निवेदितं दुःखमपि गृह्णाति केशवः ।
कृष्णाकृतं हि तद्दुःखं हृदि स्वीकृतवान्हरिः ॥ ५८ ॥
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ ५९ ॥
भक्तैस्तादात्म्यमापन्नो हरिरित्यपि दर्शितम् ।
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु समामनु ॥ ६० ॥
ऐकात्म्यं मां गतं विद्धि पाण्डवैरिति तद्धिया ।
अतो भक्तेषु न द्वेषः कार्यः कार्या रतिः परा ॥ ६१ ॥
मूढैर्दुराग्रहोऽत्यन्तदुःखायैवावलम्ब्यते ।
इति दर्भोद्भवाख्याने गालवीये च दर्शितम् ॥ ६२ ॥
बलं बलवतां कृष्णो न स्वातन्त्र्येण कस्य चित् ।
बलमस्तीति नो मानं मातुलीये प्रदर्शितम् ॥ ६३ ॥
ब्रह्माण्डं वहते शक्तोऽप्यशक्तो गरुडोऽभवत् ।
भुजस्योद्वहने विष्णोरिति तत्रैव दर्शितम् ॥ ६४ ॥
ऐश्वर्यं वैश्वरूप्यं च हरेः श्रुत्वावलोक्य च ।

दुर्योधनो न मेनेऽस्य वाक्यं म्लेच्छः श्रुतेरिव ॥ ६५ ॥
सतां ग्राह्या गुणाः सर्वे दोषास्त्याज्या दुरात्मनाम् ।
इति पाण्डवसाद्गुण्यं जगौ दुर्योधने त्वघान् ॥ ६६ ॥
जीवो मशकतुल्योऽपि प्रलयाग्निमिवेश्वरम् ।
धार्तराष्ट्र इवाल्पज्ञो निग्रहीतुं प्रवर्त्तते ॥ ६७ ॥
ईश्वरस्तु कृपासिन्धुरवज्ञातोऽपि दुर्जनैः ।
सर्वमप्यनुगृह्णाति वैश्वरूप्याद्यथा कुरून् ॥ ६८ ॥
समोऽप्यकर्तोदासीनोऽसङ्गः सर्वेश्वरोऽपि सन् ।
स्वभक्तपक्षपातीव बभावित्यप्यदर्शयत् ॥ ६९ ॥
पौरुषं न परित्याज्यं नरैरापद्गतैरपि ।
पुमर्थार्थिभिरित्येवं विदुरोत्साहने जगौ ॥ ७० ॥
अपि त्रैलोक्यराज्यस्य हेतोर्विश्वस्तमाश्रितम् ।
न त्यजेद्देहनाशेऽपीत्युक्तं कर्णोपयातने ॥ ७१ ॥
न परार्थेऽपि संपाद्या विषयाः सद्भिराग्रहात् ।
साधिता मृत्युदास्ते स्युर्भीष्मेणाम्बा यथार्जिता ॥ ७२ ॥
अस्थाने हि कृतः स्नेहः केवलं दुःखदो भवेत् ।
श्यालराजकृतस्नेहस्यातङ्कोऽत्र निदर्शनम् ॥ ७३ ॥
ज्ञातिर्देवो मुनिर्वापि नान्यथाकर्तुमीश्वरः ।
अवश्यं भाविनो भावान् कृष्णैवात्र निदर्शनम् ॥ ७४ ॥
यावद्बलमुदाराणां शरणागतपालनम् ।
धर्मो मुख्य इति प्राह रामगाङ्गेययोर्मृधे ॥ ७५ ॥
न किञ्चित्तपसोऽसाध्यं सर्वं सर्वस्य सिद्ध्यति ।
इत्यम्बा तपसा जन्म लेभे द्रुपदमन्दिरे ॥ ७६ ॥
ईश्वरोक्तिरवश्यं स्याद्यतो जन्मान्तरं विना ।
पुंस्त्वं शिखण्डिनी प्रापेत्येवोपाख्यानकाशयः ॥ ७७ ॥
यद्बलाज्जयमाशास्ते धार्तराष्ट्रस्तमर्कजम् ।
प्राहार्धरथ इत्युच्चैर्भीष्मस्तेजो बधेप्सया ॥ ७८ ॥
सतो निन्दन्त्यसन्तोऽपि वैडालव्रतिका इति ।
युधिष्ठिरमिवालूक इत्यूचे बादरायणः ॥ ७९ ॥
पुण्यक्षेत्रे मृतिः श्रेष्ठा कुरुक्षेत्रमितो गताः ।
पाण्डवा धार्तराष्ट्राश्चेत्युद्योगे मुनिरब्रवीत् ॥ ८० ॥

तत्त्वं हरेर्मुनिरुदारगुणैकधाम व्यासः प्रकाशयितुमीरितवान्स्वशिष्यम् ।
वैचित्रवीर्यनृपतेस्तिमिरापनुत्यै गावल्गाणे वद हरेर्महिमानमस्मै ॥ १ ॥
स प्रेरितो हरेरसङ्ग उवाच तत्त्वं व्यासैकदत्तवचसुनेन विभातदृष्टिः ।
गावल्गाणिर्भगवतः किलयानसन्धावुद्योगपर्वणि यथामति लोकसिध्यै ॥ २ ॥

सञ्जय उवाच ।

**अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।**
**कामादन्यत्र संभूतौ सर्वभावाय संमितौ ॥ १ ॥**
**व्यामान्तरं समास्थाय यथायुक्तं मनस्विनः ।**
**चक्रं तद्वासुदेवस्य मायया वर्तते विभोः ॥ २ ॥**

कामादिति कामपूर्वकं कर्मोच्यते । अकर्मजं तयोर्जन्म लोकानुग्रहार्थं सूर्यवदाविर्भावमात्रमित्यर्थः सर्वभावाय ब्रह्मभावाय संमितौ तुल्यौ उभावपि साक्षाद्ब्रह्मरूपावित्यर्थः ॥ १ ॥

व्यामान्तरम् । प्रसारितयोर्हस्तयोर्यावान्विस्तारः पञ्चहस्तमितः तावदन्तरं मध्यप्रमाणं यस्य तद्व्यामान्तरं यथायुक्तं यथारूपं यावत्प्रमाणं चिन्तितं तावत्प्रमाणं भूत्वा यत्नमुक्तं भवति । मायया दुर्लक्ष्यरूपेणेत्यर्थः ॥२॥

**सायह्नवं कौरवेषु पाण्डवानां सुसंमतम् ।**
**सारासारं बलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ३ ॥**
**नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।**
**जितवान्घोरसङ्काशान् क्रीडन्निव महाबलः ॥ ४ ॥**
**पृथिवीञ्चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।**
**मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५ ॥**
**भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान्प्रति ।**
**सारासारं बलं ज्ञातुं तत्समासेन मे शृणु ॥ ६ ॥**
**एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।**
**सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७ ॥**

न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम्।
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः॥ ८॥
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः॥ ९॥
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः॥ १०॥

सायहृनवं ससंहारं अत एव पाण्डवानां सुसम्मतम्॥ ३॥ ४॥
मनसैव सङ्कल्पमात्रेण विशिष्टात्मा श्रेष्ठरूपः वशी ऐश्वर्यवान्॥५—९॥
भस्म कर्तुं किमपि कर्तुं न शक्तमित्यर्थः। विचेष्टयति चालयति यतो भूतात्मा सर्वेषां भूतानामन्तरात्मा॥ १०॥

स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव।
अधर्मनिरतान्मूढान् दग्धुमिच्छति ते सुतान्॥ ११॥
कालचक्रं जगच्चक्रं युगचक्रं च केशवः।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम्॥ १२॥
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते॥ १३॥
ईशन्नपि महायोगी सर्वस्य जगतो हरिः।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः॥ १४॥

सत्रं मिषं सत्रमाच्छादने यज्ञे सदादाने च कैतवे इति विश्वः। संमोहयन् आत्मनो जगत्कर्तृत्वेऽपि अकर्तृत्वं दर्शयन्॥ ११॥
कालचक्रं संवत्सरात्मकं जगच्चक्रं जगतो जन्मस्थितिलयप्रवाहं युगचक्रं कर्मकृतं यत्तत्र धर्मश्चतुष्पात् त्रेतायां त्रिपाद्धर्मः एकपादधर्मः द्वापरेऽर्धं धर्मोऽधर्ममर्धः कलिस्त्रिपात्पापं एकपाद्धर्मः इति तदिदं कर्मचक्रं पुनः पुनर्जन्ममरणयोर्हेतुभूतं पुनः कृते पुनः संस्कारः पुनः कर्मेत्येवं रूपमात्मयोगेन

निजसामर्थ्येन नहि भगवत्सामर्थ्यं विना किमपि चेष्टते सर्वस्य भगवदायत्तत्वात् ॥ १२ ॥

कालः आयुःपरिच्छेदकर्त्री देवता मृत्युर्देहप्राणयोर्वियोगकर्त्री ईशते इष्टे ॥ १३ ॥

ईशन्नपि ईशानोऽपि शपोऽलुक् परस्मैपदमार्षम् । कीनाशः कर्षकः वर्धनः धान्यादिवृद्धिकृत् कीनाशो यमः वर्धनः देहादेश्छेत्ता ॥ १४ ॥

**तेन वञ्चयते लोकान् मायायोगेन केशवः ।**
**ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५ ॥**

**धृतराष्ट्र उवाच ।**

**कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।**
**कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १६ ॥**

**सञ्जय उवाच ।**

**शृणु राजन्न ते विद्या मम विद्या न हीयते ।**
**विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥१७॥**
**विद्यया तात जानामि त्रियुगं मधुसूदनम् ।**
**कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ १८ ॥**

ते न मुह्यन्ति ॥ १५ ॥

अध्यायः कथं केन प्रकारेण कानि ज्ञानसाधनानि कानि वा ज्ञानप्रतिबन्धकानीति प्रश्नार्थः ॥ १६ ॥

विद्या तत्त्वमस्यादिवाक्यजं ज्ञानं भगवद्विषयिणी उपासना च तया हीनो यः स तमोध्वस्तस्तमसा स्वरूपान्निर्विषयानन्दमात्रात् च्युतः भगवद्भक्तिरसात् पराङ्मुखश्च ॥ १७ ॥

विद्यया तमोविरोधिन्या त्रियुगं त्रीणि युगलानि धर्मादिषडैश्वर्याणि भगशब्दवाच्यानि यस्मिन् यद्वा त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः भगवान्मुकुन्दः कर्तारं विश्वस्य निमित्तकारणम् । अकृतं कर्मभिरसाध्यं नित्यसिद्धत्वात् भूतानां वियदादीनां प्रभवमुत्पत्तिस्थानमप्ययो लयस्थानं सर्वस्योपादानभूतमित्यर्थः ॥ १८ ॥

धृतराष्ट्र उवाच ।

गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
मायां त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ १९ ॥

सञ्जय उवाच ।

मायां न सेवे भद्रं ते नाधर्मपथमाचरे ।
शुद्धं भावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥२०॥

धृतराष्ट्र उवाच ।

दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आसीनः सञ्जयस्तात शरणं गच्छ केशवम् ॥ २१ ॥

दुर्योधन उवाच ।

भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ २२ ॥

भक्तिः आराध्यत्वेन ज्ञानं तच्च कीदृशम् ॥ १९ ॥

मायां परवञ्चनरूपां यद्वा पुत्रकलत्राद्याकारेण परिणतामविद्यां न सेवे पुत्रादिषु ममत्वमेव भगवदर्पणं विना न चरामि शुद्धभावमनसः कामक्रोधादिराहित्येन नैर्मल्यं गतः प्राप्तः भक्त्या भगवदेकाराधनेन शास्त्रात् वेदात्रिकाण्डलक्षणादागमादर्च्यत्वेन ध्येयत्वेन ज्ञेयत्वेन च जगल्लयाधिष्ठानं सर्वोत्तमब्रह्मादिजनप्रार्थनायोग्यं भगवन्तं वेद्मि तत्प्रसादलब्धज्ञानेन जानामि

मायासेवी वृथाधर्मा कामक्रोधादिभाङ्नरः ।
भगवन्तं न जानातीत्यब्रवीत्सञ्जयः स्फुटम् ॥ १ ॥
पुत्रादिममताशून्यो भगवद्धर्मतत्परः ।
कामादिवर्जितो धीरो वेत्ति कृष्णमधोक्षजम् ॥ २ ॥
भगवद्भक्तिहीनानां तज्ज्ञानोज्झितचेतसाम् ।
न शान्तिर्न सुखं न स्यात्कीर्तिः पुंसां गतिः कुतः ॥ ३ ॥
अतः सर्वं परित्यज्य जगज्जालं विनश्वरम् ।
कृष्णमेवाश्रयेद्धीमान् पुमर्थार्थी निरन्तरम् ॥ ४ ॥

येषां स्यादासुरो भावो न तेषामुपदेशतः ।
कृष्णे भक्तिसमुत्पत्तिरित्याह भगवान्मुनिः ॥ ५ ॥—॥२०॥२१॥

अर्जुने विशुद्धे कामक्रोधादिमलशून्ये सख्यं वदन् भगवानस्ति अद्य कामाद्याक्रान्तादिदशायां नाहं गच्छे नाप्नुयाम् आसुरो भावो न मया त्यक्तुं शक्योऽतो न मे तत्प्राप्तिसम्भावनापीत्यर्थः ॥ २२ ॥

धृतराष्ट्र उवाच ।

अवाग् गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ २३ ॥

गान्धार्युवाच ।

ऐश्वर्यकामदुष्टात्मन् वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ २४ ॥
वर्धयन् दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ २५ ॥

व्यास उवाच ।

प्रियोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥२६॥
जानात्येष हृषीकेशं पुराणं यच्च वै नरम् ।
शुश्रूषमाणमैकाग्र्यं मोक्ष्यते महतो भयात् ॥ २७ ॥

अवाक् अधो नरकमित्यर्थः श्रेयसां साधूनां वचनातिगः उपदेशावमानी ॥ २३ ॥

ऐकाग्र्यं शुश्रूषमाणं सेवमानं त्वां मोक्ष्यते मोचयिष्यति ॥२४—२७॥

वैचित्रवीर्य पुरुषाः क्रोधहर्षसमावृताः ।
सिता बहुविधैः पाशैर्न तुष्टाः स्वकैर्धनैः ॥ २८ ॥
यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धैर्नीयमानाः स्वकर्मभिः ॥ २९ ॥

एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ ३० ॥

धृतराष्ट्र उवाच ।

अङ्ग सञ्जय मे शंस पन्थानमकुतो भयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम् ॥ ३१ ॥

सञ्जय उवाच ।

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥३२॥

सिता बद्धाः पाशैः कामादिभिः ॥ २८ ॥

अन्धो नेता येषां ते अन्धनेत्राः ॥ २९ ॥

एष ज्ञानमार्गः एकायनः एकस्य ब्रह्मणः प्रापकः तं दृष्ट्वा तं मार्गं ज्ञात्वा मृत्युं संसारमत्येति अतिक्रम्य गच्छति अभ्येतीति पाठे आत्मत्वेन मृत्युरप्येनं प्रविशतीत्यर्थः तथा च श्रुतिः । तस्य ह न देवाश्च न भूत्या ईशत आत्मा ह्येषां स भवतीति । देवाश्च न वा अपि तत्र संसारे महान् न शक्तो भवति ॥ ३० ॥

सिद्धिं मोक्षम् ॥ ३१ ॥

अकृतात्मा अजितमनाः कृतात्मानमित्यसिद्धं प्रत्यगात्मानमात्मनः स्वस्य इन्द्रियनिग्रहादन्यत्र इन्द्रियनिग्रहं विना क्रियादिरूप उपायः प्राप्त्युपायो नास्ति ॥ ३२ ॥

इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ ३३ ॥
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ॥ ३४ ॥
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥३५॥

मात्रविवक्षायां व्यभिचारात्प्रतिबद्धकार्यविवक्षायां परस्पराश्रयादिदोषप्रसङ्गादिति द्रष्टव्यम् । ननु सिद्धान्ते उत्तेजकाभावविशिष्टमणित्वादिरूपेण सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वं वाच्यम् । तथाच तव मते यदुत्तेजकं तदेव ममापीत्याशङ्क्य स्वाभिमतलक्षणं दर्शयति परस्यानिष्टं दर्शयितुम् । किन्तु सामग्र्यामिति । सामग्र्यनन्तरकालीनो यः कार्यानुत्पादः तद्व्यतिरेकव्याप्यव्यतिरेकप्रतियोगी यो ऽभावः तत्प्रतियोगित्वमुत्तेजकत्वमित्यर्थः । तादृशव्यतिरेकप्रतियोगित्वमुत्तेजकाभावानां तत्तदभावत्वेनेति नानुगतरूपापेक्षा । न चैकोत्तेजकसंयोगे ऽपि प्रतिबन्धकान्तरे सति कार्यादर्शनान्न कार्यव्याप्याभावप्रतियोगित्वं तदुत्तेजकाभावस्येति तत्प्रतियोगिनस्तस्योत्तेजकत्वं तत्र न स्यादिति वाच्यम् । क्वचित्कदाचित्किञ्चिदुत्तेजकमित्यङ्गीकारेण तादृशस्थले तस्योत्तेजकत्वाभावस्येष्टत्वात् । अत्र चाभावपदेनोक्तकार्यानुत्पादप्रयोजकप्रतिबन्धकप्रतियोगिभूततदभावे ऽतिव्याप्तिर्निरस्ता । लक्षणान्तरमाह । यदभावेति । मण्यादेः कार्यानुत्पादकता यदभावविशिष्टप्रयुक्ता तदभावप्रतियोगित्वमुत्तेजकत्वमित्यर्थः । प्रथमलक्षणाङ्गीकारे प्रतिबन्धकाभावकारणताहानिः तत्कारणत्वे कार्यानुत्पादस्य सामग्र्यनन्तरकालीनत्वानुपपत्तिरित्याह । आद्य इति । तर्हि सत्यां सामग्र्यामिति विशेषणं त्यज्यत इत्याशङ्क्य तदभावे कारणमात्रे ऽतिव्याप्तिरित्याह । सामग्रीति । द्वितीयलक्षणाङ्गीकारे तदभावकारणताग्रहे कारणीभूताभावप्रतियोगितया मण्यादेः प्रतिबन्धकत्वग्रहः तद्ग्रहे च तद्विशेषणीभूताभावप्रतियोगितयोत्तेजकत्वग्रह-